Title : Veda Vipasha ( वेदविपाशा )

**UGC Care List ID : 101000042**

Vol. : : 09

Year : 2022

ISSN : 2348-7828

Price : 350/-



Copy : 100

**Printed and Published by :**

Prof. L.N. Pandey, Director

Central Sanskrit University, Vedavyas Campus, Balahar,

Himachal Pradesh-177108

**Editor :** Prof. P.V.B. Subrahmanyam

**Email :** pub.vvc@gmail.com

**Website :** http://www.rsksbalahar.ac.in

**Fax/Phone :** 01970-245409

**Printed at :** Abhi Printers,

F-19A, Focal Point Ext. Jalandhar-144103.

09465238137 (M)

**Composed and Designed By :**

**Ajay Sharma for Abhi Printers.**



## असंख्यातास्संहस्राणि स्मर्यते न च दृश्यते

The number of universes is unknown to humans even he stands at the helm of the Science. The quest to know them is on and still on. Vedic hymns too indicate that the number is countless thousands and they are not visible but remembered. Remembered on different occasions or Time reminds their innumerability or vastness of this Brahmanda. Brahmanda contains all these universes!

As of now, peers fix the validity of any statement or result of any endeavour. Their review matters the most. But one section feels it as the end of the thought process. According to it, peers can not recognise anything which is not available in their stream. An invention of discovery undoubtedly brings out a new thing which was not discussed earlier. In that situation, the reviewer may not subscribe to that thought. Hence, an individual and independent thought process limits itself in an attempt to get reviewed. It Sounds logical!

Now a days a new trend is roams around, the IKS. It is nothing other than the Vedic knowledge system but the developed perception at some levels makes the differentiation. Now an attempt is being made to use the IKS's views and findings in the modern knowledge so that the same may be more useful to the materialistic human life. Undoubtedly it threatens the VKS to some extent. Thrust of Knowledge in VKS fulfils both materialistic and afterlife demands and that knowledge is not limited to present birth only. Undoubtedly it breadth and width are beyond the imagination. It is the strength of that VKS.

Instances of every area of knowledge are available in VKS. It simply denotes the uniqueness and oneness of knowledge and it pressurises the need of inter and intra disciplinary research. But to reach that extent one must have general knowledge of all or, at least, majority areas to conclude himself to a convincible point in his endeavour.

Vedavipasha strives to bring different areas of knowledge to one place to sensitize the need of unlimited thought process while achieving the seventh position of the mind which makes the researcher master of his area. Filling the subconscious mind with hymns in the initial stage of education is an attempt to influence the thought process with unlimited exposure to the knowledge. Going back to the same will bring the new strengths to the frontline.



ISSN 2348-7828

# विषय-सूची

ISSN 2348-7828

# भागवतवैभवं श्रीभट्टनाथ-भक्ताङ्घ्रिरेणुदिव्यसूर्योर्दिव्यचरितञ्च

डॉ. बी. केशवप्रपन्न पाण्डे

**विष्णोरव्याजकरुणालब्धभक्तिविरक्तिषु ।**
**चेतनोज्जीवनार्थेषु प्रणामो दिव्यसूरिषु[1] ।।**

ज्ञानबलैश्वर्यवीर्यशक्तितेजस्सौशील्यमार्दवार्जवाद्यसंख्येयकल्याणगुणगणो, भगवान् श्रिय:पतिरवाप्तसमस्तकामो, जगज्जन्मादिकारणं, परात्पर:, परमपुरुष:, परब्रह्माभिधान: परमकृपालु: चेतनानाम् उज्जीवनाय जातकरुणया नैकान् उपायान् चिन्तयति । अत: स्वयं बहुभि: स्वीयावतारै: संसारसागरे निमग्नान् जीवान् उद्धर्तुं प्रयत्नं करोति नाम । परमन्ततो गत्वा निजप्रयत्नेऽसफलो दृश्यते, यतोहि अज्ञानिनो जना: तस्यातिमानुषवैभवै: तं विजातीयं मन्वते। अत एव तदीयरामकृष्णाद्यवतारेषु तदनुष्ठानादिमाध्यमेनोपदिष्टानि सद्वचांस्यपि उपेक्षन्ते। स्वयं गीतायां गीताचार्य: स्वशोकं प्रकटयति यथा-

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितीम् ।**
**परं भावामजानन्तो मम भूतमहेश्वरम्[2] ।।** इति

परं दयैकसिन्धु: भगवान् नारायण: पौन:पुन्येन शब्दादिभोगविषये निरतान् जीवान् सन्मार्गं प्रत्यानेतुं प्रयतते नाम । अत: यदा तदा मार्गान्तरमपि आश्रयते इह । यथा कस्मिंश्चिद् गर्ते पतित: गज: अन्येन सजातीयेन गजेन बहि: आनीयते, तथैव भगवान् संसारगर्ते पतितान् एतान् चेतनान् उद्धारयितुं सजातीयान् नित्यसूरिण: अत्र अवतारयति । त एव नित्यसूरिणोऽत्र शठकोपादिरूपेण दिव्यसूरिण इति प्रसिद्धिं भजन्ते। तेषामेव माध्यमेन च जीवान् मोक्षं प्रति अग्रेसरान् करोति, तेन च स्वयं नितराम् आनन्दितश्च भवति ।

**पुराणेषु दिव्यसूरीणां दिव्यावतरणकथनम् -**

**कलिस्साधुरिति प्रोक्तो वेदव्यासेन धीमता।**
**कृतादिषु प्रजा राजन् कलाविच्छन्ति संभवम्।।**
**कलौ खलु भविष्यन्ति नारायणपरायणा:।**
**ताम्रपर्णी प्रतीची च कृतमाला पयस्विनी।।**
**कावेरी च महानद्यस्तासां तीरेषु योगिन:।**
**भविष्यन्ति कले: काले द्रामिड्या भाषया स्वयम्।।**
**वेदार्थविशदीकारं करिष्यन्तीति शुश्रुम:।**
**महाभागवता लोके द्रमिडेषु भूरिश:।।**
**परमैकान्तिनो विष्णो: पार्षदा: कृतदेहिन:।**
**भविष्यन्ति कलौ प्राप्ते इति व्याससुतोऽब्रवीत्[3] ।।**

इत्येभि: पुराणस्मृतिपाञ्चरात्रसंहितादिवचनै: भगवतो नित्यसूरिपदभाजानाम् अनादिकालसंसारसागरनिमग्नजीवानाम् उद्धरणाय शठकोपादिदिव्यसूरीणाम् अवतारादिविशेषा वर्णिता:। तादृशानां भगवत: कृपया तत्सन्तीर्णमायानां साक्षात्कृतयथावस्थितज्ञानानां तत्त्वहितपुरुषार्थपराणां सदा भगवत्पारतन्त्र्यसुखैकरसिकानां नित्यं तद्गुणामृतसिन्धुनिमग्नानां करुणैकहृदयानां कृपया परया चेतनोज्जीवन-पराणां भगवद्गुणानुभवपरीवाहरूपाणां चतुस्सहस्रदिव्यप्रबन्धरचयितानां वैष्णवकुलधनानां महनीयानामनितरसाधारणवैभवमधोनिर्दिष्टेन पद्येन दृश्यते यथा -

**आह्लादशीतनेत्राम्बु: पुलकीकृतगात्रवान्।**
**सदा परगुणाविष्टो द्रष्टव्य: सर्वदेहिभि:[4] ।।**

सदा भगवद्गुणानुभवजनितप्रीतिपरवशा: शीतलतरानान्दबाष्पैरजस्रं पुलकितगात्रा: भागवतोत्तमा: सदा स्वीयपारलौकिकमैहिकञ्च हितमिच्छद्भि: सर्वैरपि देहिभि: ज्ञानिभिरज्ञानिभिश्च भक्त्या द्रष्टव्या इत्याशया: पूर्वाचार्यै: प्रकटीकृता:। अत्र सदा दर्शनविषयत्वमेतेषां दिव्यसूरीणामेवाभिप्रेतमिति ऐक्यकण्ठेन सर्वेऽपि पूर्वाचार्या उद्घोषयन्ति। तत्र यथा भगवतो नारायणस्यावतारेषु दशानामवताराणां महत्प्राधान्यं तथैवाचार्यावतारेषु प्रधानतमानां दशानां भूताह्वयादिदिव्यसूरीणां दिव्यावतारा विराजन्ते। तथाख्यातवैभवेषु दिव्यसूरिष्वन्यतमयो: ख्यातातिमानुषवैभवयो: विष्णुचित्तश्रीभक्ताङ्घ्रिरेणुदिव्यसूर्यो: वैभवान्यत्र किञ्चिदिवास्वाद्यन्ते।

**विष्णुचित्तसूरिवैभम् -**

**गुरुमुखमनधीत्य प्राह वेदानशेषान्**
**नरपतिपरिक्लृप्तं शुल्कमादातुकाम:।**
**श्वशुरममरवन्द्यं रङ्गनाथस्य साक्षाद्**
**द्विजकुलतिलकं तं विष्णुचित्तं नमामि[5] ।।**

तत्र भगवत: आज्ञां पुरस्कृत्य संसारिणाम् उद्धरणाय अवतीर्णेषु दिव्यसूरिषु ''पेरियाळ्वा'' इति नाम्ना प्रसिद्ध: विष्णुचितदिव्यसूरि: श्रीवैष्णवसम्प्रदाये अनितरसाधारणं स्थानं भजते। दिव्यसूरिरयं पाण्ड्यदेशान्तर्गते रम्ये श्रीधन्विपुरे ( श्रीविल्लिपुत्तू 'मध्ये ) भगवद्वाहनांशेन अवततार। क्रोधनाब्दे, मिथुनराशौ, शुभे स्वातिनक्षत्रे च अवतीर्ण: अयं सूरि: स्वजन्मना लोकमिमं धन्यं चकार । क्रमेण पितृभ्यां तत्तत्संसकारै: सुसंस्कृत: महात्मा विष्णुचित्त: बाल्यात्प्रभृति एव भगवत: पादारविन्दयो: महान् भक्तिमान् आसीत् । सदा भगवन्तमेव चित्ते ध्यायति स्म अत: विष्णुचित्त इति तस्याभिधानमपि अन्वर्थं मन्यते। कृष्णावतारे भगवन्तं कृष्णं सन्तोषयितुं मालाकारेण कृतं पुष्पकैङ्कर्यं, तेन च भगवत: मुखोल्लासं परिज्ञाय तदेव कैङ्कर्यं भगवत: प्रीतिकरं स्यादिति मत्वा वटपत्रशायिन: सन्निधौ तदेव कैङ्कर्यं नित्यं करोति स्म। एवम् आनन्देन भगवत्कैङ्कर्यमेव कुर्वाण: जीवनं यापयति स्म।

एकदा पाण्ड्यदेशस्य राजा वल्लभदेव: वेदतत्त्वं परिज्ञातुं एकां पण्डितसभां आयोजयामास। विजेत्रे सशुल्कं बहुमानमपि कल्पयति

स्म। तदर्थं भगवान् वटपत्रशायी विष्णुचित्तसूरिणः स्वप्ने प्रकटितः भवति, राज्ञा आयोजितायां विद्वत्सभायां गन्तुं आज्ञां च ददाति । परन्तु विष्णुचित्तसूरिः स्वस्य शास्त्रेषु अनभिज्ञतां ज्ञापयति। तच्छ्रुत्वा भगवान् तं सर्वशास्त्रज्ञं करोति। तदनु भगवतः आज्ञां शिरोधार्यां कृत्वा प्रसन्नहृदयः स मुनिः शास्त्रचर्चार्थं राजसभां गच्छति । राजसभां प्रति आगतं विष्णुचित्तं राजा सविनयं उपचरति। अत्रान्तरे च तत्र वेदप्रतिपाद्यतां निरूपयितुं शास्त्रचर्चा आरभते। क्रमेण सर्वेषां उपन्यासान् श्रुत्वा अन्तिमे भगवत्कृपाप्रसादलब्धः विष्णुचित्तसूरिः वेदे प्रतिपादितं तत्त्वं एकैकं स्पष्टं निरूपयति। यथा –

**नारायणपरं ब्रह्म तत्त्वं नारायणः परः।**
**नारायण परोज्योतिरात्मा नारायणः परः[6]।**
**स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमः स्वराट्[7]।**

इत्यादिना भगवान् श्रीमन्नारायण एव वेदप्रतिपाद्यः इति सम्यग् निरूपयामास। अहो आश्चर्यं! निरूपणानन्तरमेव नरपतिपरिर्ज्ञि शुल्कं तस्य पुरतः पतति, तद् दृष्ट्वा तत्र उपस्थिताः सर्वेऽपि सभासदः आश्चर्यान्विता भूत्वा तं जातश्रद्धया नमन्ति। राजापि झटति स्वासनादुत्थाय सहर्षं सप्रश्रयं तमभिनन्द्य भूरिपारितोषिकैः सम्मानयति। ततो जनानां पुरतः पुनः सम्मानयितुकामः स राजा वल्लभदेवः तं भक्तशिरोमणिं गजाधिरूढं कृत्वा राजवीथ्यां नगरभ्रमणार्थं नयति, तत्र च भट्टानाम् अर्थात् वेदान्ततत्त्वज्ञानां विदुषां अयं नाथः अतः अद्यप्रभृति भट्टनाथः इति नाम्ना ख्यातिं भजेद् इत्युक्त्वा तत् गौरवास्पदं नाम विदधे। तदा भगवान् नारायणोऽपि स्वभक्तमणिं साक्षात् कटाक्षयितुकामः आकाशे श्रिया सह प्रकटितोऽभवत्। देव्या श्रिया सह समायातं गरुडाधिरूढं भगवन्तं नारायणं विलोक्य स सूरिः आनन्दसागरे निमग्नोऽभवत्। भगवतः निर्हेतुककरुणां स्मारं स्मारं असकृत् प्रणमति च। स्वपुरतो भगवन्तं विद्यमानमपि इतरभक्तवत् स्वस्मै परमपुरुषार्थं मोक्षमपि न प्रार्थयामास। अपि तु तस्मिन् समये आत्मानं मातृवद् विभाव्य स्तौति। हे भगवन्! कलिकलुषेऽस्मिन् लोके मद्विलोकनाय आगतस्य तव को वा अनर्थः समापतेद् इति शङ्कितः ''शतञ्जीव'' इति दिव्यगाथया सपरिकरस्य भगवतो नारायणस्य मङ्गलाशाशनं करोति। तादृशं मङ्गलाशाशनमेव द्वादशगाथापरिमितः ''तिरुप्पळ्ळाण्डु'' नाम्ना प्रसिद्धः दिव्यप्रबन्धोऽभवत्।

भट्टनाथसूरीणाम् अनेन दिव्यवृत्तान्तेन ज्ञायते यत् निस्स्वार्थभावनया क्रियमाणं भगवत्कैङ्कर्यमेव अस्माकं स्वरूपं भवति। तेन च भगवन्मुखोल्लास एव जीवानां मुख्यं लक्ष्यं भवेत् इति सारः।

**श्रीभक्ताङ्घ्रिरेणुसूरिवैभवम् –**

**चोलक्षितौ धनुषि मासि महेन्द्रतारे**
**यः प्रादुरास मुरजिद्वनमालिकांशः।**
**रङ्गेशकेलिसखमूर्ध्वशिखं द्विजेन्द्रं**
**भक्ताङ्घ्रिरेणुमनघात्मगुणं प्रपद्ये[8]।।**

अथ भगवान् भक्ताङ्घ्रिरेणुः चोळमण्डळे, तिरुमण्डङ्गुडिनामके ग्रामे, प्रभवनाम्नि संवत्सरे, ज्येष्ठाख्यायां तारकायाञ्च, भगवतो नारायणस्य वैजयन्त्याः अंशभूतः, धरायामस्यां विप्रनारायणनाम्ना विप्रोत्तमकुले अवततार। भगवतः निर्हेतुककटाक्षवीक्षणेन बाल्यादेव भक्तिज्ञानवैराग्ययुत आसीत्। सूरिरयं यथाकालं यथाविधि पित्रा चौळोपनयनाभ्यां सुसंस्कृतः, तत अचिरादेव स्वकुशाग्र्यबुद्ध्या निखिलवेदवेदाङ्गपारङ्गतो बभूव। महात्मायं भगवति श्रीमन्नारायणदिव्यचरणारविन्दयोरेव सदा अनुरक्तो भवति, तदितराणि सर्वाणि वस्तूनि तृणाय मन्यते, अतः प्राप्तयौवनोऽपि नोद्वाहं चकार। कदाचित् श्रीरङ्गं प्रस्थाय तत्र मन्दिरोर्ध्वभागस्थं प्रणवाख्यं विमानं संसेव्य, ततो भगवतो रङ्गनाथस्य दिव्यमङ्गळविग्रहञ्च महदानन्देन द्रवितहृदयः सेवते। तदा तस्य सौशील्यादिगुणैराकृष्टः, तदा प्रभृति तत्रैव श्रीरङ्गे नित्यवासं कुर्वन् सुखम् आस्ते। मुनिरयमपि पुरा भगवतः कृष्णावतारसमये मथुरायां भक्तशिरोणिना मालाकारेण भगवन्तं श्रीकृष्णं समाराधयितुं कृतं पुष्पमालाकैङ्कर्यं संस्मृत्य, ततः प्रभृति तदेव कैङ्कर्यं वरमिति निश्चित्य, एकं रम्यं नन्दवनञ्च निर्माय, नित्यं भगवते रङ्गनाथाय पुष्पामालार्पणं करोति स्म। समयान्तरेषु च भगवत असंख्येयकल्याणगुणगणांश्च अनुभवति स्म।

एवं स्थिते कदाचिद् देवदेवी नाम्ना प्रसिद्धा काचित् वराङ्गना मुनेरस्य जीवने प्रवेशं करोति। सा कथञ्चित् परमवैराग्यसम्पन्नं विप्रनारायणं सवशं कर्तुं प्रयतते नाम। परं स तस्या उपरि दृष्टिम् अपातयन्, नित्यं भगवन्तमेवानुस्मरन् स्वकैङ्कर्यादिकं यथावत् निर्वर्तयति स्म अयं मुनिः। तदा सा देवदेवी कथञ्चिद् उपायान्तरेण छलेन वा तं वशीकर्तुकामा वैष्णवस्त्रीव वेषं धृत्वा, स्वयमपि तेन सह पुष्पकैङ्कर्ये नियोजयति स्म। तस्याः भगवत्प्रीतिं पुष्पकैङ्कर्ये च महतीं श्रद्धां दृष्ट्वा तत्सत्यमिति मन्यमानः, मुदितहृदयः स तां तदनुवर्तितुम् अनुमन्यते स्म। परं कालान्तरे तत्कृतच्छलेन हावभावेन च तद्वशीभूय, स्वीयवर्णाश्रमधर्मानपि शनैः शनैः जहाति। भगवत्कैङ्कर्यादिकं विस्मृत्य तस्या वराङ्गनायाः सौन्दर्यमेव समाराधयन्नास्त। एवमेव बहुकालम् अत्यवाहच्च।

परमेकदा कारुण्यरूपायाः लोकजनन्याः श्रियः प्रार्थनया, भगवान् रङ्गनाथः स्वपूर्वभक्तस्य दयनीयां स्थितिं दृष्ट्वां, तमनुग्रहीतुकामः, तस्माद् भ्रष्टपथाद् उद्धृत्य पुनः स्वसेवायां नियोज्य अनुगृह्णाति स्म । विप्रनारायणस्तु स्वाज्ञानतायाः पराकाष्ठां स्मारं स्मारं भृशं परितप्य, ततः प्रायश्चित्तरूपेण भगवद्भक्तपादोदकं निषेव्य निष्कल्मषो बभूव । ग्रामकुलादिप्रयुक्तं विप्रनारायण इति नाम सन्त्यज्य ततः प्रभृति ''भक्ताङ्घ्रिरेणुः'' इति अन्वर्थनाम्ना प्रसिद्धश्च अभवत् । उक्तञ्च प्रायश्चित्तरुपेण भगवद्भक्तपादोदकनिषेवणं शिरसि तदीयाङ्घ्रिरजोधारणञ्च यथा –

**''एतत्समस्तपापानां प्रायश्चित्तं मनीषिभिः।**
**निर्णीतं भगवद्भक्तपादोदकनिषेवणम्''[9]।।**

**''यस्य मूर्ध्नि स्थितं यावद्वैष्णवाङ्घ्रिरजश्शुभम्।**
**गङ्गादिसर्वतीर्थानि तावत्तिष्ठन्त्यसंशयम्''**[10]।। इति

अत्र यद्यपीयमाशङ्का समुदियात् यत् एतादृशहीनविषयासक्तस्य वर्णाश्रमविरुद्धाचारशीलस्य विप्रनारायणस्य कथमर्चारूपेण प्रतिष्ठापानम्,कथञ्चालयेषु तत्पूजनप्रवर्तनम् इति । तथापि भगवत्संश्रयणभागवतचरणारविन्दरजसंसेवनाच्च न काप्यनुपपत्तिरिति शास्त्रवचनानीह प्रमाणानि –

**''दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा।**
**समाश्रयेदादिदेवं श्रद्धया शरणं यदि।**
**निर्दोषं विद्धिं तं जन्तुं प्रभावात्परमात्मनः''**[11]।।

अस्मिन् पुराणवचने 'पुरा' इति पदं दृष्टिगोचरं तदपि भगवान् नारायणः स्वीकीयकृष्णावतारे परिहृत्या स्पष्टीकृतं यत् वर्तमाने सुदुराचारोऽपि सन् यदि स मामनन्यमनसा भजते स महात्मभिः सधुरेव मन्तव्य इति । यथा –

**अपि चेत्सदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यसितो हि सः**[12]।। इति

पूजाविषये तु इतोपि स्पष्टतया भगवानेवाह सहैव श्रुतेरपि वचनं प्रसिद्धं यथा–

**भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्तते।**
**तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम्**[13]।।
**यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः**[14]।।

इत्यत्र तु अष्टविधभक्तिसंपन्नस्य भगवद्भक्तम्लेच्छेस्यापि सक्षाद्भगवत्सदृशतया पूज्यत्वं ग्राह्यत्वं महिमादिकञ्च प्रतिपादितमिति सर्वं समञ्जसमिह। अन्ततो महात्माऽयं ''तिरुमाळै'' ''तिरुप्पळ्ळियेळुच्चि'' इति सकलतत्त्वार्थबोधकं अप्रतिमदिव्य–प्रबन्धद्वयं सकलचेतनानाम् उज्जीवनाय अनुजग्राह।

इति शम्

## सन्दर्भसूची

1. दि.सू.च. पृ.सं- 1
2. भगवद्गी. 9/11
3. भारते हरिवंशे दक्षिणद्वारकामाहात्म्ये एकोनषष्टितमे अध्याये गोभिलं प्रति नारदस्य वचनानि
4. श्रीमद्वरवरमुनिकृतप्रमाणसङ्ग्रहे पृ.सं- 32
5. तिरुप्पळ्ळाण्डु-01
6. विष्णुसू-3
7. विष्णुसू-13
8. दि.सू.च. पृ.सं-55
9. दि.सू.च. पृ.सं-63
10. दि.सू.च. पृ.सं-63
11. प्रमाणस-पृ.सं-465
12. प्रमाणस-पृ.सं 444
13. प्रपन्नपारिजातके 37
14. श्वेताश्वरोपनिषदि -6/21

## परिशीलितग्रन्थसूची


1. गुरुपरम्पराप्रभावः
   पिळ्ळैलोकजीयर्स्वामिभिरनुगृहीतम्
   श्रीमदण्णङ्गराचार्यकृतव्याख्यानसहितञ्च
   काञ्चीपुरम् ग्रन्थमाला - 1975
2. दिव्यसूरिचरितम्
   वेङ्कटाचार्यविरचितम्
   प्रथम संस्करणम्,मैसुर1969
3. श्रीमद्भगवद्गीता
   भगवद्रामानुजकृतभाष्यसहिता, प्र-संस्करणम्-1972
   प्रकाशनम्-M.L.M Printers, Kodambakkam
   Chennai- 024 (1972)
4. श्रीमद्वरवरमुनिकृतप्रमाणसङ्ग्रहः
   श्रीमदण्णङ्गराचार्यसंपादितो मुद्रितश्च
   प्रथम संस्करणम्-1975
   काञ्चीपुरम्, ग्रन्थमाला 1675

ISSN 2348-7828

# असंलक्ष्यक्रमध्वनेः वैशिष्ट्यम्

डॉ. वी. बालाजी

''अदोषौ शब्दार्थौ काव्यम्'' इति काव्यस्य सामान्यलक्षणं सर्वसंमतं भवति। कौ तौ शब्दार्थौ इत्याकाङ्क्षायां, तदुक्तं काव्यप्रकाशे –

**''स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा[1]''**

तत्र वाचक, लक्षक, व्यञ्जक इति शब्दत्रयं भवति। तदाधारीकृत्य वाच्य, लक्ष्य, व्यङ्ग्य इति अर्थत्रयमपि भवति। तेषु व्यङ्ग्यार्थाः उक्तार्थत्रयादाविर्भवति। अर्थात् सर्वेषामप्यर्थानां व्यञ्जकत्वं सम्भवति। तदप्युक्तं तत्रैव –

**''सर्वेषां प्रायशोर्थानां व्यञ्जकत्वमपीष्यते[2]''**

इति। ततः परं उत्तम, मध्यम, अधम नाम्ना काव्यभेदाः कृताः। तेषु उत्तमकाव्यस्य लक्षणम् एवमुक्तं –

**''इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्यात् ध्वनिः इति बुधैः कथितः[3]''**

इति। अर्थस्तु–यस्मिन् काव्ये वाच्यात् व्यङ्ग्यप्राधान्यं वरीवर्ति, तत्काव्यम् उत्तमकाव्यमिति। एवं अयमेव विषयःपूर्वमेव ध्वन्यालोके च–

**''यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतः स्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।[4]''**

इत्युक्तं भवति। ततः परं ध्वनेः विभागः कृतः, अविवक्षितवाच्यः, विवक्षितान्यपरवाच्यः इति। ततः परं तयोः अवान्तरभेदाः कृताः। तेषु भेदेषु केषाञ्चन भादानां लक्षणं सोदाहरणं निरूपितं भवति। तेष्वुदाहरणेषु नाटकीयश्लोकाः उद्धृताः भवन्ति। तेषां विषये किञ्चित् पश्यामः।

तत्र ध्वन्यालोके तृतीये उद्योते असंलक्ष्यक्रमध्वनेः वस्तुद्वारा पारम्पर्येण व्यञ्जकान् वदति –

**''सुप्-तिङ्-वचन-संबन्धैः तथा कारकशक्तिभिः।**
**कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्।।[5]''**

अयं भावः–

तत्र सुपः स्वौजसादयः एकविंशतिः, तिङः तिप्तस्झिप्रभृतयः अष्टादश, वचनान्येकवचनप्रमुखानि त्रीणि, सम्बन्धाः स्वस्वामिभावादयः षष्ठ्यर्थाः, तैस्तथा कारकशक्तिभिः कर्तृत्वादिभिः षड्भिः, कृतः – कर्तृकर्मभावादिषु विहिताः धातोः प्रातिपदिकत्वसम्पादकाः प्रत्ययाः, तद्धितस्त्वलादयः, समासाः अव्ययीभावादयः षड्विधाः, चकारात् निपाताः, अद्रव्यार्थाश्चादयः,उपसर्गाः क्रियायुक्ताः प्रादयः, कालाः भूतादयः, आदि शब्दात् प्रकृतयः सर्वनामानि, इत्येतैः क्वचित् अलक्ष्यप्रमव्यङ्ग्यः रसादिध्वनिः द्योत्यो भवति इत्यर्थः।।

इदानीं तेषां सुबादीनां व्यञ्जकत्वं श्लोकेन अनेन उच्यते। हनूमन्नाटके लङ्कायां रामविक्रमेण निर्विण्णस्य रावणस्योक्तिरूपमिदं पद्यं –

**''न्यक्कारो ह्ययमेव मे यदरयः तत्राप्यसौ तापसः**
**सोप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।**
**धिग्धिक्छत्रजितं प्रबोधितवता किं कुम्भकर्णेन वा**
**स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः।।[6]''**

**अस्यार्थः –**

प्रथमतस्तु निर्जिताखिललोकस्य मे अयमेव महाननादरः यत् मे शत्रवः सन्ति इति। तत्र अरयः इत्यनेन बहुसङ्ख्यकाः वानराः सन्ति इति आपाततोर्थः अपि तु एकः रामः तेन भयात् बहुधा दृष्टमिति कारणात् बहुवचनप्रयोगः, अतः बहुसङ्ख्यकाः द्विषः सन्ति मे अपरः न्यक्कारः। अरिष्वपि कश्चिद्धीरो भूपतिः स्यात् तत्प्रधानश्चेत् न तथा अनादरः स्यात्, किन्तु वनेचरः तपस्वी इति मे अपरः तिरस्कारः। सोऽपि दूरे काननादौ स्यात् चेत् न तथा परिभवः, किन्तु सः लङ्कायां मत्समक्षमेव तिष्ठति इति मे अन्यः अनादरः। सोऽपि अत्र केवलं तिष्ठति चेत् न तथा तिरस्कारः भवेत्, किन्तु मां विक्रमयति इति मे अपरः अपमानः। विक्रमेऽपि यदि सः एकं द्वौ वा राक्षसौ निहन्यात् न तथा परिभवः भवेत्, किन्तु राक्षसानां कुलमेव निश्शेषेण हन्तीति मे अन्यस्तिरस्कारः। तथाभूते सत्यपि राक्षसेन्द्रः रावणः जीवतीति महदाश्चर्यं भवति। रणमुखे शक्रमपि जित्वा प्राप्तख्यातिं मेघनादमपि धिक्काराः यो हि तापसमेकं जेतुं न अशकत्। महता प्रयत्नेनोत्थापितः कुम्भकर्णोऽपि न कस्मैचिदपि प्रयोजनाय अभवत्। अथवा किमन्येषां गर्हणैः फलं, विशालमपि स्वर्गं क्षुद्रग्रामवत् सर्वतो विधूननेन व्यर्थमेव स्फीतैः मे बाहुभिः किं फलं सञ्जातं यैः तापसमेकमपि नैव पराजितं भवति इति श्लोके भूयसा सर्वेषामप्येषां स्फुटमेव व्यञ्जकत्वम्। इतः परं क्रमशः व्यङ्ग्यं दर्शयति।

तत्र ''मे यदरयः'' इत्यनेन सुप्-संबन्धवचनानामभिव्यञ्जकत्वं भवति। तत्र ''मे'' इत्यत्र ङस् विभक्तिः सुप्, अरिभिः सह इति वध्यघातकभावसंबन्धः सूचितः। एवं ''अरयः'' इति बहुवचनं, एवकारश्च सम्भूय न्यक्कारान्तरासम्भवद्वारा स्वपराक्रमातिरेकं, त्रैलोक्याद्वितीयविक्रमेण स्वेन सह एकस्यऽपि वध्यघातकभावानौचित्यं किं पुनः बहूनाम् इति सूचयन्ति।

एवं ''तत्राप्यसौ तापसः'' तद्धितनिपातयोःव्यञ्जकत्वम्। तत्र तद्धितस्तापसशब्दे अण् प्रत्ययः, अपि शब्दो निपातः, एतौ च असौ इति सर्वनाम्नः उपलक्षणम्। ते च अतिविक्रान्तनृपतेः धीरस्य कथञ्चिदभ्युपगन्तव्यं, तपोमात्रसाधनस्य युद्धानभिज्ञस्य तया तदनौचित्यं, मानुष्येण भक्ष्यत्वं च व्यञ्जयन्ति।

एवं ''अत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः'' इत्यत्र ''निहन्ति'', ''जीवति'' इत्यत्र तिङ् निर्देशः कृतः, ''अत्र'' इति

अधिकरणत्वस्य, राक्षसकुलमिति कर्मत्वस्य च कारकशक्तेः व्यञ्जकत्वं संभवति। एतच्च एवकारस्य, ''नि'' इत्युपसर्गस्य जीवधातोः, ''अहो'' इत्यव्ययस्य, रावणपदस्य उपलक्षणं भवति। तथा च – मदनधिष्ठिते देशे यदि सः तिष्ठेत्, अत्र स्थितोऽपि यदि तूष्णीं भवेत्, अतूष्णीम्भवेऽपि राक्षसान् यदि न हन्यात्, कस्यचिदेकस्य हननेऽपि तत्कुलमामूलं यदि सम्प्रत्येव न विनाशयेत्, तथाभावेऽपि यदि त्रैलोक्याद्भुतविक्रमो रावणनामाहं प्राणान् न धारयेयं, तदैतत् कथञ्चन संघटेत। न तु तथा तदद्भुतमेवेदं मत्प्राख्यातशौर्यप्रतिकूलमखिलम् आपतितम् इत्यादयोर्थाः व्यञ्ज्यन्ते।

एवं ''धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा। स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिः भजैः'' इति श्लोकस्योत्तरार्धे कृत्तद्धितसमासोपसर्गाणां व्यञ्जकत्वं सङ्गच्छते। तत्र ''धिक् धिक्'' इत्यव्ययस्य, शक्रशब्दस्य,प्रबोधितः इत्यादौ प्रेरणार्थकणिचः उपयोगः कृतः, स्वर्गे ग्रामटिकात्वारोपस्य, ''भुजैः'' इति बहुवचनस्य च उपलक्षणं भवति। तथा हि – शक्नोत्यरीन् जेतुमिति व्युत्पत्या शक्रस्य दुर्जयत्वं, शक्रं जितवानिति शक्रजिदिति क्विपा तद्विजयस्य कृतपूर्वत्वं, तेन मेघनादस्य शौर्यप्रकर्षेण रामविजयसौकर्यं, तदनाचरणं धिक् धिक् इति वीप्सया तस्य गर्हणीयतमत्वं, णिचा, क्तवतुना ''प्र'' इत्युपसर्गेण च कुम्भकर्णजागरणे फलविशेषाशया बहुलाऽऽयासकरणं, प्रबोधस्य भूतकालकत्वेन सिद्धत्वं, तस्य सर्वथा त्यक्तनिद्रत्वं च द्योत्यते। ततः क्षुद्रतापसस्य झटिति विजेयत्वं, तदनुष्ठाने तत्सर्वनैष्फल्यम्, तेन निन्द्यतातिशयः व्यङ्ग्यः, स्वर्गे ग्रामटिकात्वारोपेण सुजयत्वं, ''वि'' उपसर्गेण लुण्ठनस्य व्यापकतामुखेन स्वर्गस्य स्थूनामात्रावशेषत्वं, बहुत्वेन, उच्छूनत्वेन च भुजानामेकतमेनापि सुकरस्य तज्जयस्य, एवं मिथः सहचरितैः बहुभिरप्यकरणात् वृथायुद्धकण्डूतिवहनाच्च व्यर्थत्वपुष्टत्वद्वारा वचनीयत्वप्रकर्षः समस्तवाक्येन कुत्सिताधिक्येन स्वक्रोधोद्भवौचित्यं, तेन रौद्ररसः, पुनर्युद्धोत्साहः, वीररसश्च व्यज्यते।

एवं पूर्वोक्तवत् अनेकबहुव्यञ्जकरसानुभवश्लोकाः काव्येषु उपलभ्यन्ते। परन्तु सूक्ष्मेक्षिकया एव श्लोके विद्यमान निगूढार्थानां अवगतिः सञ्जायते, अर्थात् व्यङ्ग्यार्थस्य ज्ञानं संप्राप्यते अनुभूयते च इति। सूक्ष्मेक्षिकावलोकनं तु न सामान्यस्य भवति, अत्रोक्तसामान्यपदं केवलशब्दार्थज्ञानविषययुक्तं द्योतयति। तदप्युक्तं ध्वन्यालोके –

**''शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।**
**वेद्यते स तु काव्यार्थतत्वज्ञैरेव केवलम्''।।**[7]

इति। तत्र व्यङ्ग्यार्थस्य वेदनं काव्यार्थतत्वज्ञविषयं भवति। तदर्थं सूक्ष्मेक्षिका आपेक्षते, तत्तावत् प्रज्ञानवनवोन्मेषशशालिनीरूपप्रतिभया एव सञ्जायते। तदप्युक्तं तत्रैव ''अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषं'' इति। अतः प्रथमम् आचार्येण श्लोके विद्यमानव्यङ्ग्यार्थाः अवगन्तव्याः, तदर्थं सः प्रतिभामपेक्षते। यदि सः प्रतिभां संपादयेत् (प्रतिभायुक्तः भवेत्),स्वीय प्रतिभया व्यङ्ग्यार्थानपि अवगमयति चेत्, तर्हि तेन व्यङ्ग्यार्थप्रदर्शकश्लोकाः पाठयितव्याः। तदा छात्रावगमने विघ्नाः सञ्जायन्ते। तेषु कक्ष्यायां द्वित्राः छात्राः पूर्वमेव साहित्ये प्रकरणग्रन्थान् संयक् पठित्वा भवन्ति चेत् तस्य किञ्चित् सुलभावगमनाय भवेत्, नास्ति चेत् सर्वछात्रावगमनाय आचार्येण प्रयत्नः विधेयः।

## पादटिप्पणी

1. का .प्र 1 उद्योतः।
2. का. प्र 1 उद्योतः ।
3. का. प्र 1 उद्योतः ।
4. ध्वनि 1 उद्योतः ।
5. ध्वनि 3 उद्योतः ।
6. हनुमन्नाटकम्
7. ध्वन्यालोकः 1 उद्योतः

**Department of Sanskrit, Dwaraka Doss Goverdhan Doss Vaishnav College**
**Arumbakkam, Chennai-106**

ISSN 2348-7828

# अनुबन्धपरिभाषा पञ्चतयी

डॉ. वैथी सुब्रमणियन्

पाणिनिः संस्कृतभाषायै व्याकरणं व्यरीरचत् अष्टाध्यायी नाम्ना ग्रन्थेन। तत्र शब्दनिष्पत्तये पाणिनिः शास्त्रकरणीभूताः उपदेशाः धातुप्रातिपदिकप्रत्ययादेशागमाः अनेके प्रोक्ताः। तेषु धातुप्रातिपदिकप्रत्ययादेशागमेषु तत्र तत्र अनुबन्धाः अर्थात् इत्संज्ञकाः इत्संज्ञकाः वर्णाः आसञ्जिताः पाणिनिना। आसञ्जितानां तेषाम् अनुबन्धानाम् आवश्यकता, तेषां सत्त्वे उपयोगः, प्रतिबन्धः, प्रतिबन्धे सति तत्परिहारः च कथमिति अत्र निबन्धे स्पष्टीभवति।

**विषयवस्तुपरिचयः–**

पाणिनिविरचितव्याकरणशास्त्रेऽस्मिन् पाणिनिना शास्त्रकरणीभूतेषु उपदेशेषु अनुबन्धाः अर्थात् इत्संज्ञकाः वर्णाः आसञ्जिताः। यथा धातौ –डुकृञ् इत्यत्र डु इत्यस्य ञकारस्य, प्रातिपदिके – नदट् इत्यत्र टकारस्य, प्रत्यये – अण् इत्यत्र णकारस्य, आदेशे – शी इत्यत्र शकारस्य, आगमे – नुट् इत्यत्र टकारस्य इत्संज्ञा भवति। इत्थम् उपदेशभूतेषु धातुप्रातिपदिकप्रत्ययादेशागमेषु इत्संज्ञकाः वर्णाः आसञ्जिताः, तान् इत्संज्ञकान् वर्णान् निमित्तीकृत्य अनेके विधयः प्रवर्तेरन्। एवञ्च शास्त्रकार्यनिर्वाहाय आसञ्जिताः एते इत्संज्ञकाः वर्णाः उपस्थापकस्य अवयवाः उत अनवयवाः इति संशयः जायते। 1. अनेकान्ताः अनुबन्धाः इति परिभाषया इत्संज्ञकानाम् उपस्थापकानवयवत्वं व्यवस्थाप्यते, 2. एकान्ताः अनुबन्धाः, इति परिभाषया इत्संज्ञकानाम् उपस्थापकावयवत्वं व्यवस्थाप्यते। आभ्यां परिभाषाभ्याम् इत्संज्ञकानाम् अनवयवत्वावयवत्वे व्यवस्थाप्य पक्षद्वयेऽपि दोषमुद्भाव्य अवयवत्वपक्षमेव सिद्धान्तीकृत्य तस्मिन् पक्षे दोषस्य न्यूनत्वेऽपि तेषां दोषाणां परिहाराय नानुबन्धकृतमनेकाल्त्वम्, नानबन्धकृतमनेजन्तत्वम्, नानुबन्धकृतमसारूप्यम् इति तिस्रः परिभाषाः आरब्धाः सन्ति। एतत्सर्वमत्र निरूप्यते।

**विषयवस्तुबिन्दवः –**

1. अनेकान्ताः अनुबन्धाः इति परिभाषार्थः।
   - 1.1. उपस्थापकस्य अनवयवत्वसाधनम्।
   - 1.2. अनवयवत्वसाधकव्यवहाराः त्रयः।
     - 1.2.1. प्रथमः व्यवहारः।
     - 1.2.2. द्वितीयः व्यवहारः।
     - 1.2.3. तृतीयः व्यवहारः।
   - 1.3. अनवयवत्वपक्षे प्रसक्ताः त्रयः दोषाः।
     - 1.3.1. प्रथमः दोषः।
     - 1.3.2. द्वितीयः दोषः।
     - 1.3.3. तृतीयः दोषः।
2. एकान्ताः अनुबन्धाः इति परिभाषार्थः।
   - 2.1. अनुबन्धानाम् अवयवत्वसिद्धिः।
   - 2.2. अनवयवत्वसाधकनिर्देशाः त्रयः।
     - 2.2.1. प्रथमः निर्देशः।
     - 2.2.2. द्वितीयः निर्देशः।
     - 2.2.3. तृतीयः निर्देशः।
3. अनवयवत्वपक्षदोषाणामत्र पक्षे अभावः।
4. अवयवत्वपक्षे प्रसक्ताः त्रयः दोषाः।
   - 4.1. प्रथमः दोषः।
   - 4.2. द्वितीयः दोषः।
   - 4.3. तृतीयः दोषः।
5. अवयवत्वपक्षे प्रसक्तदोषवारिकाः तिस्रः परिभाषाः।
   - 5.1. नानुबन्धकृतमनेकाल्त्वम्।
     - 5.1.1. परिभाषार्थः।
     - 5.1.2. परिभाषारम्भप्रयोजनम्।
     - 5.1.3. ज्ञापकम्।
     - 5.1.4. स्वांशे चारितार्थ्यम्
     - 5.1.4. अन्यत्रफलम्।
     - 5.1.5. इत्संज्ञायोग्यत्वमेवानुबन्धत्वम्।
     - 5.1.6. डाप्रभृतीनाम् वर्णप्रश्लेषेण सर्वादेशत्वम्।
   - 5.2. नानुबन्धकृतमनेजन्तत्वम्।
     - 5.2.1. परिभाषार्थः।
     - 5.2.2. परिभाषारम्भप्रयोजनम्।
     - 5.2.3. ज्ञापकं तत्चारितार्थ्यञ्च।
   - 5.3. नानुबन्धकृतमसारूप्यम्।
     - 5.3.1. परिभाषार्थः।
     - 5.3.2. परिभाषारम्भप्रयोजनम्।
     - 5.3.3. ज्ञापकम्।
     - 5.3.5. स्वांशे चारितार्थ्यम्।
     - 5.3.4. अन्यत्रफलम्।

**विषयवस्तु–**

1. अनेकान्ताः अनुबन्धाः इति परिभाषार्थः–

1.1. उपस्थापकानवयवत्वसाधनम्–

अनुबन्धाः अनवयवाः इति व्यवस्थाप्यते अनेकान्ताः अनुबन्धाः[1] इति परिभाषया । पाणिनेः व्यवहारात् इत्संज्ञकाः वर्णाः उपस्थापकस्य अनवयवाः इति प्रतीयन्ते। अत्र त्रिभिः पाणिनीयव्यवहारैः अनुबन्धानाम्

उपस्थाकानवयवत्वम् उपस्थाप्यते। अनुबन्धा: उपस्थापकस्य अनवयवा: उपस्थाप्ये तदर्थभूते विधेये लक्ष्ये अदर्शनात् अश्रवणात् इति अनेन हेतुना अनुबन्धानाम् उपस्थाकानवयवत्वं सिद्धम्। अत्र प्रश्न: समुदेति यत् अनुबन्धानाम् उपस्थाप्ये अदर्शनरूपेण हेतुना उपस्थापकानवयवत्वं कथं साधयितुं शक्यते इति। सूत्रेषु श्रूयमाण: शब्द: उपस्थापक: वाचक:, लक्ष्ये श्रुयमाण: उपस्थाप्य: वाच्य:। शब्दार्थयो: उपस्थापकोपस्थाप्ययो: वाच्यवाचकभाव: तादत्म्यम् इति संबन्धद्वयमपि अत्र शास्त्रे अङ्गीक्रियते। शब्दार्थयो: भेदे वाच्यवाचकभाव: इति संबन्ध:। शब्दार्थयो: अभेदे सति तादात्म्यम् इति। एवञ्च अस्मिन् तादात्म्याख्ये पक्षे उपस्थापकोपस्थाप्ययो: अभेदात् उपस्थाप्ये अनुपलम्भेन हेतुना उपस्थापकानवयवत्वं साधयितुं सुशकमेव। इत्थम् अनेन हेतुना अनुबन्धानाम् अनवयवत्वं साधितम्।

1.2. अनवयवत्वसाधकव्यवहारा: त्रय:-

1.2.1. प्रथम: व्यवहार:-

अधुना त्रिभि: पाणिनीयव्यवहारै: अनुबन्धानाम् उपस्थाकानवयवत्वम् उपस्थाप्यते। यदि एते अनुबन्धा: अवयवा: स्यु: उदीचां माङो व्यतिहारे[2] इति निर्देशोऽनुपपद्यते । मेङ्धातो: एकारस्य आकारादेश: भवति आदेच उपदेशेऽशिति[3] इति सूत्रेण। अनुबन्धस्य ङकारस्य मेङ्धातो: अवयवत्वेन मेङ्धातो: एजन्तत्वाभावात् माङ इति कृतात्वनिर्देशोऽनुपपन्न:। तस्य धात्वनवयवत्वे तु धातो: एजन्तत्वात् आत्वमत्र सुलभमेव। अत: माङः इति निर्देशात् अनुमीयते यत् अयम् इत्संज्ञक: ङकार: मेङ्धातो: अनवयव: इति।

**1.2.2. द्वितीय: व्यवहार: -**

यदि एते अनुबन्धा: अवयवा: स्यु: तर्हि उपदेशेऽजनुनासिक इत्[4] इत्यस्मिन् सूत्रे उपदेशग्रहणं व्यर्थं स्यात्। उपदेशग्रहणस्य आवश्यकतां निरूप्य अनुबन्धस्य अवयवत्वे तद्वैयर्थ्यं प्रदर्श्यते। उपदेशग्रहणाद्धि अभ्र आँ अटित: इत्यत्र अट्धातो: आदितश्च[5] इत्यनेन इण्निषेधाप्रवृत्ति: भवति। अभ्र आ अटित: इति स्थिते निरनुनासिकस्य आकारस्य आङोऽनुनासिकश्छन्दसि[6] इति सूत्रेण अनुनासिकाकारे अभ्र आँ अटित: इति जाते अनुनासिकस्य आकारस्य इत्संज्ञाव्यावृत्त्यर्थम् उपदेशग्रहणम्। अपदेशावस्थायां आकारस्य अनुनासिकत्वाभावात् न तस्य इत्संज्ञा इति तत्प्रयोजनम्। अन्यथा तस्य आकारस्य इत्संज्ञायां सत्यामपि अनुबन्धानाम् अवयवत्वपक्षे आदितश्च इत्यस्य इत्संज्ञकाकारावयवात् धातो: परस्य वलाद्यार्धधातुकस्य इण्न स्यात् इत्यर्थात् तस्य आकारस्य अट्धात्वयवत्वाभावात् इण्निषेधाप्रसक्तिरिति तस्य आकारस्य इत्संज्ञायामपि अवयवत्वपक्षे दोषाभावात् उपदेशग्रहणं व्यर्थम्।

उपदेशग्रहणाभावे तस्य आकारस्य इत्संज्ञायां सत्याम् अट्धातो: अनवयवत्वात् अट्धातो: आदित्त्वात् आदितश्च इत्यनेन इण्निषेध: स्यात्। अनुबन्धानाम् अनवयवत्वपक्षे आदितश्च इत्यस्य इत्संज्ञकाकारसमीपवर्तिन: धातो: परस्य वलाद्यार्धधातुकस्य इण्न स्यात् इत्यर्थात् अट्धातो: आदित्त्वात् इण्निषेधप्रवृत्त्या तदप्रवृत्तये तत्र अट्धातो: आदित्त्ववारणाय आकारस्य इत्संज्ञावारणाय उपदेशग्रहणम् आवश्यकम् इति येन अट्धातु: आदित् न स्यात् येन आदितश्च इत्यस्य अप्रवृत्ति: स्यात्। एवञ्च उपदेशग्रहणस्य हि अनवयवत्वपक्षे एव सार्थक्यं, न तु अवयवत्वपक्षे इति पाणिनिना कृतम् उपदेशग्रहणं अनुबन्धानाम् अनवयवत्वपक्षमेव द्रढयति।

**1.2.3.तृतीय: व्यवहार: -**

किञ्च अनुबन्धानाम् अवयवत्वे औश्प्रभृतीनाम् आदेशानाम् अनेकाल्त्वात् तेषां सर्वादेशत्वे सिद्धे अनेकाल्शित् सर्वस्य इत्यस्मिन् सूत्रे शिद्ग्रहणं व्यर्थम्। एवञ्च माङ्निर्देशात्, उपदेशग्रहणात्, शिद्ग्रहणात् च एतै: त्रिभि: प्रमाणै: अनुबन्धानाम् अनवयवत्वं सिद्धम्।

**1.3. अनवयवत्वपक्षे प्रसक्ता: त्रय: दोषा: -**

1.3.1. प्रथम: दोष:-

इत्थम् अनुबन्धानाम् अनवयवत्वे सिद्धे पक्षेऽस्मिन् दोषा: जायन्ते। शित् कित् इत्यादौ षष्ठ्यर्थे बहुव्रीहिसमासो नोपपद्यते । यदवयवशकार: इत् इत्यर्थकस्य विग्रहस्य श् इत् यस्य स: इत्यस्य, यदवयवककार: इत् इत्यर्थकस्य विग्रहस्य क् इत् यस्य स: इत्यस्य असंभवात्। षष्ठ्या: अवयवार्थकत्वात्, सामीप्यार्थकत्वाभावात् च। अत: अत्र समीपार्थे अवयवत्वारोपेण षष्ठ्यर्थे बहुव्रीहिसमास: वक्तव्य:। यत्समीपवर्तिशकार: इत् स: शित्, यत्समीपवर्तिककार: इत् स: कित् इति विग्रह: कर्तव्य:।

**1.3.2. द्वितीय: दोष: -**

यद्येवमत्र समीपार्थे अवयवत्वारोपेण षष्ठीसमास उच्यते तर्हि वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यककठकोऽरीहण-कृशाश्वर्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगादिन्वराहकुमुदादिभ्य:[7] इत्यस्मिन् सूत्रे वुञ्छण्कठजिल इत्यत्र णित्त्वप्रयुक्तकार्यं छप्रत्ययस्य वा कप्रत्ययस्य वा इति संशीति: भवति। यत: णित् इत्यस्य यत्समीपवर्तिणकार: इत् स: इत्यर्थात् छप्रत्ययस्यापि कप्रत्ययस्यापि णकारसमीपवर्तित्वात् णित्त्वप्रयुक्तं कार्यं कस्य इति अत्र संशय: भवत्येव।

**1.3.3. तृतीय: दोष: -**

हलन्त्यम् इत्यत्र च अन्त्यशब्दस्य चरमावयवार्थकत्वं नोपपद्यते। अत: तदर्थं परित्यज्य अन्त्यशब्दस्य परसमीपे लक्षणा वक्तव्या। इत्येवं दोषा: अनुबन्धानाम् अनवयवत्वे जायन्ते।

**2. एकान्ता: अनुबन्धा: इति परिभाषार्थ: -**

अनुबन्धा: अवयवा: इति व्यवस्थाप्यते एकान्ता: अनुबन्धा:[8] इति परिभाषया। पाणिने: व्यवहारात् अनुबन्धा: इत्संज्ञका: वर्णा: अवयवा: इति प्रतीयन्ते। एकान्ता: नाम अवयवा:। अयमेव पक्ष: न्याय्य:। अनुबन्धानाम् अवयवत्वसाधक: हेतु: क: इति चेदुच्यते - इदम इश् इत्यादिशास्त्रघटके इश् इत्यादिषु उपस्थापकेषु उपलभ्यते। तस्य लोप: इति शास्त्रेण लोपज्ञानात् पूर्वम् उपस्थापके उपलभ्यते। यथा छेदनरूपयत्नाभावे वृक्षे अवयविनि सर्वदा शाखाया: उपलम्भात्

शाखाया: वृक्षावयवत्वं सिद्धं तथा तस्य लोप: इति शास्त्रेण लोपज्ञानात् पूर्वम् इत्संज्ञक: वर्ण: सर्वदा उपस्थापके उपलभ्यते इति अनुबन्धस्य उपस्थापकावयवत्वं सिद्धम् । अवयविनि दर्शनादर्शनयो: एव अवयवानवयवसाधक: हेतु:। अत: अवयवित्वेनाभिमते उपस्थापके इत्संज्ञकस्य वर्णस्य दर्शनात् तद्भिन्ने उपस्थाप्ये अर्थात् लक्ष्ये श्रूयमाणे विधेये अदर्शनेऽपि अवयवत्वसाधने न काचित् क्षति:।

**2.2. अनवयवत्वसाधकनिर्देशा: त्रय: -**

**2.2.1. प्रथम: निर्देश: -**

अधुना त्रिभि: पाणिनीयनिर्देशै: अनुबन्धानाम् अवयवत्वं व्यवस्थाप्यते। अनुबन्धानाम् अवयवत्वादेव तस्य लोप:[9] इति सूत्रं सार्थकतां भजते। तेषाम् अवयवत्वात् अवयवानां स्वत: निवृत्त्यसंभावात् तेषाम् उपस्थाप्यात् अपनोदनार्थं तस्य लोप: इति शास्त्रम् आवश्यकमेव। अत: तस्य लोप: इति शास्त्रारम्भ एव अनुबन्धानाम् अवयवत्वे प्रमाणम्।

**2.2.2. द्वितीय: निर्देश: -**

यदि अनुबन्धा: अनवयवा: स्यु: तर्हि आटश्च[10] इति निर्देशासङ्गति:। तेषाम् अनवयवत्वे आट् इति शब्दस्य अर्थवत्त्वाभावात् प्रातिपदिकसंज्ञाया: अभावात् तस्मात् ङसिप्रत्यये आट: इति निर्देश: अनुपपद्यते। आट् इति समुदायात् विभक्तिनिर्देशात् अनुमीयते यत् टकार: इत्संज्ञक: आकारावयव: इति।

**2.2.3. तृतीय: निर्देश: -**

यदि अनुबन्धा: अनवयवा: स्यु: तर्हि अवयवत्वबोधकान्त्यपद-घटितं हलन्त्यम् इति सूत्रमेव असङ्गतं स्यात्। अत: तत्साङ्गत्योपपत्तये अनुबन्धानाम् अवयवत्वं स्वीकार्यमेव । एवञ्च एभि: प्रमाणै: अनुबन्धानाम् अवयवत्वं सिद्धम्।

**3. अनवयवत्वपक्षदोषाणामत्र पक्षे अभाव:-**

अत्र पक्षे अनुबन्धानाम् अनवयवत्वे ये दोषा: उक्ता: ते च अत्र न भवन्ति इति प्रतिपाद्यते अधुना। शित् कित् इत्यादौ च अवयवे समीपारोपं विनैव न्यायत: अत्र बहुव्रीहि: उपपद्यते। यदवयव: शकार: इत् स: शित् , यदवयवककार: इति स: कित् इत्यर्थकविग्रहश्च अत्र सुलभा एव। अत: वुञ्छण्कठजिल अन्त्यशब्दे परसमीपे लक्षणा, आदिशब्दे पूर्वसमीपे लक्षणा च नाश्रयणीया। तेषां शब्दानां स्वाभाविकावयवार्थकत्वादेव सर्वोऽपि व्यावहार: सूपपद्यते। इत्थम् अनुबन्धानाम् अवयवत्वपक्षे, पूर्वोक्तानवयवत्वपक्षोक्ता: दोषा: न सन्ति।

**4. अवयवत्वपक्षे प्रसक्ता: त्रय: दोषा:-**

**4.1.प्रथम: दोष: -**

परन्तु एतस्मिन् अवयवत्वपक्षे त्रय: दोषा: जायन्ते। प्रथम: दोषस्तु उदीचां माङो व्यतिहारे इति निर्देशोऽनुपपद्यते। मेङ्धातो: एकारस्य आकारादेश: भवति आदेच उपदेशेऽशिति इति सूत्रेण। अनुबन्धस्य ङकारस्य मेङ्धातो: अवयवत्वेन मेङ्धातो: एजन्तत्वाभावात् माङइति कृतात्वनिर्देशोऽनुपपन्न:।

**4.2. द्वितीय: दोष:-**

द्वितीय: दोषस्तावत् उपदेशेऽजनुनासिक इत् इत्यस्मिन् सूत्रे उपदेशग्रहणं व्यर्थं स्यात्। उपदेशग्रहणस्य आवश्यकतां निरूप्य अनुबन्धस्य अवयवत्वे तद्वैयर्थ्यं प्रदर्श्यते। उपदेशग्रहणाद्धि अभ्र आँ अटित: इत्यत्र अट्धातो: आदितश्च इत्यनेन इण्निषेधाप्रवृत्ति: भवति। अभ्र आ अटित: इति स्थिते निरनुनासिकस्य आकारस्य आङोऽनुनासिकश्छन्दसि इति सूत्रेण अनुनासिकाकारे अभ्र आँ अटित: इति जाते अनुनासिकस्य आकारस्य इत्संज्ञाव्यावृत्त्यर्थम् उपदेशग्रहणम्। अपदेशावस्थायां आकारस्य अनुनासिकत्वाभावात् न तस्य इत्संज्ञा इति तत्प्रयोजनम्। अन्यथा तस्य आकारस्य इत्संज्ञायां सत्यामपि अनुबन्धानाम् अवयवत्वपक्षे आदितश्च इत्यस्य इत्संज्ञकाकारावयवात् धातो: परस्य वलाद्यार्धधातुकस्य इण्न स्यात् इत्यर्थात् तस्य आकारस्य अट्धात्वयवत्वाभावात् इण्निषेधाप्रसक्तिरिति तस्य आकारस्य इत्संज्ञायामपि अवयवत्वपक्षे दोषाभावात् उपदेशग्रहणं व्यर्थम्।

**4.3. तृतीय: दोष: -**

तृतीय: दोषो भवति अयम् - औश्प्रभृतीनाम् आदेशानाम् अनेकाल्त्वात् तेषां सर्वादिशत्वे सिद्धे अनेकाल्शित् सर्वस्य इत्यस्मिन् सूत्रे शिद्ग्रहणं व्यर्थम्।

**5.अवयवत्वपक्षे प्रसक्तदोषवारिका: तिस्र: परिभाषा: -**

एवञ्च एतेषु दोषेषु प्रसक्तेषु तिस्र: परिभाषा: आरभ्यन्ते - नानुबन्धकृतमनेकाल्त्वम्, नानुबन्धकृतमनेजन्तत्वम्, नानुबन्धकृतमसारूप्यम् इति।

**5.1.नानुबन्धकृतमनेकाल्त्वम् -**

**5.1.1.परिभाषार्थ: -**

तत्र आदौ नानुबन्धकृतमनेकाल्त्वम्[11] इति परिभाषात्र निरूप्यते। न अनुबन्धकृतम् अनेकाल्त्वम् इति त्रीणि पदानि सन्ति अस्यां परिभाषायाम्। अनुबन्धकृतम् अनेकाल्त्वं नादर्तव्यम् इति परिभाषाया: अर्थ:।

**5.1.2.परिभाषारम्भप्रयोजनम् -**

इयं परिभाषा किमर्थम् आरब्धा इति आदौ अत्र प्रतिपाद्यते। अनेकाल्शित्सर्वस्य[12] इति हि सूत्रम्। य: आदेश: अनेकाल् शित् च भवति स: आदेश: स्थानिन: सर्वस्य स्थाने प्रवर्तते इति हि सूत्रस्यास्य अर्थ:। यथा इदम इश्[13] इत्यत्र इश् आदेश: शित्। अत: इदम्शब्दस्य सर्वस्य स्थाने इश् इत्ययम् आदेश: प्रवर्तते। अनुबन्धानाम् अवयवत्वपक्षे इश्प्रभृतीनाम् अनुबन्धविशिष्टानाम् आदेशानाम् अनेकाल्त्वादेव सर्वादेशत्वे सिद्धे अनेकाल्शित् सर्वस्य इत्यस्मिन् सूत्रे शिद्ग्रहणं व्यर्थम्। एतद्वैयर्थ्यवारणायेयं परिभाषारब्धा।

**5.1.3.ज्ञापकम् -**

इत्थम् अनेकाल्शित् सर्वस्य इत्यस्मिन् सूत्रे शिद्ग्रहणं व्यर्थं सत् इमां परिभाषां ज्ञापयति नानुबन्धकृतमनेकाल्त्वम् इति। शिद्ग्रहणस्य

वैयर्थ्यवारणाय परिभाषा इयम् आरब्धा। अनुबन्धकृतम् अनेकाल्त्वं नादर्तव्यम् इति परिभाषायाः अर्थः। अतः इश्प्रभृतिषु आदेशेषु अनेकाल्त्वम् इत्संज्ञकशकारकृतं वर्तते। अतः तन्नादर्तव्यम् इति परिभाषया बोधनात् इशादीनाम् आदेशानाम् अनुबन्धकृतानेकाल्त्वात् अनुबन्धविनिर्मुक्तस्य आदेशस्य अनेकाल्त्वाभावात् सर्वादेशत्वे अप्राप्ते सर्वादेशसिद्ध्यर्थं शिद्ग्रहणं सार्थकम् इति स्वांशे चारितार्थ्यम्।

**5.1.4. स्वांशे चारितार्थ्यम् –**

एवञ्च इश्प्रभृतिषु आदेशेषु अनेकाल्त्वम् इत्संज्ञकशकारकृतं वर्तते। अतः तन्नादर्तव्यम् इति परिभाषया बोधनात् इशादीनाम् आदेशानाम् अनुबन्धकृतानेकाल्त्वात् अनुबन्धविनिर्मुक्तस्य आदेशस्य अनेकाल्त्वाभावात् सर्वादेशत्वे अप्राप्ते सर्वादेशसिद्ध्यर्थं शिद्ग्रहणं सार्थकम् इति स्वांशे चारितार्थ्यम्।

**5.1.5.अन्यत्रफलम् –**

एवञ्च अस्याः परिभाषायाः सत्त्वात् अर्वणस्त्रसावनञः[14] इत्यादौ तृ इत्यादिषु आदेशेषु ऋकारादिवर्णानाम् इत्संज्ञकत्वात् तत्कृतानेकाल्त्वस्य अनादरात् तेषाम् आदेशानाम् एकाल्त्वमेव इति तेषाम् अन्त्यादेशत्वमेव न तु सर्वादेशत्वम् इति सिद्धम् अन्यत्र फलमपि।

**5.1.5. इत्संज्ञायोग्यत्वमेवानुबन्धत्वम् –**

लुटः प्रथमस्य डारौरसः[15], जसः शी[16] इत्यादौ डादीनाम् आदेशप्रवृत्त्युत्तरमेव इत्संज्ञाविधानात् आदेशप्रवृत्तिकाले इत्संज्ञायाः असत्त्वात् तेषु स्थलेषु डकाराकारानुपूर्वीकृतात् अनेकाल्त्वादेव सर्वादेशत्वम्। परन्तु वस्तुतः इत्संज्ञायोग्यत्वमेव अनुबन्धत्वम् इति सिद्धान्तात् लुटः प्रथमस्य डारौरसः इत्यत्र डादेशस्य आदेशप्रवृत्तिकालेऽपि इत्संज्ञायाः सत्त्वात् तत्कृतानेकाल्त्वस्य अनाश्रयणात् तेषाम् अनेकाल्त्वाभावात् सर्वादेशत्वम् अप्राप्तमेव।

**5.1.6. डाप्रभृतीनाम् वर्णप्रश्लेषेण सर्वादेशत्वम् –**

एवञ्च तेषाम् आदेशानां सर्वादेशत्वं कथं साध्यते इति चेदुच्यते – तेषाम् आदेशानां सर्वादेशत्वं तेषु आदेशेषु वर्णप्रश्लेषेण डा आ इत्येवं प्रकारेण प्रश्लेषं कृत्वा साध्यते। जसः शी इत्यत्र तु शित्त्वादेव सर्वादेशत्वं बोध्यम्। अनेन अनेकाल्शित् सर्वस्य सूत्रस्थशिद्ग्रहणेन अनुबन्धानाम् अविद्यमानवद्भावः ज्ञाप्यते इति यदि उच्येत तर्हि एताः तिस्रः परिभाषाः न कार्याः। एवं सति मन्दबुद्धिवैशद्यार्थमेव तिसृणामपि परिभाषाणाम् उपस्थापनमिति बोध्यम्।

**5.2.नानुबन्धकृतमनेजन्तत्वम् –**

**5.2.1. परिभाषार्थः –**

इत ऊर्ध्वं नानुबन्धकृतमनेजन्तत्वम्[17] इति परिभाषात्र निरूप्यते। न अनुबन्धकृतम् अनेजन्तत्वम् इति त्रीणि पदानि सन्ति अस्यां परिभाषायाम्। अनुबन्धकृतम् अनेजन्तत्वं नादर्तव्यम् इति परिभाषायाः अर्थः।

**5.2.2. परिभाषारम्भप्रयोजनम् –**

इयं परिभाषा किमर्थम् आरब्धा इति आदौ अत्र प्रतिपाद्यते। अथ परिभाषायाः अवतारिका उच्यते –दाधाघ्वदाप्[18] इति सूत्रम्। दारूपाणां धारूपाणां धातूनां घुसंज्ञा भवति, दाप्दैपौ धातू विहाय इति सूत्रस्यास्य अर्थः। के च ते दारूपाः धातवः इति चेत् दो अवखण्डने, देङ् रक्षणे, डुदाञ् दाने, दाण् दाने इति चत्वारः धातवः दारूपाः अत्र गृह्यन्ते। के च ते धारूपाः धातवः इति चेत् धेट् पाने, डुधाञ् धारणपोषणयोः इति द्वौ धातू गृह्येते। दापः दैपः च न घुसंज्ञा अदाप् इति निषेधात्। अत्र दाप् इत्यनेन कृतात्वः दैप् शोधने धातुः एवं दाप् लवने धातुश्च विवक्षितः। एवञ्च एतेषां षण्णां धातूनां घुसंज्ञा विधीयते अनेन सूत्रेण। दो दद् घोः[19] इति सूत्रेण घुसंज्ञकस्य दा इत्यस्य दथ् आदेशः विधीयते तादौ किति परे। अव इत्युपसर्गपूर्वकात् दैप्धातोः निष्ठाक्तप्रत्यये अवदातम् इति रूपम् इष्टम्। परन्तु अनुबन्धानाम् अवयवत्वपक्षे अवदत्तं मुखम् इति अनिष्टं रूपं स्यात्। तत् कथमिति उच्यते – दैप्धातोः निष्ठाक्तप्रत्यये पलोपोत्तरम् आत्वं भवति आदेच उपदेशेऽशिति इति सूत्रेण। एवञ्च आत्वे कृते धातोः दारूपत्वात् दाधाघ्वदाप् इति सूत्रेण घुंसज्ञायां सत्यां दो दद् घोः इति सूत्रेण दथ् आदेशे अवदत्तं मुखम् इति अनिष्टं रूपं स्यात्, नाप्यत्र दापः उच्यमानः निषेधप्रसक्तिः। कथम् अत्र दापः उच्यमानः घुसंज्ञानिषेधः न प्रवर्तते इति चेदुच्यते। अनुबन्धानाम् अवयवत्वपक्षे दैप्धातोः दाप्रूपत्वाभावात् न तन्निषेधस्य प्रवृत्तिरत्र। अर्थात् पकारसत्त्वे तु एजन्तत्वाभावात् आत्वाप्रसक्त्या दैप्रूपत्वात् दाप्रूपत्वाभावात्, पलोपोत्तरं पकाराभावेन दारूपत्वेन दाप्रूपत्वाभावात् च अदाप् इत्यनेन उच्यमानः निषेधः अत्र न प्रवर्तते। तथा सति दैप्धातोः निष्ठाक्तप्रत्यये पलोपोत्तरम् आदेच उपदेशेऽशिति इति सूत्रेण आत्वे कृते धातोः दारूपत्वात् दाधाघ्वदाप् इति सूत्रेण घुंसज्ञायां सत्यां दो दद् घोः इति सूत्रेण दथ् आदेशे अवदत्तं मुखम् इति अनिष्टं रूपं स्यात्। अतः एतद्दोषवारणाय परिभाषेयम् आरब्धा नानुबन्धकृतमनेजन्तत्वम् इति।

अनुबन्धकृतम् अनेजन्तत्वं नादर्तव्यम् इति परिभाषायाः अर्थः। अनुबन्धकृतस्य अनेजन्तत्वस्य अनादरात् अनया परिभाषया अनुबन्धानाम् अविद्यमानवद्भावबोधनद्वारा अनुबन्धस्य सत्त्वेऽपि दैप्धातोः एजन्तत्वात् दैपः अनुबन्धलोपात् पूर्वमेव उपदेशे एव आत्वप्रवृत्तौ क्षत्यभावात्, आत्वे कृते, दाब्रूपत्वसत्त्वेन, अनुबन्धलोपे कृतेऽपि दाब्रूपत्वस्य स्थानिवद्भावेन दाशब्दे विद्यमानत्वात् अदाप् इत्युच्यमानः निषेधः दैपः प्रवर्तते एव इति न कश्चिदत्र दोषः।

**5.2.3. ज्ञापकं तत्चारितार्थ्यञ्च –**

परिभाषाज्ञापकम्–अस्याः परिभाषायाः ज्ञापकं भवति उदीचां माङो व्यतिहारे इति सूत्रे माङः इति निर्देशः। अनुबन्धानाम् अवयवत्वे तु ङकारसत्त्वे एजन्तत्वाभावात् आत्वाप्राप्त्या माङ्इति निर्देशः अनुपपन्नः सन् परिभाषामिमां ज्ञापयति। आदेच उपदेशेऽशिति इति सूत्रेण आत्वं विधीयते। सूत्रेऽस्मिन् उपदेशशब्दः कर्मसाधनः, उपदिश्यमानस्य इत्यर्थः। अत्र कश्चन प्रश्नः समुदेति यत्–लिडादेशयोः एशिरेच् इत्यनयोः आत्ववारणाय, तथा गोप्रभृतीनां प्रातिपदिकानाम् आत्ववारणाय, आदेच

उपदेशेऽशिति इति सूत्रे लिटि धातोरनभ्यासस्य[20] इत्यतः धातोः इत्यनुवृत्तेः आवश्यकत्वात्, तदनुवृत्तेः सत्त्वात् अनुबन्धविनिर्मुक्तस्यैव धातुत्वम् इति न धातुलोप आर्धधातुके[21] इत्यत्र व्यवस्थापितत्वात्, अनुबन्धसत्त्वे तस्य धातुत्वाभावात् आत्वमेव दुर्लभम् इति न स्वांशे चारितार्थ्यम् इति। चेत् न। लिडादेशयोः एशिरेच् इत्यनयोः आत्ववारणाय आदेच उपदेशेऽशिति इति सूत्रे लिटि धातोरनभ्यासस्य इत्यतः धातोः इत्यनुवृत्तेः आवश्यकता नास्ति। गवादिशब्दानाम् उपदेशत्वाभावात्, इरेप्रभृतीनाम् आदेशानाम् उपदेशत्वेऽपि शित्परत्वाभावात् न आत्वप्रसक्तिः। अतः धातोः अनुवृत्तिः अनावश्यकी। एवञ्च स्वांशे चारितार्थ्यात् माङइति निर्देशः अनुपपन्नः सन् परिभाषामिमां ज्ञापयति।

**5.3.नानुबन्धकृतमसारूप्यम्** –

**5.3.1. परिभाषार्थः** –

इत ऊर्ध्वं नानुबन्धकृतमसारूप्यम्[22] इति परिभाषात्र निरूप्यते। न अनुबन्धकृतम् असारूप्यम् इति त्रीणि पदानि सन्ति अस्यां परिभाषायाम्। अनुबन्धकृतम् असारूप्यम् नादर्तव्यम् इति परिभाषायाः अर्थः।

**5.3.2. परिभाषारम्भप्रयोजनम्** –

इयं परिभाषा किमर्थम् आरब्धा इति आदौ अत्र प्रतिपाद्यते। अथ परिभाषायाः अवतारिका उच्यते – वासरूपोऽस्त्रियाम्[23] इति सूत्रम्। असरूपः अपवादप्रत्ययः उत्सर्गस्य विकल्पेन बाधको भवति इति हि एतत्सूत्रार्थः। उदाहरणमाध्यमेन एतत् प्रतिपाद्यते । कर्मण्यण्[24] इति सूत्रेण कर्मवाचके उपपदे धातोः अण्प्रत्ययः विधीयते। कुम्भं करोति इति कुम्भकारः इति उदाहरणम्। कुम्भम् इति कर्मवाचके द्वितीयान्ते उपपदे डुकृञ् धातोः अण्प्रत्यये कृते धआतोः ऋकारस्य वृद्धौ आरादेशे कुम्भकारः इति रूपम्। आतोऽनुपसर्गे कः[25] इति सूत्रेण कर्मवाचके उपपदे आकारान्ताद् धातोः कप्रत्ययः विधीयते। आतोऽनुपसर्गे कः इति सूत्रेण कप्रत्ययः अणं बाधित्वा प्रवर्तते। वरं ददाति इति वरदः इत्युदाहरणम्। वरम् इति कर्मवाचके उपपदे डुदाञ् दाने इति आकारान्ताद् धातोः कर्मण्यण् इति सूत्रेण अण्प्रत्यये प्राप्ते तं बाधित्वा अनेन सूत्रेण कप्रत्ययः भवति। कप्रत्यये कृते तस्य कित्त्वात् आतो लोप इटि च इति सूत्रेण धातोः आकारस्य लोपे वरदः इति रूपं सिद्ध्यति। अयं कप्रत्ययः अण्प्रत्ययस्य नित्यबाधको भवति। अणि णकारस्य, के ककारस्य च इत्संज्ञकत्वात् निवृत्तौ उभयोरपि प्रत्यययोः अकारः एव अवशिष्यते। एवञ्च अनुबन्धनिवृत्तौ उभयोः सारूप्यम् अस्ति। अनुबन्धसत्त्वे तु वैरूप्यम् अस्ति। अनुबन्धकृतस्य वैरूप्यस्य असारूप्यस्य प्रत्ययद्वयेऽपि सत्त्वात् अत्र वासरूपोऽस्त्रियाम् इति वासरूपविधेः प्रवृत्तौ कप्रत्ययः अण्प्रत्ययस्य विकल्पेन बाधको भवति। एवं सति कप्रत्यये कृते वरदः इति अभीष्टरूपसिद्धावपि, कप्रत्ययाभावपक्षे अणि कृते वरदायः इत्यनिष्टं रूपं स्यात्। अतः एतद्दोषवारणायपरिभाषेयम् आरब्धा वर्तते नानुबन्धकृतमसारूप्यम् इति।

न अनुबन्धकृतम् असारूप्यम् इति त्रीणि पदानि सन्ति अस्यां परिभाषायाम्। अनुबन्धकृतम् असारूप्यम् नादर्तव्यम् इति परिभाषायाः अर्थः। एवञ्च अण्प्रत्ययकप्रत्यययोः वैरूप्यम् अनुबन्धकृतं वर्तते। अनुबन्धकृतवैरूप्यस्य अनाश्रयणात् उभयोः अनुबन्धनिवृत्तौ सारूप्यात् कप्रत्ययः अणः वा बाधको न, अपि तु नित्यबाधकः एव। अतः वरम् इति कर्मवाचके उपपदे डुदाञ् दाने इति आकारान्ताद् धातोः कर्मण्यण् इति सूत्रेण अण्प्रत्यये प्राप्ते तं नित्यतया बाधित्वा कप्रत्ययो भवति। कप्रत्यये कृते तस्य कित्त्वात् आतो लोप इटि च इति सूत्रेण धातोः आकारस्य लोपे वरदः इति अभीष्टं रूपं सिद्ध्यति।

**5.3.3. ज्ञापकम्** –

परिभाषाज्ञापकम्–अस्याः परिभाषायाः ज्ञापकं भवति – ददातिदधात्योर्विभाषा[26] इति सूत्रेण विकल्पेन णबाधकशप्रत्ययविधानमेव अस्याः परिभाषायाः ज्ञापकं। श्याद्व्याधस्रुसंस्र्वतीणवसाऽवहृलि–हश्लिषश्वसश्च[27] इति सूत्रेण आकारान्तेभ्यः धआतुभ्यः णप्रत्ययः विधीयते। अने सूत्रेण णप्रत्यये प्राप्ते तं बाधित्वा जौहोत्यादिकात् डुदाञ् धातोः डुधाञ् धातोः च विकल्पेन शप्रत्ययो विधीयते। शप्रत्ययः शित् अतः सार्वाधातुकः। कर्त्रर्थे सार्वधातुके परे धातोः शब् भवति। धात्वो अनयोः जौहोत्यादिकत्वात् शपः श्लुः भवति। श्लौ इति सूत्रेण द्वित्वे ददः दधः इति रूपं सिद्ध्यति। शप्रत्ययाभावपक्षे णप्रत्यये आतो युक्चिण्कृतोः[28] इति सूत्रेण युगागमे दायः धायः इति रूपं सिद्ध्यति। ददातिदधात्योर्विभाषा इति सूत्रेण विकल्पेन शप्रत्ययो विधीयते। एतेन शप्रत्ययाभावपक्षे णप्रत्ययो भवति। वासरूपोऽस्त्रियाम् इति सूत्रेण असरूपः अपवादप्रत्ययः उत्सर्गस्य विकल्पेन बाधको भवति इति बोध्यते। प्रकृते णशप्रत्यययोः अनुबन्धकृता असरूपता अस्ति। अतः अपवादप्रत्ययस्य शप्रत्ययस्य वैकल्पिकत्वं वासरूपोऽस्त्रियाम् इति सूत्रेणैव सिद्धम्। तेनैव ददः दायः, दधः धायः इति अभीष्टरूपाणि सिद्ध्यन्ति। एवं सति ददातिदधात्योर्विभाषा इति सूत्रेण विकल्पेन णबाधकशप्रत्ययविधानम् असङ्गतं सत् इमां नानुबन्धकृतमसारूप्यम् इति परिभाषां ज्ञापयति। अनुबन्धकृतम् असारूप्यम् नादर्तव्यम् इति परिभाषायाः अर्थः। प्रकृते णशप्रत्यययोः अनुबन्धकृतस्य असारूप्यस्यैव सत्त्वात् तस्य च अनादरात् अनुबन्धविनिर्मुक्तयोः अनयोः प्रत्यययोः असारूप्याभावात् अर्थात् सारूप्यात् नात्र वासरूपोऽस्त्रियाम् इति सूत्रस्य प्रवृत्तिः।

**5.3.4. स्वांशे चारितार्थ्यम्** –

एवञ्च वासरूपविधिबलात् शप्रत्ययः विक्लपेन णप्रत्ययस्य बोधको नैव भवति। अतः णप्रत्ययस्य शप्रत्ययः नित्यतया बाधकः स्यात् । तथा सति ददः दधः इत्यवे रूपे स्यातां, न तु दायः धायः इति। अतः ददातिदधात्योर्विभाषा इति सूत्रेण णप्रत्ययबाधकत्वेन विकल्पेन शप्रत्ययो विहितः। तथा सति शप्रत्ययाभावपक्षे णप्रत्यये दायः धायः इति रूपे च स्याताम् इति न दोषः। एवञ्च यत्र अनुबन्धं विनैव प्रत्यययोः वैरूप्यं दृश्यते तत्रैव वासरूपोऽस्त्रियाम् इति सूत्रस्य प्रवृत्तिः। इत्थं

ददातिदधात्योर्विभाषा इति सूत्रेण णप्रत्ययबाधकत्वेन विकल्पेन शप्रत्ययविधानं सार्थकमिति लब्धं स्वांशे चारितार्थ्यम्।

**5.3.5. अन्यत्रफलम् –**

अन्यत्र फलं तु कर्मण्यण् इति सूत्रविहितस्य अणप्रत्ययस्य आतोऽनुपसर्गे कः इति सूत्रविहितस्य कप्रत्ययस्य च सारूप्यात्, अनुबन्धकृतवैरूप्यस्यैव सत्त्वात् अत्रापि वासरूपविधेः अप्रवृत्त्या कप्रत्ययः अणप्रत्ययस्य नित्यतया बोधको भवति। अत एव गां ददाति इत्यत्र आकारान्तात् धातोः अणं बाधित्वा कप्रत्यये कृते गोदः इत्येव रूपमिति नात्र अणः प्रवृत्तेरवकाशः।

## सन्दर्भः

1. परिभाषा संख्या 4।
2. अष्टाध्यायीसूत्रसंख्या 3.4.19. व्यतीहारेऽर्थे माङः क्त्वा स्यात् ।
3. अष्टाध्यायीसूत्रसंख्या 6.1.45. उपदेशे एजन्तस्य धातोः आत्वं, न तु शिति ।
4. अष्टाध्यायीसूत्रसंख्या 1.3.2. उदेशे अनुनासिकः अज् इत्संज्ञः स्यात् ।
5. अष्टाध्यायीसूत्रसंख्या 7.2.16. आकारेतो निष्ठायाः इण्न स्यात् ।
6. अष्टाध्यायीसूत्रसंख्या 6.1.126. आङोऽचि परे अनुनासिकः स्यात्, स च प्रकृत्या ।
7. अष्टाध्यायीसूत्रसंख्या 4.2.80.एभ्यः सप्तदशभ्यः सप्तदश स्युः चतुरर्थ्याम् ।
8. परिभाषा संख्या 5।
9. अष्टाध्यायीसूत्रसंख्या 1.3.9. तस्येतो लोपः स्यात् ।
10. अष्टाध्यायीसूत्रसंख्या 6.1.90. आटः अचि परे वृद्धिरेकादेशः स्यात् ।
11. परिभाषा संख्या 6।
12. अष्टाध्यायीसूत्रसंख्या 1.1.55. अनेकाल् य आदेशः, शित् च स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति।
13. अष्टाध्यायीसूत्रसंख्या 5.3.3.प्राग्दिशः । इदम इश् इत्ययमादेशो भवति प्राग्दिशीयेषु प्रत्ययेषु परतः।
14. अष्टाध्यायीसूत्रसंख्या 6.4.127.नञ् रहितस्य अर्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशः स्यात् न तु सौ।
15. अष्टाध्यायीसूत्रसंख्या 2.4.75. लुडादेशस्य प्रथमपुरुषस्य परस्मैपदस्य आत्मनेपदस्य च यथाक्रमं डा रौ रस् एते आदेशाः भवन्ति।
16. अष्टाध्यायीसूत्रसंख्या 7.1.17. अदन्तसर्वनाम्नः परस्य जसः शी स्यात्।
17. परिभाषासंख्या 6।
18. अष्टाध्यायीसूत्रसंख्या 1.1.20.दारूपाः धारूपाः धातवः घुसंज्ञाश्च स्युः दाप्दैपौ वर्जयित्वा।
19. अष्टाध्यायीसूत्रसंख्या 7.4.46. घुसंज्ञकस्य दा इत्यस्य दथ् स्यात् तादौ किति।
20. अष्टाध्यायीसूत्रसंख्या 6.1.8.लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तः, आदिभूतादचः परस्य तु द्वितीयस्य।
21. अष्टाध्यायीसूत्रसंख्या 1.1.4. धआत्वंशलोपनिमित्ते आर्धधातुके परे इकः गुणवृद्धि न स्तः।
22. परिभाषासंख्या 7।
23. अष्टाध्यायीसूत्रसंख्या 3.1.95. परिभाषेयम् । अस्मिन् धात्वधिकारे असरूपोऽपवादप्रत्ययः उत्सर्गस्य बाधको वा भवति स्त्र्यधिकारोक्तं विना।
24. अष्टाध्यायीसूत्रसंख्या 3.2.1. कर्मण्युपपदे धातोः अण् स्यात्।
25. अष्टाध्यायीसूत्रसंख्या 3.2.3. आदन्तात् धातोः अनुपसर्गात् कर्मण्युपपदे कः स्यात् नाण्।
26. अष्टाध्यायीसूत्रसंख्या 3.1.139. दाञः धाञश्च विभाषा शप्रत्ययो भवति।
27. अष्टाध्यायीसूत्रसंख्या 3.1.141. श्यैङ्प्रभृतिभ्यः नित्यं णः स्यात्।
28. अष्टाध्यायीसूत्रसंख्या 7.3.33. आदन्तानां युगागमः स्यात् चिणि ञिति णिति कृति च।

## सन्दर्भग्रन्थसूची


1. अष्टाध्यायी भगवत्पाणिनिविरचिता कृष्णदास अकादमी प्रकाशित।
2. लघुसिद्धान्तकौमुदी परदराजाचार्येण विरचिता, भीमसेनशास्त्रिविरचितभैमीव्याख्यायुता, प्रथमद्वितीयतृतीयचतुर्थभागाः,भैमीप्रकाशनद्वारा प्रकाशिता चतुर्थ संसस्करणम् 2007।
3. वैयाकरणसिद्धान्तकौमुदी, प्रथमभागः भट्टोजिदीक्षितविरचिता, बालमनोरमा तत्त्वबोधिनीव्याख्याद्वयोपेता, गिरिधरशर्मणा परमेश्वरानन्दशर्मणा च संपादिता, मोतीलाल बनारसीदास द्वारा प्रकाशिता 2004, ऐ.एस.बि.एन् 81-208-2341-9
4. वैयाकरणसिद्धान्तकौमुदी, द्वितीयभागः भट्टोजिदीक्षितविरचिता, बालमनोरमा तत्त्वबोधिनीव्याख्याद्वयोपेता, गिरिधरशर्मणा परमेश्वरानन्दशर्मणा च संपादिता, मोतीलाल बनारसीदास द्वारा प्रकाशिता 2004, ऐ.एस.बि.एन् 81-208-2341-9
5. वैयाकरणसिद्धान्तकौमुदी, तृतीयभागः भट्टोजिदीक्षितविरचिता, बालमनोरमा तत्त्वबोधिनीव्याख्याद्वयोपेता, गिरिधरशर्मणा परमेश्वरानन्दशर्मणा च संपादिता, मोतीलाल बनारसीदास द्वारा प्रकाशिता 2004, ऐ.एस.बि.एन् 81-208-2341-9
6. वैयाकरणसिद्धान्तकौमुदी, चतुर्थभागः भट्टोजिदीक्षितविरचिता, बालमनोरमा तत्त्वबोधिनीव्याख्याद्वयोपेता, गिरिधरशर्मणा परमेश्वरानन्दशर्मणा च संपादिता, मोतीलाल बनारसीदास द्वारा प्रकाशिता 2004, ऐ.एस.बि.एन् 81-208-2341-9
7. काशिकावृत्तिः जयादित्यवामनविरचिता न्यासपदमञ्जरीसहिता,रत्ना पब्लिकेशन्स द्वारा प्रकाशिता 1975।
8. परिभाषेन्दुशेखरः नागेशभट्टविरचितः पेरिवेङ्कटेश्वरशास्त्रिविरचितनागेशगूढार्थदीपिकाव्याख्यान- संवलितः आन्ध्रविश्वकला परिषदा प्रकाशितः - 1955
9. परिभाषेन्दुशेखरः नागेशभट्टविरचितः श्रीपादसत्यानारायाणाचार्येण विरचता बालबोधिनीव्याख्यायुता राष्ट्रियसंस्कृतविद्यापीठद्वारा प्रकाशितः।
10. अन्तर्जालपुटनाम - httpsÑ//ashtadhyayi.com/

ISSN 2348-7828

# कृष्णमित्रविरचिताप्रकाशितरत्नार्णवाख्यटीकायां वैयाकरणसिद्धान्तकौमुद्याः मङ्गलाचरणविषयकोऽभिनवो विचारः

राजेशचन्द्रः पोखरियाः

**[अथ वेदाङ्गभूतस्य सर्वग्राह्यस्य वैज्ञानिकस्य महर्षिपाणिनिप्रणीतस्य पाणिनीयव्याकरणस्य प्रचलितासु व्याख्यानपरम्परासु प्रक्रियानुसारिव्याख्यानपरम्परायां वैयाकरण-सिद्धान्तकौमुदी सर्वत्र सर्वाधिका च प्रचलिता वर्तते, अस्याः टीकापरम्परातीवविस्तृता वर्तते, तत्राप्रकाशितटीकास्वन्यतमायां रत्नार्णवाख्यटीकायां मङ्गलाचरणस्य व्याख्याने कश्चन नूतनः विचारः वर्तते यश्च वैयाकरणसिद्धान्तकौमुद्याः प्रकाशितास्वन्यासु टीकासु नावलोक्यते। स चाभिनवः विचारः रत्नार्णवटीका-परिचयोल्लेखपूर्वकमस्मिन् शोधपत्रे प्रस्तूयते - सं. ]**

**रत्नार्णवटीका-परिचयः**-वैयाकरणसिद्धान्कौमुद्याः टीकास्वन्यतमा श्रीकृष्णमित्रविरचिता टीका वर्तते रत्नार्णवटीका इति। मातृका-सूचीपत्राणां नूतनसूचीपत्रेण (NCC-2015) सह चौखम्बादिसंस्कृतग्रन्थ - प्रकाशनसूचीपत्राणामवलोकनेन ज्ञायते यत् टीकेयमप्रकाशितेति। अप्रकाशिता वर्तते अतः अस्याः सम्प्राप्तमातृकाणां परिचयः दीयते । तद्यथा -

**अद्यावधि हस्तगतानां रत्नार्णवटीका-मातृकाणां परिचयः**[1]-NCC इत्यस्याधारेणास्य बहुषु संग्रहालयेषु अस्य ग्रन्थस्य मातृकाः विद्यन्ते। तासु केन्द्रीयसंस्कृतसंस्थानस्य गङ्गानाथझापरिसरस्य मातृकासंग्रहालये तिस्रः मातृकाः विद्यन्ते। मया गङ्गानाथ-झा-परिसरस्य तिस्रः मातृकाः सङ्गृहीताः। एतासां तिसृणामपि मातृकाणां विवरणमित्थं वर्तते -

प्रथमा मातृका-आदितः अजन्तपुँल्लिङ्गपर्यन्तं विद्यते। अस्याः विवरणमित्थं वर्तते-

| | | |
|---|---|---|
| * अधिगमसंख्या | - | एतस्याः मातृकायाः अधिगमसंख्या - 49347 वर्तते । |
| * भाषा | - | मातृकेयं संस्कृतभाषायां निबद्धा वर्तते। |
| * लिपिः | - | अस्याः मातृकायाः लिपिः देवनागरी वर्तते। |
| * पुटसंख्या | - | 1-98 (पञ्चसन्ध्यन्तपुटसंख्या - 1-65 / पृष्ठसंख्या = 130) |
| * पङ्क्तयः | - | अस्यां मातृकायां प्रतिपृष्ठं नव (9) / दश (10) पङ्क्तयः सन्ति। |
| * स्थितिः | - | सम्यक् (पठनयोग्या)। |
| * पूर्णता/अपूर्णता | - | इयं मातृका अपूर्णा वर्तते। |

**द्वितीया मातृका**-केवलं तद्धितप्रकरणात्मिका (पत्रसं.-1-84), अस्याः लिपिश्च - देवनागरी। इयमपि मातृका अपूर्णा वर्तते।

**तृतीया मातृका**-केवलं कारकप्रकरणात्मिका (पत्रसं.-1-22), अस्याः लिपिश्च - मैथिली। इयमपि मातृका अपूर्णा वर्तते।

अस्याष्टीकायाः चतस्रः मातृकाः ''सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयस्य सरस्वतीभवनपुस्तकालयतः'' अपि सम्प्राप्ताः। एवमेव जोधपुरतः ''राजस्थान ओरियन्टल रिसर्च इन्स्टिट्यूट'' इत्यस्मात् संग्रहालयादपि स्त्रीप्रत्ययप्रकरणपर्यन्तमस्याः मातृकाः सम्प्राप्ताः वर्तन्ते। तासां विवरणं शोधपत्रे विस्तरभयाद् न प्रदीयते किन्तु शोधप्रबन्धे प्रदास्यते।

**टीकाकर्तुः परिचयः**[2]-नाम-अस्याः टीकायाः कर्ता श्रीकृष्णमित्रः वर्तते । अस्यापरं नाम कृष्णाचार्यः अप्यस्ति।

वंशः- अस्य पिता श्रीरामसेवकः तथा पितामहः श्रीदेवीदत्तः (देवदत्तः) वर्तते । जोधपुरस्थे ''राजस्थान ओरियन्टल रिसर्च इन्स्टिट्यूट'' संग्रहालये विद्यमानायां मातृकायामित्थं वर्णनं प्राप्यते-''इति श्रीदेवदत्तात्मजरामसेवकतनूद्भवाचार्यकृष्णमित्रकृते रत्नार्णवे संज्ञाप्रकरणं समाप्तिमगमत्''। अस्य पित्रा श्रीरामसेवकेन भाष्यप्रदीपव्याख्या विरचिता वर्तते।

कालः- प्राप्तासु मातृकासु टीकाकर्तुः कालः तु स्पष्टः नास्ति किन्तु परिचयः संक्षेपेण वर्तते। मया प्राप्तायाः तद्धितप्रकरणस्य मातृकायाः अन्ते पुष्पिकायामित्थं वर्णनं प्राप्यते-''इति कौमुदीव्याख्याने रत्नार्णवे पूर्वार्धं समाप्तम्। शुभ-मस्तु। संवत्-1881 ज्येष्ठशुक्लतृतीया चन्द्रवासरम्, श्रीरामकृष्णाय नमः श्री जानकीवल्लभाय नमः श्रीगुरुचरणकमलेभ्यो नमः''[3]। एवमेव प्रो. आजादमिश्रवर्येण सम्पादितायाः रत्नाकरटीकायाः प्रथमभागस्य भूमिकायामस्य विषये उल्लेखः वर्तते यत् सिद्धान्तकैमुद्याः तत्त्वबोधिनीतः परं रत्नार्णवटीका तथा ततः परं च रत्नाकर-टीका विरचिता[4] इति। अतः अनुमानेनास्याः टीकायाः कालः सं.-1700—1800 मध्ये स्यादिति वक्तुं शक्यते।

प्रस्तुत-ग्रन्थकारस्य अन्याः कृतयः-श्रीकृष्णमित्रस्यान्याः कृतयोऽपि वर्तन्ते । तद्यथा -

(1) युक्तिरत्नाकरः (4) शब्दकौस्तुभस्य भावप्रदीपटीका
(2) वादचूडामणिः
(5) वैयाकरणभूषणसारस्य—रत्नप्रभाटीका
(3) वादसुधाकरः (6) तत्त्वमीमांसादयश्च।

**मङ्गलाचरणविषयको विचारः**-वैयाकरणसिद्धान्तकौमुद्याः रत्नार्णवटीकायाः व्याख्यात्रा श्रीमता कृष्णमित्रेण टीकायाः आदौ स्वकीयं मङ्गलाचरणं क्रियते, ततश्च वैयाकरणसिद्धान्तकौमुद्याः मङ्गलाचरणस्य व्याख्याने सः शङ्कते यद्-

ISSN 2348-7828

**शङ्का**–ननु मध्यगुरुरूपस्य जगणस्य रोगदायकतया कथमस्य मङ्गलत्वम्[5] । छन्दःशास्त्रे अष्टौ त्रिकाः त्र्यवयवाः गणाः भवन्ति । त्रयाणां वर्णानां समूहः गणशब्देन व्यपदिश्यते । अर्थात् त्रिभिः त्रिभिः अक्षरैः एकः गणः भवति छन्दःशास्त्रे । गणानां स्वरूपमेवमुच्यते –

**मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः।**
**जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः[6]।।**

अस्मिन् श्लोके जगणस्य विषये उक्तं जो गुरुमध्यगतः इति। जो = जगणः (नामैकदेशे नामग्रहणम् इति न्यायेन जो इत्यनेन जगणः गृह्यते) गुरुमध्यगतः अर्थाद् यत्र मध्ये स्थितः वर्णः गुरुः स्यात् सः जगणः = ।ऽ। इति। एवं च वैयाकरणसिद्धान्तकौमुद्याः मङ्गलाचरणे – मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च[7] इति श्लोकार्धे मुनित्रयम् इति पदे जगणः भवति। मुनित्रयम् इत्यत्र हि तेरेफयोः संयोगात् संयोगे गुरु (1.4.11) इति पाणिनीयसूत्रेण नि इत्यस्य गुरुसंज्ञा अतः नि इति गुरुवर्णः। मध्यगुरूरूपत्वादस्य जगणत्वम्। जगणश्च रोगदायकः दुष्टः गणः वर्तते। छन्दःशास्त्रे प्रतिगणं तस्य स्वरूपम्, देवता, तत्फलम्, मित्रादिसंज्ञाश्च वर्णिताः वर्तन्ते तत्तद्ग्रन्थेषु। तद्यथा–

**मो भूमिस्त्रिगुरुः श्रियं दिशति यो वृद्धिं जलं चादिलो**
**रोऽग्निर्मध्यलघुर्विनाशमनिलो देशाटनं सोऽन्त्यगः।**
**तो व्योमान्त्यलघुर्धनापहरणं जोऽर्को रुजं मध्यगो**
**भश्चन्द्रो यश उज्ज्वलं मुखगुरुर्नो नाक आयुस्त्रिलः[8]।।**

अस्मिन् श्लोके जगणस्य विषये उक्तम् – जोऽर्को रुजं मध्यगः इति । अर्थाद् जगणस्य देवता – सूर्यः वर्तते । अस्य फलम् – रुग् = रोगः वर्तते। अतः अयं जगणः दुष्टः गणः इत्युच्यते । काव्यस्य आदौ कस्यापि ग्रन्थस्य च आदौ न तु दुष्टगणाः प्रयोक्तव्याः नैव च अशुभाः वर्णाः। यथा केचन दुष्टाः गणाः तथैव केचन अशुभाः वर्णाः छन्दःशास्त्रस्य तत्तद्ग्रन्थेषु निर्दिष्टाः वर्तन्ते । अस्मिन् प्रसङ्गे वृत्तरत्नाकरस्य सेतुटीकाकारः श्री–भास्करभट्टः वदति यत् – दुष्टा रसतजा यस्माद्धनादीनां विनाशकाः काव्यस्यादौ न दातव्या इति छन्दोविदो जगुः[9]। अस्मिन्नेव प्रसङ्गे वृत्तरत्नाकरस्य नारायणीटीकाकारः श्री–नारायणभट्टः अपि वदति यद् – अथ यदि दैवाद् दुष्टफलो गणः काव्यादौ कृतः, तदा तद्रक्षणार्थं द्वितीयो गणः शोध्यः। तत्र मगण–नगणौ मित्रसंज्ञौ, भगण–यगणौ भृत्यौ, ज–तावुदासीनौ, र–सावरी नीचौ च । तदुक्तम्–

**म–नौ मित्रे भ–यौ भृत्यावुदासीनौ ज–तौ स्मृतौ।**
**र–सावरी नीचसंज्ञौ द्वौ द्वावेतौ मनीषिभिः[10]।। इति।।**

तथा च यदि मित्रगणान्मित्रगणस्तदा समृद्ध्यादि फलम्, मित्रगणाद् भृत्यगणे जयादिशुभम्, मित्रादुदासीने शून्यकम्, मित्राच्छत्रौ बन्धुपीडा,भृत्यान्मित्रे तु सर्वकार्यसिद्धिः, भृत्याद् भृत्ये सर्वो लाभः,भृत्यादुदासीने धननाशः,भृत्याद्वैरिणि शोकः, उदासीनान्मित्रे किंचिदेव कार्यसिद्धिः, उदासीनाद् भृत्ये सर्वे वशाः, उदासीनादुदासीने न शुभं न चाशुभम्,उदासीनाच्छत्रौ स्वजनवैरम्, शत्रोर्मित्रे शून्यम्, शत्रोर्भृत्ये गृहिणीनाशः, शत्रौरुदासीने स्वकुलक्षयः, शत्रोः शत्रौ काव्यनायकनाशो भवति। इति गणयुगफलम्। तदुक्तम्–

**मित्रान्मित्रादयः स्युर्यदि धनमुदयं शून्यकं बन्धुपीडां**
**भृत्यान्मित्रादयश्चेद् धृतिमधिकगुणं हानिशोकौ च कुर्युः।**
**औदास्यार्थाच्च मित्रादय इह कुसुखं धैर्यमीर्ष्यां स्ववैरं**
**शत्रोर्मित्रादयश्चेद् भ्रममथ गृहिणीनाशमाधिं विनाशम्[11]**
**।। इति ।**

उपर्युक्तरीत्या वैयाकरणसिद्धान्तकौमुद्याः रत्नार्णवटीकाकारस्य श्रीकृष्णमित्रस्य आक्षेपः शङ्का वा युक्तियुक्ता एव यद् जगणः रोगदायकः दुष्टः गणः मङ्गलपद्यादौ प्रयुक्तः अतः अस्य मङ्गलत्वं कथमिति। नारायणभट्टानुसारं द्वितीयः गणः अपि शोधितः नास्ति । अतः दोषः वर्तते एव। रत्नार्णवकारेण अस्य समाधानम् उच्यते किन्तु ततः पूर्वं केचन आक्षेपाः तत्र हेतवश्च उक्ताः वर्तन्ते, ते अत्र क्रमशः प्रस्तूयन्ते । तद्यथा –

**प्रथमः आक्षेपः**–रत्नार्णवकारः पूर्वपक्षत्वेन आक्षिपति यत् – न च वर्ण्याभावान् न दोष इति वाच्यम्[12]। अर्थाद् मङ्गलपद्ये कश्चिद् वर्ण्यः नायकादिः न वर्तते वर्तते अतः दोषः अपि नास्ति इति न वक्तव्यम्। अत्र आक्षेपस्य अस्वीकारे रत्नार्णवकारेण हेतुः प्रदीयते।

**हेतुः**–तद्यथा –

**वर्ण्यते नायको यत्र फलन्तद्गतमादिशेत्।**
**अन्यथा तु कृते काव्ये कवेर्दोषावहं फलम्।। इत्युक्तेः।**

अर्थाद् यत्र काव्ये नायकः वर्ण्यते तत्र फलमपि नायकगतं भवति। यत्र च काव्ये कश्चिद् वर्ण्यः नायकादिः वा नास्ति तत्र फलं कविगतं भवति। अस्मिन् सन्दर्भे वृत्तरत्नाकरस्य टीकाकारः नारायणभट्टोऽपि कथयति यद् – इदं च फलं काव्यनायकस्य तत्कर्तुः पठितुर्वा यथायोग्यं व्यस्तं समुचितं वा ज्ञेयम् । यत्र नायकादिभिः प्राचीना देवतादिः स्वकल्पिता वा तत्र कर्तुः श्रोतर्णिां चेत्यादि[13]। अतः अयं प्रथमः आक्षेपः नोचितः।

द्वितीयः आक्षेपः – प्रथमस्य आक्षेपस्य हेतोश्च वर्णनात् परं द्वितीयः आक्षेपः तत्र हेतुश्च प्रदीयते । तद्यथा – न च यावत् काव्यलक्षणाभावाद् नेदं काव्यमिति वाच्यम्[14]। अत्र टीकाकारः पूर्वपक्षत्वेन आक्षिपति यत् सम्पूर्णे वैयाकरणसिद्धान्तकौमुदीग्रन्थे काव्यलक्षणं न घटते केवलं मङ्गलपद्येन अयं काव्यग्रन्थः नास्ति अतः उपर्युक्तः दोषः तु काव्ये एव भवति न तु सर्वत्र इदं यदि उच्यते चेत् तदपि न युक्तियुक्तम्। अत्र हि हेतुः–

हेतुः–द्वितीयस्य आक्षेपस्य निराकरणे हेतुः प्रदीयते रत्नार्णवकारेण। तद्यथा–हीनाङ्गेषु यथा तवेदं शरीरन्दुष्टमित्युच्यते, न तु शरीरमेव नेति। एवं दुष्टस्यापि काव्यत्वे बाधकाभावात् कविकर्म हि काव्यम्[15]। अत्र रत्नार्णवकारः वदति यद् यदि कस्यचिद् जनस्य शरीराङ्गेषु विकारः न्यूनता वा अस्ति तदा तस्य तत्तदङ्गेषु दोषः वर्तते इत्युच्यते, यथा कस्यचिद् नेत्रे यदि दोषः चेत् सः नेत्रेण काणः नेत्रं काणमस्य वा उच्यते न तु सम्पूर्णमपि शरीरं दोषयुक्तमिति काणं वा उच्यते । एवं रीत्या दुष्टस्य अपि काव्यत्वं यतोहि तत्र किमपि बाधकं नास्ति अतः कवेः कर्म काव्यमिति फलति ।

1. समाधानम्–सर्वादौ रत्नार्णवकारेण ननु जगणस्य रोगदायकत्वात् कथमस्य मङ्गलत्वमित्युक्त्वा शङ्का कृता, ततश्च पूर्वपक्षरूपेण आक्षेपद्वयं तस्य निराकरणाय हेतुद्वयं च प्रदत्तम्। सम्प्रति युक्तियुक्तं काव्यलङ्कारकारेण भामहेनोक्तं समाधानमपि प्रदीयते। तद्यथा–मैवम्। मुनिपदोपादानेनात्रादोषात्[16]। तदाहुः –

**देवतावाचका ये च ये च भद्रादिवाचकाः।**
**ते सर्वे नैव दूष्याः स्युर्गणतो लिपितोऽपि च[17]।। इति ।**

अयं श्लोकः काव्यालङ्कारकारस्य भामहस्य इति वदति वृत्तरत्नाकरस्य टीकाकारः श्रीनारायणभट्टः । अनेन अनुमीयते यद् भामहस्य छन्दशास्त्रविषयकः अपि कश्चिद् ग्रन्थः आसीदिति, यश्च सम्प्रति अनुपलब्धः पठनपाठने अप्रचलितो वा भवितुमर्हति ।

ISSN 2348-7828

किन्तु शिष्टोक्तं शास्त्रीयं समाधानं तु वर्तते एव। अस्य तात्पर्यं वर्तते यद्-काव्येषु प्रयुक्ताः ये शब्दाः देवतावाचकाः स्युः (विबुधः,सुरः,अमर्त्यः,अमरः,देवः,शिवः,विष्णुः,हरिः,गणपतिः,उमा इत्यादयः) ते तथा भद्रादिवाचकाः अर्थात् कल्याणसूचकाः मङ्गलसूचकाः च शब्दाः दूष्याः अर्थाद् निन्द्याः दोषयुक्ताः न भवन्ति। श्रीनारायणभट्टोऽपि प्रमाणयति यद् - तथा दुःखदारिर्द्यवाचका दुष्टा शब्दाः काव्यादौ न प्रयोज्याः। अयं च प्रयोगनिषेधः काव्यादौ मुक्तकश्लोके चादौ ज्ञेयः। देवतादिवाचके शब्दे तु गणविचारेऽक्षरविचारे वा दोषाभावः[18]।

अत्र महाकाव्येप्रयुक्तमुदाहरणमपि ददाति श्रीनारायणभट्टः। तद्यथा - माघ-किरातयोर्जगणसंयोगयोः प्रयोगेऽपि श्रीशब्दप्रयोगाद्दोषाभाव इत्यलं भूयसा प्रसक्तेन[19]। अर्थाद् महाकविना माघेन कृते शिशुपालवधनामके महाव्ये-श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि । इति मङ्गलपद्यांशे वंशस्थवृत्तं वर्तते । वंशस्थवृत्तस्यारम्भः जगणादेव भवति इति - जतौ तु वंशस्थमुदीरितं जरौ इति लक्षणादेव ज्ञायते । अत्रापि जगणेनारम्भकारणाद् रत्नार्णवकारेण उक्तः दोषः आपतति किन्तु श्रीशब्दः देवतावाचकः अतः दोषः नास्ति इति वदति काव्यालङ्कारकारः भामहः नाराणभट्टादयश्च । एवमेव किरातार्जुनीयस्य मङ्गलपद्यमपि द्वितीयोदाहरणरूपेण स्वीकर्तुं शक्यते।

निष्कर्षः-रत्नार्णवकारेण श्रीकृष्णमित्रेण वैयाकरणसिद्धान्त-कौमुद्याः मङ्गलपद्यव्याख्याने या शङ्का कृता या च आपत्तिः प्रदर्शिता सा युक्तियुक्ता एव । एवमेव समाधानमपि युक्तियुक्तं महाकविप्रयुक्तं शास्त्रीयमेव प्रदत्तम्। वस्तुतः कौमुद्याः मङ्गलपद्यस्य व्याख्याने एतादृशं व्याख्यानं कौमुद्याः अन्यासु प्रचलितासु सामान्यटीकासु प्रौढटीकासु वा नावलोक्यते। अनेन व्याख्यानेन ज्ञायते यत् टीकाकारस्य ज्ञानं व्याकरणविषयकमेव नापितु छन्दःशास्त्रविषयकं काव्यादिशास्त्र-विषयकमपि वर्तते ।

## पादटिप्पणी

1. गङ्गानाथझापरिसरस्य नूतनमातृकासूचीपत्रम् , क्रमसं.-3036, 3150
2. मातृकासूचीपत्राणां नूतनसूचीपत्रम् ह्.ष्ट.ष्ट -2015) पृ. 95
   सं. व्या. शा. इति., पृ. सं.—602, 534, सं. व्या. शास्त्रेतिहासवि., पृ. 367, सं. वा. बृ. इति. पृ.-230
3. (47435) संख्याका मातृका,के.सं.वि.वि.गङ्गा.परि.मा. सं.प्र.। पृ.-84
4. सि. र. वै. सि. कौ. प्र. भागः, भूमिकायाम् ।
5. र.टी.मा.प्र.गं.झा. पृ.सं. - 1
6. छन्दोमञ्जरी प्र.स्त. पृ.सं- 5
7. वै.सि.कौ. पृ.सं.- 1
8. वृ.र.ना.टी. पृ.सं.- 10
9. वृ.र.सेतुः.टी. पृ.सं.- 11-12
10. वृ.र.ना.टी. पृ.सं.- 11-12
11. तत्रैव
12. र.टी.मा.प्र.गं.झा. पृ.सं. - 1
13. वृ.र.ना.टी. पृ.सं.- 10-11
14. र.टी.मा.प्र.गं.झा. पृ.सं. - 1
15. तत्रैव
16. तत्रैव
17. वृ.र.ना.टी. पृ.सं.- 15
18. तत्रैव पृ.सं.-14-15
19. तत्रैव पृ.सं. - 15

## शब्दसंक्षेपः

1. सं.व्या. शा. इति. - संस्कृतव्याकरणशास्त्रस्य इतिहासः ।
2. सं. व्या. शास्त्रेतिहासवि. - संस्कृतव्याकरणशास्त्रेतिहासविमर्शः ।
3. सं. वा. बृ. इति. - संस्कृतवाङ्मयस्य वृहद् इतिहासः ।
4. के.सं.वि.वि.गङ्गा.परि.मा.सं.प्र.-केन्द्रीयसंस्कृतविश्वविद्यालयः गङ्गानाथझापरिसरःमातृकासंग्रहालयः प्रयागराजः ।
5. सि. र. वै. सि. कौ. प्र.-सिद्धान्तरत्नाकरेणभूषितायाः वैयाकरणसिद्धान्त-कौमुद्याः प्रथमभागः।
6. र.टी.मा.प्र.गं.झा. पृ.सं.-रत्नार्णवटीकामातृका प्रयागराजः गङ्गानाथझापरिसरः।
7. वै.सि.कौ. - वैयाकरणसिद्धान्तकौमुदी।
8. वृ.र.ना.टी. - वृत्तरत्नाकरः नारायणी टीका।

## सहायकसन्दर्भग्रन्थसूची


1. 49347 - इत्यधिगमसंख्याका मातृका, राष्ट्रियसंस्कृतसंस्थानम्, गङ्गानाथझापरिसरः, मातृकासंग्रहालयः, प्रयागराजः।
2. 47435 - इत्यधिगम-संख्याका मातृका, राष्ट्रियसंस्कृतसंस्थानम्, गङ्गानाथझापरिसरः, मातृकासंग्रहालयः, प्रयागराजः।
3. 38010,38450,38540,39305 इत्याद्यधिगमसंख्याकाः मातृकाः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनपुस्तकालयः वाराणसी उत्तरप्रदेशः।
4. 4843/3026 - इत्यधिगमसंख्याकाः मातृकाः ''राजस्थान ओरियन्टल रिसर्च इन्स्टिट्यूट जोधपुर'' संग्रहालयः राजस्थानम्।
5. गङ्गानाथझापरिसरस्य नूतनमातृकासूचीपत्रम्, षष्ठः खण्डः, Descriptive Catalogue of Manuscripts Vyakaran Shiksha Nirukta Kosh (Vol.-VI) Edited by Prof. Sarvanarayan Jha, Dr. Beena Mishra and Dr. Ramkishor Jha First Ed. 2012
6. गङ्गानाथझापरिसरस्य शोधविषयसूचीपत्रम्।
7. चौखम्बासंस्कृतसाहित्यम् (प्रकाशनसूचीपत्रम्) देहली, वाराणसी, 2018-19
8. बालमनोरमागर्भित-तत्त्वबोधिनी-लघुशब्देन्दुशेखरयोस्तुलनात्मक-मध्ययनम्, डॉ. हरिकृपालु त्रिपाठी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, प्रथमसं.-2007
9. मातृकासूचीपत्राणां नूतनसूचीपत्रम् New Catalogus Catalogorum (NCC) Vol.&&&i&, University of Madras-2015
10. श्रीमन्नागेशभट्टः, लघुशब्देन्दुशेखरः, 'श्री'- हिन्दिव्याख्योपेतः, व्याख्याकारः- डा. जयकान्तसिंहशर्मा, प्रथमसंस्करणम्- 1998
11. सिद्धान्तरत्नाकरेणभूषितायाः वैयाकरणसिद्धान्तकौमुद्याः प्रथमभागः, प्रो. आजादमिश्रः (मधुकरः) केन्द्रियसंस्कृतविद्यापीठम् , लखनऊ, प्रथमसं.-1995
12. सिद्धान्तरत्नाकरेणभूषितायाः वैयाकरणसिद्धान्तकौमुद्याः द्वितीयभागः, प्रो. आजादमिश्रः (मधुकरः) रा.सं.सं.मा.वि.भोपालपरिसरः, प्रथमसं.-2009।
13. सिद्धान्तरत्नाकरेण भूषितायाः वैयाकरणसिद्धान्तकौमुद्याः तृतीयभागः, प्रो. आजादमिश्रः (मधुकरः) सत्यम् पब्लिशिंग हाउस, दिल्ली, प्रथमसं. - 2016
14. वृत्तरत्नाकरः सेतु-नारायणी-बालक्रीडात्रयोपेतः,सम्पादकः आचार्यः मधुसूदनः शास्त्री,कृष्णदास-अकादमी, वाराणसी,प्रथमसं.-1982
15. वैयाकरणसिद्धान्तकौमुदी, बालमनोरमातत्त्वबोधिनीसहिता (कारकप्रकरणान्ता) गिरिधरशर्माचतुर्वेदः, परमेश्वरानन्दशर्माविद्याभास्करः, मोतीलाल बनारसीदास, वाराणसी, सं. - 2001
16. अन्तर्जालसङ्केतसूची-Internet ArchiveÑ Digital Library of Free & Borrowable Books ...httpsÑ//archive.org
17. httpÑ//ignca.gov.in/en/
18. httpsÑ//www.namami.gov.in/
19. httpsÑ//sanskritlibrary.org/
20. httpÑ//www.sanskrit.nic.in/DigitalBook/inde&.htm


*केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीरघुनाथकीर्तिपरिसरः*
*देवप्रयागः, उत्तराखण्डः-249301*

ISSN 2348-7828

# द्वितीयमिथ्यात्वलक्षणम्

के. मनोग्ना

**उपक्रमः**

''एकमेवाद्वितीयम्''[1] इत्यादिश्रुतिप्रतिपाद्यं ब्रह्मणः अद्वितीयत्वं प्रत्यक्षादिप्रमाणैः दृश्यमानस्य प्रपञ्चस्य मिथ्यात्वे एव सिद्ध्यतीति हेतोः प्रपञ्चस्य मिथ्यात्वं श्रुत्यनुमानादिभिः अनेकैः प्रमाणैः अद्वैतवेदान्तिभिः निरूप्यते । तत्र तावद् मिथ्यात्वं नाम किमिति अध्यवसेयम्। विभिन्नाचार्यैः मिथ्यात्वलक्षणानि प्रदर्शितानि। तेषु पञ्चमिथ्यात्वलक्षणानि सुप्रसिद्धानि। तदुक्तं -

**आद्यं स्यात्पञ्चपाद्योक्तं ततो विवरणोदिते।**
**चित्सुखीयं चतुर्थं स्यादन्त्यमानन्दबोधजम्।।** इति।

तेषु मिथ्यात्वलक्षणेषु द्वितीयमिथ्यात्वलक्षणं सम्प्रति अनतिविस्तरेण विविच्यते।

तथा हि विवरणे ''प्रतिपन्नोपाधावभावप्रतियोगित्वमेव मिथ्यात्वम्''[2], ''बाधकज्ञानसिद्धस्य प्रतिपन्नोपाधावभावप्रतियोगित्व-लक्षणस्य मिथ्यात्वस्य''[3] इत्यादिकमुक्तम्।''नेह नानास्ति किञ्चन''[2] इतिश्रुत्यर्थम् अधिकृत्य पञ्चपादिकाविवरणकारेण प्रकाशात्मयतिना उपस्थापितमदं द्वितीयमिथ्यात्वलक्षणम्।

**न इह नाना अस्ति किञ्चन**

इह = दृश्यतादात्म्यापन्नब्रह्मणि
नाना = ब्रह्मभिन्नम्
किञ्चन = वस्तुसामान्यम्
न = अत्यन्ताभावप्रतियोगितया अन्वयः
अस्ति = अस्तित्वक्रिया

दृश्यतादात्म्यापन्नब्रह्मणि अस्तित्वविशिष्टब्रह्माभिन्नवस्तु-सामान्याभावः इत्यर्थः।

लक्षणम् - प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्।

प्रतिपन्नः - स्वप्रकारकप्रतीतिविशेष्यः (प्रतीतिः - ज्ञानं - प्रमा/ भ्रमः)।

उपाधौ-उपाधिनिष्ठः (सप्तम्याः वृत्त्यर्थत्वं)- अधिकरणनिष्ठः (उपाधिः = अधिकरणम्)।

त्रैकालिकनिषेधः-अत्यन्ताभावः(संसर्गाभावः)। अनेन ध्वंसप्रागभावयोः व्यावृत्तिः।

अर्थात् प्रतिपन्नं स्वप्रकारकप्रतीतिविशेष्यं यदधिकरणं तन्निष्ठः(तत्र विद्यमानः) यः अत्यन्ताभावः तस्य प्रतियोगित्वं मिथ्यात्वम्।(स्वपदेन मिथ्यात्वेन अभिमतं रजतादिकं नेतव्यम्)

**शुक्तिरजते लक्षणसमन्वयः-**

स्वप्रकारकप्रतीतिः रजतप्रकारकप्रतीतिः (रजतं प्रकारः यस्यां सा प्रतीतिः) 'इदं रजतम्' इत्याकारकप्रतीतिः , तत्प्रतीतिविशेष्यः इदंपदार्थः शुक्तिः वा अधिकरणं , तन्निष्ठः शुक्तिनिष्ठः यः अत्यन्ताभावः रजताभावः , तस्य अभावस्य प्रतियोगि रजतं , तत्प्रतियोगित्वं च रजते अस्तीति लक्षणसमन्वयः।

मिथ्यात्वलक्षणघटकीभूतस्य अत्यन्ताभावस्य का सत्ता ?

**पूर्वपक्षः**

| सत्ता | पारमार्थिकी | व्यावहारिकी | प्रतिभासिकी |
|---|---|---|---|
| दोषाः | अद्वैतहानिः | अर्थान्तरम्<br>श्रुतेः अतत्त्वावेदकत्वम्<br>प्रपञ्चस्य पारमार्थिकत्वापत्तिः | सिद्धसाधनम् |

यदि प्रपञ्चनिषेधः(प्रपञ्चात्यन्ताभावः)

* पारमार्थिकः तर्हि-

पारमार्थिकत्वम् = त्रिकालाबाध्यत्वम्

अद्वैतहानिः - ब्रह्म प्रपञ्चनिषेधश्चेति परमार्थिकपदार्थद्वये सति ब्रह्मणः अद्वितीयत्वं हीयते।

* व्यावहारिकः तर्हि-

व्यावहारिकत्वम् = ब्रह्मप्रमातिरिक्तह्य-बाध्यत्वम् = ब्रह्मज्ञानबाध्यत्वम्

1. अर्थान्तरम्-प्रपञ्चनिषेधः व्यावहारिकत्वेन बाध्यमानम् ।अतः स निषेधः स्वप्रतियोगिनः प्रपञ्चस्य त्रैकालिकसत्त्वविरोधि न भवितुमर्हति। तेन प्रपञ्चस्य तात्त्विकत्वं तदवस्थमेवेति अर्थान्तरम्। [अर्थान्तरम् = अभिमतार्थासिद्धिः / अनभिमतार्थसिद्धिः]
2. अद्वैतश्रुतेः अतत्त्वावेदकत्वम्-''नेह नानास्ति किञ्चन'' इति श्रुतिः अतात्त्विकं बाध्यमानं प्रपञ्चनिषेधं बोधयति , न तु तात्त्विकमर्थमित्यतः अस्याः श्रुतेः अतत्त्वावेदकत्वं अप्रामाण्यमित्यर्थः। [ तत्त्वादेकत्वम् = तत्त्वं पारमार्थिकं आवेदयति बोधयति यत् तत् तत्त्वावेदकं, तस्य भावः तत्त्वावेदकत्वम्]
3. प्रपञ्चस्य पारमार्थिकत्वम्-

ब्रह्मप्रमातिरिक्तप्रमया अबाध्यः प्रपञ्चः, अतः न प्रातिभासिकः प्रपञ्चः।भावाभावयोः समसत्ताकयोः एकाधिकरणत्वे विरोधः।तस्मात् प्रपञ्चनिषेधस्य व्यावहारिकत्वे सति प्रपञ्चस्य व्यावहारिकत्वं न युज्यते। तेन परिशेषात् प्रपञ्चस्य पारमार्थिकत्वमेव आपन्नम्।

* प्रातिभासिकः तर्हि-

प्रातिभासिकत्वम्= ब्रह्मप्रमातिरिक्त-प्रमाबाध्यत्वम्

सिद्धसाधनम्-निषेधस्य प्रातिभसिकत्वेन बाध्यमानत्वात् न प्रपञ्चसत्यत्वविरोधि। तत्तु पूर्वपक्षस्य जगत्सत्यत्ववादिन: मते सिद्धमेव इति सिद्धसाधनम्। [सिद्धसाधनम् = परमते लोके वा सिद्धस्यैव अर्थस्य पुनस्साधनम्]

दोषाश्रितत्वात् नेदं मिथ्यात्वलक्षणं युक्तमिति पूर्वपक्ष्याशय:।

**सिद्धान्त:**

उक्तदोषै: न संसृष्टमिदं लक्षणम्। तथा हि-

* पारमार्थिकत्वे न अद्वैतहानि:-

प्रपञ्चनिषेधस्य अधिकरणं ब्रह्म, समस्तदृश्यानां ब्रह्मणि अध्यस्तत्वात्। अभावस्य च अधिकरणस्वरूपत्वाभ्युपगमात् तात्त्विक: निषेध: न ब्रह्मण: भिन्न इति न अद्वैतहानि:।

* व्यावहारिकत्वे च

1. न अर्थान्तरम्-स्वप्नार्थस्य स्वप्ननिषेधेन बाधदर्शनात्। यथा स्वप्नार्थस्य प्रातिभासिकस्य गजादे: स्वप्ने एव आरोपितेन प्रातिभासिकेन तन्निषेधेन बाधे सति तेषां गजादीनां मिथ्यात्वव्यवहार: एव, न तु सत्यत्वमापन्नम्। तथैव व्यावहारिकप्रपञ्चस्य व्यावहारिकनिषेधेन बाधे सति तस्य प्रपञ्चस्य मिथ्यात्वव्यवहार: युज्यते, न तु सत्यत्वापत्ति:। प्रपञ्चतन्निषेधयो: उभयोरपि व्यावहारिकत्वाभ्युपगमात् विरोध: भवति।

**निषेध्यपेक्षया नेषधस्य न्यूनसत्ताकत्वं पारमार्थिकसत्त्वाविरोधित्वे तन्त्रम्**

निषेध: प्रतियोग्यपेक्षया न्यूनसत्तावान् चेत् तदैव स: निषेध: प्रतियोगिन: पारमार्थिकसत्त्वस्य विरोधि न भवति। अन्यथा अधिकसत्ताकत्वे समानसत्ताकत्वे च स: निषेध: प्रतियोगिपारमार्थिकसत्त्वस्य विरोधि भवत्येव।

2. अद्वैतश्रुते: अतत्त्वावेदकत्वं नास्ति - ब्रह्मभिन्नं प्रपञ्चतन्निषेधादिकं अतात्त्विकं अतात्त्विकत्वेनैव बोधयति श्रुति: । यद् यथास्ति तद् तथैव बोधयति, न तु अन्यथेत्यत: न अतत्त्वावेदकत्वं श्रुते:। तद्वति तत्प्रकारकबोधजनकत्वरूपं व्यावहारिकप्रामाण्यमस्ति । [तद्वति तद्बोधकत्वमेव तत्त्वावेदकत्वम्/प्रामाण्यम्]

3. प्रपञ्चस्य न पारमार्थिकत्वापत्ति:-ब्रह्मप्रमाबाध्यत्वेन प्रपञ्चस्य व्यावहारिकत्वाङ्गीकारात्। समानाधिकरणे भावाभावयो: असमसत्ताकत्वनियम: स्वप्ने व्यभिचर्यते, स्वप्नपदार्थतन्निषेधयो: उभयोरपि स्वप्ने उपलम्भात्। अत: प्रपञ्चनिषेधस्य व्यावहारिकत्वेऽपि प्रतियोगिन: प्रपञ्चस्य व्यावहारिकत्वमुपपद्यते।

* प्रातिभासिकत्वं प्रपञ्चनिषेधस्य सिद्धान्तिना नाभिमन्यते।

तथा च मिथ्यात्वलक्षणे उक्तदोषाप्रसक्ति:।

प्रपञ्चात्यन्ताभावप्रतियोगित्वं केन रूपेण? स्वरूपेण वा पारमार्थिकत्वेन?

| | |
|---|---|
| स्वरूपेण = प्रपञ्च: स्वरूपेणैव नास्ति मरीच्युदकवत्। | पारमार्थिकत्वेन = व्यावहारिक: प्रपञ्च: विद्यते, प्रपञ्चस्य पारमार्थिकत्वमात्रं निषिध्यते। |

**पूर्वपक्ष:**

1. स्वरूपेण प्रपञ्चनिषेध: न सम्भवति , व्यवहारकाले विद्यमानत्वात्। यदि स्वरूपेणैव निषिध्यते तर्हि खपुष्पवत् असत्त्वापत्ति:। अत एव पारमार्थिकत्वेन वेति द्वितीय: विकल्प: दर्शित:।

2. असद्विलक्षणत्वं प्रपञ्चस्य अभ्युपगम्य स्वरूपेण न प्रपञ्चनिषेध: , अपि तु स्वरूपेण विद्यमानस्य प्रपञ्चस्य पारमार्थिकतामात्रं निषिध्यते इत्युच्यते चेदपि न , अन्योन्याश्रयत्वदर्शन्त्। तद्यथा-

मिथ्यात्वम् = बाध्यत्वम्

पारमार्थिकत्वम् = अबाध्यत्वम्

पारमार्थिकत्वम्

न अबाध्यत्वम् न बाध्यत्वम्

मिथ्यात्वम्

अबाध्यत्यत्वरूपेण पारमार्थिकत्वाकारेण प्रपञ्चस्य निषेधप्रतियोगित्वं , तच्च पारमार्थिकत्वं बाध्यत्वरूपेण मिथ्यात्वेन निरूप्यमित्यन्योन्याश्रयदर्शनात् । पारमार्थिकत्वस्य निर्धर्मके ब्रह्मण्यसम्भाविततया ब्रह्मभिन्नत्वेन अपारमार्थिकत्वमेव अत: तस्यापि मिथ्यात्वमनुमेयम् । तन्निषेधप्रतियेगित्वमपि यदि स्वरूपेणावच्छिद्येत, तदा पारमार्थिकत्वस्यापि अत्यन्तासत्त्वापति: स्यात् । तदसत्त्वापत्तिं परिहर्तुं पारमार्थिकतया पारमार्थिकत्वस्य निषेधे सति अनवस्था भवति।

**सिद्धान्त:**

स्वरूपेणैव त्रैकालिकनिषेधप्रतियोगित्वं प्रपञ्चे शुक्तिरूप्ये च । 'नेदं रजतम्' इति बाधकज्ञानेन रजतबाधानन्तरं रजतं शुक्तौ नासीत् , नास्ति, न भविष्यति इति कालत्रयेऽपि स्वरूपेण निषेध: । तद्वत् 'नेह नानास्ति' इति श्रुत्यापि स्वरूपेण प्रपञ्चस्य निषेध: बोध्यते।

मिथ्यात्वलक्षणघटकात्यन्ताभावप्रतियोगि क: ?[ नेदं रजतमिति बाधकज्ञानेन शुक्तौ कस्य निषेध: इत्यर्थ:]

| पूर्वपक्ष: | सिद्धान्त: |
|---|---|
| व्यावहारिकं आपणस्थं रजतम् | व्यावहारिकरजततादात्म्येन प्रतीतं प्रातिभासिकं रजतम् |

**व्यावहारिकरजतस्य निषेधप्रतियोगित्वे -**

1. भ्रमबाधयोर्वैयधिकरण्यापत्ति:-'इदं रजतं' इति भ्रमज्ञानविषयीभूतं रजतं प्रातिभासिकं , 'नेदं रजतं' इति निषेधज्ञानविषयीभूतं तु व्यावहारिकं रजतमिति भ्रमबाधज्ञानयो: भिन्नविषयत्वात् वैयधिकरण्यापत्ति: । [वैयधिकरणापत्ति: =विविधं भिन्नं अधिकरणं यत्र तत् व्यधिकरणम् ; व्यधिकरणस्य भाव: वैयधिकरण्यम् , असमानाधिकरणत्वमित्यर्थ:]

ISSN 2348-7828

2. अप्रसक्तप्रतिषेधापत्तिः – शुक्तौ व्यावहारिकं रजतं न प्रसक्तमिति अप्रसक्तस्य व्यावहारिकरजतस्य शुक्तौ निषेधे सति अप्रसक्तप्रतिषेधापत्तिः भवति । [अप्रसक्तप्रतिषेधः = यद् यत्र न प्रसक्तं, तस्य प्रतिषेधः]

शुक्तौ प्रवृत्तिदर्शनात्, प्रवृत्तिश्च व्यावहारिके अर्थे एव संभवात्, व्यावहारिकरजततादात्म्येन (तदभिन्नतया) प्रतीतस्य प्रातिभासिकस्य रजतस्य निषेधप्रतियोगित्वमभ्युपगतम्।

व्यावहारिकरजततादात्म्येन प्रतीतं प्रातिभासिकं रजतमेव निषेधप्रतियोगीति अभ्युपगन्तव्यम् । तेन भ्रमबाधकयोः ज्ञानविषययोः अभिन्नत्वे सति न व्यधिकरणापत्तिः, प्रसक्तस्यैव प्रातिभासिकरजतस्य निषेधात् नापि अप्रसक्तप्रतिषेधापत्तिश्च।

प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वे घटादीनां अन्यत्रापि तन्निषेधप्रतियोगित्वात् असत्त्वापत्तिः इति चेन्न । असत्त्वं हि क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वम्, यथा शशशृङ्गादिः सत्त्वेन क्वचिदपि न प्रतीयन्ते । तच्च प्रपञ्चे नान्वेति, बाधात् प्राक् तस्य सत्त्वेन प्रतीयमानत्वात् । एतदेव लक्षणे उपाधिपदेन सूचितम् । यद्यपि शून्यवादिभिरपि त्रैकालिकनिषेधप्रतियोगित्वमभिधीयते तथापि तैः सदधिष्ठानस्य अनङ्गीकारात् नास्य शून्यत्वप्रसङ्गः।

**उपसंहारः**

विवरणकारोदितं लक्षणमिदम् अतिमहत्त्वं भजते। ''ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगी न वा ? पारमार्थिकत्वाकारेणोक्तनिषेधप्रतियोगी न वा ?''[5] इति मिथ्यात्वविप्रतिपत्तिवाक्येऽपि अस्यैव लक्षणस्य ग्रहणं दृश्यते। यस्मिन्नधिकरणे यद् प्रतीतं तस्मिन्नेवाधिकरणे तस्य प्रतीतस्य त्रैकालिकनिषेधं ब्रुवन् तस्य मिथ्यात्वं साधयतीदं लक्षणम्। द्वैतवादिना व्यासतीर्थेन आक्षिप्तानां समस्तदोषानां परिहारं कृत्वा द्वितीयमिथ्यात्वलक्षणम् अनवद्यमिति न्यरूपी आचार्यः मधुसूदनसरस्वतिः। तदाचार्यप्रणीतं अद्वैतसिद्धिनामकं ग्रन्थमधिकृत्य इत्थं द्वितीयमिथ्यात्वलक्षणं सदलं संक्षेपेणोपपादितमत्र।

## सहायकग्रन्थसूची


1. मधुसूदनसरस्वती, अद्वैतसिद्धिः।
2. योगीन्द्रनाथः, अद्वैतसिद्धिबालबोधिनी।
3. शङ्कराचार्यः, छान्दोग्योपनिषद्भाष्यम्।
4. शङ्कराचार्यः, बृहदारण्यकोपनिषद्भाष्यम्।
5. प्रकाशात्मा, पञ्चपादिकाविवरणम्।


## पादटिप्पणी

1. छान्दोग्योपनिषद् 6.2.1
2. पञ्चपादिकाविवरणम्
3. तत्रैव
4. बृहदारण्यकोपनिषद् 4.4.19
5. अद्वैतसिद्धिः 1.11

*सहायकाचार्या (अतिथिः), अद्वैतवेदान्तविभागः,*
*केन्द्रीयसंस्कृतविश्वविद्यालयः वेदव्यासपरिसरः*

ISSN 2348-7828

# प्रकृतिपुरुषयोः स्वरूपपर्यालोचने आरोपतत्त्वविमर्शः

डॉ. निताई पाल

**प्रस्तावना**–सौन्दर्यस्य भित्तिरूपेण आरोपः स्वीकृतः। आरोपेण कविकल्पनं सहृदयग्राह्यं भवति। यस्मिन् यो धर्मः नास्ति तत्र तद्धर्मस्य कल्पनम् आरोपशब्देन कथ्यते। ईश्वरस्य जगत् नियमेन परिचालितम्। अतः ईश्वरस्य जगत् सीमितम्। अतः ब्रह्मसृष्टे जगति सरोजस्य उत्पत्तिः केवलं सरोवरे सम्भवति। किन्तु कविकल्पने वदने कमलस्य उत्पत्तिः सम्भवति। अर्थात् वदने कमलस्य आरोपः भवति। आरोपस्य स्वरूपविषये अलंकारसर्वस्वम् इति ग्रन्थस्य पर्यालोचनायां दृश्यते ''तस्मात् तद्धर्मादिप्रतिपत्यर्थः सामानाधिकरण्यनिर्देश एवारोपः।'' इति।[1] आ–पूर्वकात् रुह्–धातोः णिच्–प्रत्ययेन करणवाच्ये आरोपः इति पदं निष्पन्नम्। अनया व्युत्पत्त्या अन्यपदार्थे अन्यधर्मस्यावभासरूपं मिथ्याज्ञानं बोध्यते।[2] यस्मिन् पदार्थे यो धर्मः नास्ति तत्र तद्धर्मस्य चिन्तनम् आरोपः कथ्यते। यथा ''चन्द्रइवमुखम्'' इत्यत्र प्रकृतविषयो भवति मुखम्, तत्र मुखे सादृश्यवशात् चन्द्रस्य आरोपः क्रियते। आरोपस्य अर्थविषये विविधेषु कोषग्रन्थेषु अपि चर्चा दृश्यते। यथा महामहोपाध्यायेन भीमाचार्येण विरचिते न्यायकोशे आरोपस्यार्थकथने दृश्यते ''भ्रमवदस्यार्थोऽनुसंधेयः''[3] इति।वेदान्तदर्शनस्य अध्यासभाष्ये आरोपस्य सुष्पष्टस्वरूपं दृश्यते। अधीत्युपसर्गपूर्वकाद् दिवादिगणीयात् अस् धातोः घञ्प्रत्यये अध्यासपदं निष्पद्यते। अधीत्यस्य उपरि इत्यर्थः। अस्–घातुः क्षेपणार्थे वर्तते, 'असु क्षेपणे' इति धातुपाठात्। घञ्प्रत्ययः भावार्थे कर्माथे च वर्तते। एकस्य वस्तुनः उपरि अपरस्य वस्तुनः (भ्रमवशात्) क्षेपणस्य, (भ्रमवशतः) क्षिप्तस्य अपरस्य वस्तुनः वा अध्यासपदेन ग्रहणं भवति व्युत्पत्तिवशतः। तथाहि भावार्थे घञ्–प्रत्यये निष्पन्नस्य अध्यासपदस्य अर्थस्तावत् अध्यारोपणक्रिया। कर्मवाच्ये घञ्–प्रत्यये निषपन्नस्य अध्यसपदस्य अध्यारोपितं वस्तु एवार्थः। यथा रज्जौ भ्रमवशात् यत् सर्पज्ञानं जा आरोपस्य तत्त्वमिति विग्रहे षष्ठीतत्पुरुषसमासे आरोपतत्त्वमिति पदं निष्पद्यते। आरोपतत्त्वस्य विमर्श इति षष्ठीसमासेनारोपतत्त्वविमर्श इति रूपम्। अस्य निर्देशस्य प्रयोजनं हि तत्रोपमेये उपमानगतधर्मस्य प्रतिपत्तिः सिद्ध्यति। प्रतिपत्तिरिति पदेन ज्ञानं निर्दिश्यते। यते तदपि अध्यासपदवाच्यम्, रज्जौ यस्य सर्पस्य ज्ञनं भवति सः सर्पोऽपि अध्यासपदवाच्यः। ''विमर्शः'' इति पदेन विचारो बोध्यः।

वि–पूर्वकात्मृश्–धातोः घञ्–प्रत्ययेन विमर्शः इति पदं निष्पन्नम्। वि–इत्यनेन विशिष्टम्, मृश–धातुना ज्ञानम्, घञ्–प्रत्ययेन भावश्च बोध्यते। तस्मात् विमर्श इति पदं विशिष्टज्ञानार्थकं भवति। ज्ञानं सदैव सविषयकं भवति। आरोपतत्त्वमत्र विषयः। अत आरोपतत्त्वविमर्शशब्दस्यार्थ आरोपतत्त्वविषयकं विशिष्टज्ञानम्। अनया व्युत्पत्त्या ज्ञानमेव सूच्यते, न तु ग्रन्थः। अत्रानेन पदेन लक्षणया सजनकत्वसम्बन्धेन ग्रन्थस्यापि बोधो भवति। ''विमर्शः'' इति पदं घञ्–प्रत्ययेन करणवाच्ये अपि निष्पादयितुं शक्यते। तदा आरोपतत्त्वविमर्शशब्देन आरोपतत्त्वविषयकज्ञानसाधनमिति बोध्यते। अनया व्युत्पत्त्या तु आरोपतत्त्वविमर्शपदेन शोधकार्यग्रन्थस्य बोधो भवति।

**शब्दसंकेतः**–

* पुरुषस्य भोक्तृत्वे आरोपतत्त्वम्
* पुरुषस्य बहुत्वे आरोपतत्त्वम्
* पुरुषस्य स्वरूपविचारे आरोपतत्त्वम्
* प्रकृतेः बन्धनमुक्तयोः वर्णनायामारोपतत्त्वम्
* पुरुषस्य स्वस्वरूपावस्थाने आरोपतत्त्वम्

भारतीयास्तिकदर्शनेषु सांख्यदर्शनमन्यतमम्। सांख्यदर्शनं योगदर्शनञ्च समानतन्त्ररूपेण समुपलभ्यते। सांख्यदर्शनस्य ञ्चसांख्य' इति शब्दः संख्याशब्दात् आगतः। तत्त्वानां संख्यागणनया ज्ञानार्जनमस्य दर्शनस्य प्रधानविषयः। भारतवर्षस्य प्राचीनतमं दर्शनं सांख्यदर्शनम्। सांख्यशब्दस्यार्थः सम्यग्ज्ञानम्। प्रकृतिपुरुषयोः भेदवर्णनया आत्मनः स्वरूपं कथ्यते यस्मिन् दर्शने तदेव सांख्यदर्शनम्। कपिलमुनिना सांख्यदर्शनं प्रवर्तितम्। सांख्यदार्शनिकाः पञ्चविंशतितत्त्वानि स्वीकुर्वन्ति। तेषु पञ्चविंशतितत्त्वेषु प्रधानतया प्रकृतितत्त्वस्य, पुरुषतत्त्वस्य, कैवल्यतत्त्वस्य च पर्यालोचनायामारोपतत्त्वं समुपलभ्यते।

सांख्यदर्शनशास्त्रे स्वीकृतेषु पञ्चविंशतितत्त्वेषु पुरुषतत्त्वं न प्रकृतिः न विकृतिः इत्यनेन समुपस्थापितम्। प्रकृतिशब्दस्यार्थः कारणं भवति। अन्यत्र विकृतिशब्दस्यार्थः कार्यं भवति। सांख्यदर्शनानुसारेण पुरुषः यथा कारणं न भवति, तथैव कार्यः अपि न भवति। पुरुषः अपरिणामिरूपेण अपरिवर्तनीयरूपेण वा समुपलभ्यते। न्यायवैशेषिकदर्शनानुसारेण पुरुषस्य स्वरूपं चैतन्यमयिरूपेण दृश्यते। चैतन्यं पुरुषस्य स्वभाविको धर्मः भवति। अत्र एव अद्वैतवेदान्तदर्शनेन सह सांख्यदर्शनस्य मतसादृश्यं परिलक्ष्यते। तथाहि ईश्वरकृष्णेन कथ्यते– 'व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्॥'

॥ पुरुषस्य भोक्तृत्वे आरोपतत्त्वम्॥

ईश्वरकृष्णेन पुरुषस्यास्तित्वप्रतिपादनाय इयं कारिका सूत्रिता –

**''संघारपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥''**[४]

इति।

''भोक्तृभावात्'' इत्यत्र आपोपतत्त्वं परिलक्षितम्। केनचित् कर्त्रा सुखदु:खविषयादीनां बोध: उपलभ्यते। काचित् अभिज्ञता कर्तु: अभिज्ञता। कर्ता एव सर्वामभिज्ञतां चिन्तयति। प्रकृत्या वा प्रकृतिपरिणामिना जागतिकवस्तूनामभिज्ञता न सम्भवति। यत: प्रकृति: प्रकृतिपरिणामिपदार्थ: च अचेतनो भवति। व्यक्तपदार्थेन यथा अव्यक्तस्य भोग: न सम्भवति, तथैव अव्यक्तेन व्यक्तस्य भोग: अपि न समुपजायते। अत: कस्यापि भोक्तु: अस्तित्वं स्वीकरणीयम्। अचेतनस्य भोगसामर्थ्यं नास्ति। सुखादीनामनुभूति: चेतनपदार्थेन एव गृह्यते। येन चेतनेन सुखदु:खादीनां भोग: समुत्पद्यते, स एव पुरुष:। चेतनसत्ताया: वस्तुजगत्सम्बन्धिताभिज्ञता भोगशब्दवाच्या भवति। अत: प्रकृतिजातानि वस्तूनि भोग्यम्, दृश्यम्, ज्ञेयञ्च भवन्ति। पुरुषस्यास्तित्वसिद्धे: पूर्वं भोक्तृत्वधर्म: कथं पुरुषस्यास्तित्वे हेतु: भवति इति शङ्कायाम् उच्यते, भोक्तृभावशब्देन भोग्यसुखदु:खादीनां बोध: समुपजायते। आत्मा भोग्यरूपं सुखदु:खमनुभवति। सुखं ज्ञातु: अनुकूलवेदनीयं भवति, अन्यत्र दु:खं ज्ञातु: प्रतिकूलवेदनीयं भवति। भोग्यरूपं सुखं दुखञ्च बोधयितुं भोक्तु: अस्तित्वं स्वीकरणीयम्। भोग्यपदार्थ: कदापि भोक्ता न भवति। अयं पुरुष एव भोक्ता इति समुपपद्यते। अनुकूलवेदनीयं सुखं भवति, प्रतिकूलवेदनीयं दु:खं भवति। अनेन नियमेन महत्तत्त्वस्यापि सुखादीनां भोकृत्वविषये शङ्का समुपजायते। तेन अतिरिक्तस्य पुरुषस्वीकारस्य प्रयोजनं नास्ति। तत्रोच्यते यदि पुरुषस्यास्तित्वं न स्वीक्रियते तर्हि कर्तृकर्मविरोध: समुपपद्यते। कर्तृत्वं कर्मत्वञ्च एकस्मिन् अधिकरणे कदापि न तिष्ठति। सुखदु:खादीनां भोक्तृरूपेण पुरुष: अवश्यमेव स्वीकरणीय:। अत: पुरुष: भोक्ता भवति न वा इत्यस्मिन् विषये संशये समुत्पन्ने विचारस्य प्रयोजनं समुपलब्धम्। अत: सांख्यमतानुसारेण पुरुष: सुखदु:खादीनां भोक्ता इति प्रतिपद्यते। अत: प्रश्न: जायते सुखभोगेण सह आसक्ते: सम्बन्ध:, दु:खभोगेण सह द्वेषस्य सम्बन्ध: च वर्तते, तर्हि कथं पुरुषस्य अपरिणामित्वं प्रतिपादितम्? अत: सांख्यदर्शनानुसारेण पुरुषस्य भोक्तृत्वं न प्रतिपादितम्। पुरुष: भोगादिना सह सम्बध्यते। बन्धनेन सह भोग: जायते, तत: संसार: भवति। यदि पुरुषस्य भोग: सम्भवति तर्हि बन्धनं संसारश्चेति अवश्यमेव स्वीकरणीयम्। ईश्वरकृष्णेन अन्यत्रापि गद्यते –

**''तस्मात् न बध्यते अध्वा न मुच्यते नापि संसारति कश्चित्।''**[5] इति।

अर्थात् कस्यापि पुरुषस्य बन्धनम्, मुक्ति:, संसारश्चेति न भवन्ति। सांख्यनये यदि पुरुष: अकर्ता भवति, तर्हि पुरुषस्य भोक्तृत्वं गदनीयं न वा इति विचारणीयम्। तत्रोच्यते ''अकर्तृभावश्च'' इति। य: निष्क्रिय: स कदापि कर्ता न भवति। अप्रसवधर्मिन: पुरुषस्य कर्तृत्वं न सिद्धम्। अविवेकिपदार्थस्य कर्तृत्वं प्रतिपादितम्। पुरुष: अविवेकिवस्तुन: विपरीतधर्मिरूपेण दृश्यते। अत: यदि पुरुषस्य अकर्तृत्वं सिद्धान्तितम्, तर्हि तस्य भोक्तृत्वं न प्रतिपादितमिति मतम्। सांखदर्शनानुसारेण तत्त्वद्वयं स्वीकार्यं यथा प्रकृति: पुरुषश्चेति। पुरुष: नित्यमुक्तज्ञान–स्वरूपाविकृतादिरूपेण समुपलभ्यते। तस्य बन्धनं नास्ति मुक्तिश्च नास्ति। वस्तुत: प्रकृते: बन्धनं मुक्तिश्चेति भवत:। पुरुषस्य बन्धनमोक्षौ न भवति। कारणं तत्र चिद्रूपता, असङ्गिता च वर्तेते। जडता, परिणामिता च प्रकृते: बन्धनमोक्षयो: प्रतिकूलकारणरूपेणापि कथ्यते। जडप्रकृते: बन्धनं कथंकारं सम्भवति? तेषां नये प्रकृति: सदैव स्वाधीनरूपेण समुपलभ्यते। प्रकृते ईश्वराधीनतापि न सम्भवति। युक्तिदीपिकायामपि ईश्वरविषये उच्यते – ''न हि एकान्तेन वयं भगवत: शक्तिविशेषं प्रत्याचक्ष्महे''[6] इति। किन्तु ईश्वर: प्रकृतिपुरुषयो: संयोगयितृरूपेण न समुपलभ्यते। अत: प्रकृते: पुरुषस्य च ईश्वराधिनत्वं न स्वीक्रियते। प्रकृते: पुरुषाधिनत्वमपि न वर्तते। प्रकृते: कर्मण: कालस्य चाधिनत्वं न कथ्यते। यत: सांख्याचार्यै: काल: न स्वीकृत:। तेषां नये क्रिया एव काल:। अत: प्रकृते: बन्धनं न स्वीकार्यम्। अत: तस्या: मुक्ति: न जायते। ईश्वरकृष्णेन गद्यते अन्यत्र बन्धनं मोक्षश्चेति प्रकृते: भवत:। किन्तु मतमिदं न उपपन्नम्। भोगापवर्गौ चेतनस्य भवत:। अचेतनस्य भोगापवर्गत्वं नास्ति। अत: पुरुषस्य भोगापवर्गत्वं प्रतिपादितम्। अत्र भोक्तृत्वं पुरुषस्य स्वरूपं न भवति। पुरुषे भोगापवर्गयो: आरोप: जायते। भोक्तृत्वं प्रकृतौ अपि नास्ति। अत: प्रश्न: जायते आरोप: कथं भवति? यद्यपि पुरुषस्य प्रकृते: च भोगापवर्गत्वं नास्ति तथापि अविवेकत: पुरुषस्य भोक्तृत्वं प्रकाशितम्। अत: भोक्तृत्वमारोपितम् इति सिद्धान्त:। अत: पुरुषस्यास्तित्वमवश्यमेव स्वीकृतम्।[7]

**॥ पुरुषस्य बहुत्वे आरोपतत्त्वम्॥**

**''जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।**
**पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव॥''18॥ इति।**[8]

सांख्यकारिकायां श्लोकोऽयं परिलक्ष्यते। अनया कारिकया सांख्यसम्मतं बहुपुरुषत्वं सिद्धम्। अस्मिन् तत्त्वे आरोपतत्त्वं दृश्यते। सांख्यतत्त्वकौमुद्यामवलोक्यते–''प्रवृत्ति: प्रयत्नलक्षणा यद्यप्यन्त:करणवर्तिनी तथाऽपि पुरुष उपचर्यते''[9] इति। जननमरणकरणानां भेदेन बहुपुरुषत्वं सिध्यते। पुरुष: यदि नित्यापरिणामिरूपेण दृश्यते तर्हि पुरुषस्य जननं मरणञ्च कथं सम्भवति? तत्रोच्यते जननशब्दस्यार्थ: निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियमनोऽहङ्कारबुद्धिवेदनाभि: पुरुषस्याभिसम्बन्ध इति। यदा देहेन्द्रियानां निकायविशिष्टत्वमपूर्वत्वञ्च प्रतिपद्यते तदा देहादिना सह पुरुषस्याभिसम्बन्ध: जन्मपदवाच्यरूपेण समुपलभ्यते। निकायशब्देनात्र देहान्द्रियानां समवेतरूपेण एकप्रयोजनत्वं बोध्यम्। अपूर्वनिकायशब्देन निकायेन सह प्रथमसम्बन्ध: बोध्यते। इन्द्रियशब्देन बहिरिन्द्रियाणां बोध: जायते। तदा देहान्द्रियाणां समवेतरूप: निकाय: पुरुषस्य स्वनिकायरूपेण बोध: जायते। अनेन प्रकारेण पुरुषे भोक्तृत्वमारोपितम्। वस्तुत: पुरुष: न भोक्ता, तथापि तत्र भोक्तृत्वमारो–

पितम्। पुरुषं प्रति सम्बन्धभेदेन यद्यपि बहुपुरुषत्वं सिद्धम्, तथापि तत्र एकस्मिन् पुरुषे जायमाने सर्वे जायेरन्, म्रियमाने सर्वे म्रियमान् इत्येवमापत्तिः जायते। अनेन एकः पुरुषः सर्वशरीरेण सह सम्बध्यते एवञ्च तस्मात् अव्यवस्था समुपपद्यते। आकाशः यद्यपि एकपदार्थरूपेण वर्तते तथापि उपाधिभेदतः भेदव्यवहारः, उपाधिनाशतः नाशव्यवहारश्च जायते, तथैव एकः पुरुषः बहुदेहेन सह उपाधेः भेदतः भिन्नभिन्नरूपेण सम्बध्यते। वस्तुतः पुरुषस्य एकत्वं यथार्थम्, तत्र बहुत्वव्यवहार औपाधिक इति पूर्वपक्षिनामाशयः। अनेन बोध्यते आत्मनः बहुत्वं न स्वीकर्तव्यम्। वाचस्पतिना उत्तरं प्रदत्तम् न च एकस्यापिपुरुषस्य देहोपधानभेदाद्व्यवस्था..''[10] इति। उपाधिभेदत आत्मनः भेदव्यवहारेण जननमरणमुपपद्यते। देहः यदि उपाधिः भवति तर्हि हस्तपदादीनामुपाधित्वमवश्यमेव स्वीकरणीयम्। तेन एकस्मिन् शरीरे बह्वात्मन उपपत्तिर्जायते। सांख्यतत्त्वकौमुद्यामपि दृश्यते ''पाणिस्तनाद्युपाधिभेदेनापि जन्ममरणादिव्यवस्थाप्रसङ्गात्। न हि पाणौ वृक्णे जाते वा स्तनादौ महत्यवयवे युवतिर्मृता जाता वा भवतीति।''[11] इति। अतः प्रतिशरीरम् आत्मनः वैभिन्नं स्वीक्रियते। अयुगपत्प्रवृत्तेश्च इति वचनमेवात्र मानम्। प्रतिशरीरं प्रवृत्तेः वैभिन्नमुपपद्यते चेत् पुरुषस्य वैभिन्न्यमपि समुपलभ्यते। पुरुषः प्रतिशरीरं भिन्नरूपेण दृश्यते, अयुगपत्प्रवृत्तिमत्त्वात। अनेनानुमानेन प्रतिशरीरे भिन्नं भिन्नमात्मनः अस्तित्वं प्रतिपन्नम्। अत्र प्रवृत्तिशब्देन प्रयत्नः बोध्यते। वस्तुतः प्रवृत्तिशब्दस्यार्थः क्रिया भवति। अत्र क्रियाजनकः प्रयत्नः प्रवृत्तिशब्दस्य अर्थः। कुत्रापि प्रवृत्तिः इति शब्देन धर्माधर्मयोः बोधः जायते। सांख्यदर्शनानुसारेण प्रयत्नः यद्यपि अन्तःकरणस्य धर्मः तथापि पुरुषे आरोपितः। यस्य पुरुषस्य तत्त्वज्ञानं न जायते, तस्यान्तःकरणेन सह भेदाग्रहः वर्तते। तेन स्वस्वामिभावसम्बन्धतः अन्तःकरणस्य प्रयत्नः पुरुषे आरोप्यते। यथा भृत्यस्य जयपराजयौ स्वामिनि आरोपितौ भवतः, तथैव अन्तःकरणस्य प्रयत्नः अपि पुरुषे आरोपितः दृश्यते।

**।।पुरुषस्य स्वरूपविचारे आरोपतत्त्वम्।।**

**''तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य।**
**कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च।।''1912 इति।**

अस्यां कारिकायामारोपतत्त्वं परिलक्ष्यते। पुरुषस्य कैवल्यसिद्धौ आरोपतत्त्वं समुपलभ्यते। कैवल्यशब्दस्यार्थ आत्यन्तिकदुःखत्रयाभाव इति। कैवल्यशब्देन पुरुषस्य नित्यमुक्तावस्था सिद्ध्यते। यतः पुरुषस्य त्रिगुणरहितत्वं स्वाभाविकरूपेण समुपलभ्यते, ततः पुरुषः नित्यमुक्तरूपेण दुःखस्य आत्यन्तिकाभावविशिष्टरूपेण प्रतिपद्यते। यदि पुरुषः त्रिगुणात्मको भवति तर्हि दुःखः पुरुषस्य स्वाभाविकधर्मः भवति। स्वाभाविकधर्मः कदापि धर्मी न त्यज्यति। स्वाभाविकधर्मः यदि अपगच्छति तर्हि धर्मिणः विकृतिः अवश्यमेव जायते। यदि पुरुषस्य त्रिगुणात्मकत्वं सिद्धति तर्हि तस्यात्यन्तिकदुःखनिवृत्तिरूपा मुक्तिः कदापि न सम्भवति। अतः पुरुषस्य त्रैगुण्यवैपरीत्यं सिद्धति अतः तस्य आत्यन्तिकदुःखनिवृत्तिरूपं कैवल्यं सिध्यति। अत्र अत्रैगुण्यशब्दस्यार्थः सुखदुःखमोहरहित इति। अत्र पुरुषस्य यत् सुखदुःखमोहानां प्रतीतिर्जायते तत् पुरुषस्य स्वाभाविकधर्मरूपेण न बोध्यं किन्तु आगन्तुकधर्मरूपेण समुपलभ्यते। यथैव जलाशये चन्द्रस्य प्रतिबिम्बः जलसञ्चालनेन सञ्चालितो भवति। तस्मात प्रतिबिम्बक्रियया चन्द्रस्य गमनं कल्प्यते सर्वैः जनैः। तथैव अन्तःकरणे प्रतिबिम्बपुरुषः अन्तःकरणस्य सुखदुःखादीन् अनुभवन्ति। अर्थात् पुरुषे सुखादिधर्माणामारोपः जायते। अतः पुरुषस्य त्रैगुण्यविपरीतस्वभावतः कैवल्यं जायते।[13]

**।।पुरुषमहत्तत्त्वयोः स्वरूपविचारे आरोपतत्त्वम्।।**

**''तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।**
**गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः।।'' 2014 इति।**

सांख्यकारिकायां कारिका इयं परिलक्षिता। अस्यां कारिकायामारोपतत्त्वं परिलक्षितम्। कृतिचैतन्ययोः सामानाधिकरण्यं कर्तृत्वस्य स्वरूपमिति न वक्तव्यम्। यतः चेतनत्वकर्तृत्वयोः सामानाधिकरण्यं न समुपलभ्यते। अतः ''चेतन अहं चिकीर्षन् करोमि'' प्रतीतिरियं भ्रमरूपेण प्रतिपद्यते। यद्यपि सत्त्वादिगुणत्रयात्मिकायाः प्रकृतेः गुणत्रयमचेतनरूपेण बोध्यते तथापि प्रकृतिः कर्ता भवति। पुरुषः यद्यपि चेतनो भवति तथापि पुरुषः न कर्ता भवति। अतः कृतिः प्रकृतेः धर्मरूपेण प्रतिपद्यते। केवलं प्रकृत्या कर्तृत्वं न उपपद्यते। चैतन्यस्यापि प्रयोजनमस्ति। अतः प्रकृतिः यद्यपि अचेतनरूपेण समुपलभ्यते तथापि तस्य कर्तृत्वं कथं जायते? अस्य प्रश्नस्योत्तरं प्रदत्तं सांख्याचार्येण ''तत्संयोगात् अचेतं चेतनवत् इव'' इति। अतः अत्र अचेतने चेतनस्यारोपः जायते। तेनाचेतनस्य कर्तृत्वमुपपन्नम्। यद्यपि प्रकृतिः अचेतनरूपेण वर्तमाना तथापि तत्र कर्तृत्वं स्वीकार्यम्। पुरुषस्य कर्तृत्वं यदि स्वीक्रियते तर्हि पुरुषस्य स्वरूपं नश्यते। यदा सूक्ष्मशरीरेण सह पुरुषस्य सम्बन्धः जायते तदा शरीरं चैतन्यविशिष्टरूपेण उपलभ्यते। अतः पुरुषेण सह संयोगतः तस्य कर्तृत्वमुपपद्यते। अत्र प्रकृतौ चेतनस्यारोपः जायते। अत्र प्रश्नः जायते अस्य संयोगस्य स्वरूपं कीदृशं भवति? तत्र संयोगस्य भेदत्रयं परिलक्ष्यते यथा अन्यतरकर्मजन्यसंयोगः, उभयकर्मजन्यसंयोगः, संयोगजन्यसंयोगश्चेति।[15] अन्यत्र गुणत्रयस्य कर्तृत्ववशतः पुरुषे कर्तृत्वमारोपितम्।

**।।प्रकृतेः बन्धनमुक्तयोः वर्णनायामारोपतत्त्वम्।।**

**''तस्मान्न बध्यतेऽद्धा न मुच्यते नाऽपि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः।।'' 62।।[16] इति।**

अनया कारिकया सांख्यमतानुसारेण बन्धनमोक्षयोः विषय आलोचितः। सांख्यशास्त्रानुसारेण पुरुषस्य बन्धनं कदापि न सम्भवति।

ISSN 2348-7828

पुरुषस्य कथं बन्धनं न जायते इत्यस्मिन् विषये वाचस्पतिमिश्रेण भण्यते ''सवासनक्लेशकर्माशयनञ्च बन्धनसमाख्यानां पुरुषेऽपरिणामिन्य-सम्भावात्''[17] इति। अत्र वासना इति शब्देन संस्कारः बोध्यः। क्लेशशब्देनात्र अविद्यास्मितारागद्वेषाभिनिवेशाः बोध्यन्ते। कर्म शब्देन धर्माधर्मयोः बोधः जायते। अत्र संस्कारेण सह क्लेशकर्माशयः बन्धनरूपेण बोध्यन्ते। अनेन प्रकारेण पुरुषस्य बन्धनं कदापि न सम्भवति। यतः पुरुषे क्लेशादिनामभावः वर्तते। अतः पुरुषस्य संसारः कदापि न सम्भवति। प्रेत्याभावशब्देन संसारः बोध्यते। सांख्यकारिकायां दृश्यते ''तस्मात् न बध्यते...'' इति। पुरुषस्य कदापि बन्धनं न जायत इत्येवाशयः। अतः पुरुषः न संसरति। अस्मात् कारणात् पुरुषस्य मुक्तिरपि न जायते। पुरुषस्य मुक्तये प्रकृतेर्प्रवृत्तिः जायते इति वक्तव्यमौपचारिकम्। औपचारिकशब्दस्यार्थः तत्त्वदिष्ट्या विचार्यः। वस्तुतः प्रकृतेः पुरुषेण सह सम्बन्धतः प्रकृतिः संसरति, प्रकृतेः मुक्तिरपि सम्भवति। अतः बन्धनमोक्षसंसाराणां सम्बन्धः प्रकृत्या सह न तु पुरुषेण सह। गुणत्रयस्य परिणामरूपेण बन्धनादयः समुपलभ्यन्ते। बन्धनादयः प्रकृतिसन्निहितपुरुषे आरोपिताः। तस्मात् बन्धनादयः पुरुषेण सह सम्बध्यन्ते। वस्तुतः प्रकृतिपुरुषयोः विवेकज्ञानाभावतः प्रकृतिगतबन्धनादयः पुरुषस्य सम्बन्धिरूपेण व्यवहृयन्ते। यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्यन्ते, तदाश्रयेण भृत्यानान्तभागित्वात्, तत् फलस्य च शोकलाभादेः स्वामिनि सम्भावात्। इति।

**पुरुषः व्यक्ताव्यक्तयोः विपरीतधर्मी भवति।।**

**पुरुषस्य स्वस्वरूपावस्थाने आरोपतत्त्वम्।।**

अपरिणामिभोक्तृशक्तिः केनापि विकारेण न उपरञ्जिता। किन्तु परिणामिबुद्धिवृत्तिः यदि पुरुषे आरोपिता भवति तदा पुरुषे भोक्तृत्वादयो धर्मा अपि आरोप्यन्ते। ततः पुरुषः वृत्तिरूपेण परिणामेण उपरञ्जितो भवति। अर्थात् पुरुषे वृत्तिधर्मस्य आरोपः जायते। परिणामिबुद्धौ आत्मनः प्रतिबिम्बनं जायते। तेन आत्मनि बुद्धितत्त्वस्य परिणामः जायते। यदा चैतन्यं बुद्धौ प्रतिबिम्बितम्, तदा बुद्धिरपि चैतन्यरूपेण प्रकाश्यते। समानमेव प्रकारेण चैतन्यमपि बुद्धियुक्तरूपेण समुपलभ्यते। भोक्तृशक्तिः तथा चित्शक्तिः आत्मारूपेण समुपलभ्यते। अनेन बुद्ध्यात्मनोः अभेदः जायते। विवेकज्ञानेन बुद्ध्यात्मनोः भेदः जायते। तेन ज्ञानेन दुःखादीनामवसानं जायते। अनेन आत्मा यद्यपि नित्यशुद्धरूपेण दृश्यते तथापि बुद्धिस्थानां प्रत्ययानां ग्रहणेन आत्मबुद्ध्योः अभेदः कल्प्यते। तस्माद् बुद्धिवृत्तिः आत्मनः वृत्तिरूपेण भ्रमग्रस्ताः स्यात। योगेन ईश्वरप्रणिधानेन बुद्धिपुरुषयोः भेदज्ञानं जायते। तेन अविद्यादीनां क्लेशानां विनाशः समुपलभ्यते। तदा पुरुषस्य स्वरूपेऽवस्थानं जायते। पतञ्जलिना सूत्रितम्

**''तदा द्रष्टुः स्वरूपेऽवस्थानम्'' इति।3**[18] इति।

तदा अर्थात् चित्तवृत्तेः निरोधकाले पुरुषः स्वस्वरूपे तिष्ठति। कैवल्यकाले चित्शक्तिः पुरुषः यथा संस्कारमुक्तरूपेण दृश्यते किन्तु व्युत्थानदशायां तथा अवस्थाप्राप्तिः न लक्ष्यते।

## अनुशीलितग्रन्थसूची


1. गोस्वामी, नारायण चन्द्र. सांख्यतत्त्वकौमुदी, कलकाता, संस्कृत पुस्तक भाण्डार, पञ्चम प्रकाश - 2414 (बङ्गाव्दे).
2. चक्रवर्ती, सत्यज्योति. सर्वदर्शनसंग्रह (प्रथमखण्ड), कलकाता, साहित्यश्री, तृतीय मुद्रण - वैशाख 1414 (बङ्गाब्दे).
3. तर्कवागीश, फणिभूषण. न्यायदर्शन (प्रथम खण्ड), कलकाता, पश्चिमबङ राज्य पुस्तक पर्षत्, चतुर्थ प्रकाश - जानुयारी 2011.
4. वागची, दीपक. भारतीय दर्शन, कलिकाता, प्रगति प्रकाशक, पुनर्मुद्रण - सेप्टेम्बर 2015.
5. भट्टाचार्य, अमित. भारतीयदर्शनेर रूपरेखा, कलिकाता, संस्कृत वुक डिपो, तृतीय संस्करण - जुन 2019.
6. भर्गानन्द, स्वामी. पातञ्जल योगदर्शन, कलकाता, उद्बोधन कार्यालय, तृतीय पुनर्मुद्रण - मार्च 2016.


## पादटिप्पणी

1. अ. सर्व.
2. वाचस्पत्यम्
3. न्या. को.
4. तदेव, पृ- 169.
5. तदेव, पृ- 344.
6. युक्ति. दी.
7. सा. कौ, 17, पृ - 178.
8. तदेव, पृ- 180.
9. तदेव, पृ- 187.
10. तदेव, पृ. 186
11. तत्रैव, पृ- 186.
12. तदेव, का. 19.
13. तदेव, पृ - 178.
14. तदेव, का. 20.
15. तदेव, पृ- 193.
16. तदेव, का. 62.
17. तदेव, पृ- 345.
18. यो. सू., सूत्रम

*सहायकाचार्या ( अतिथिः ), अद्वैतवेदान्तविभागः,*
*केन्द्रीयसंस्कृतविश्वविद्यालयः वेदव्यासपरिसरः*

ISSN 2348-7828

# पुराण दृष्ट्या मोक्षस्वरूपविमर्शः

सौम्या.के

**शोधसारांशः**

जीवस्य आत्यन्तिकदु:खनिवृत्तिपूर्वकं पुरुषार्थचतुष्टयेष्वन्तिम-पुरुषार्थं मोक्षमेव चरमलक्ष्यमित्यामनन्ति शास्त्रकाराः। यतो हि सततेन्द्रियासक्तः जीवः कर्मणः वासनानुसारमाभुतसंप्लवं यावत् नाना भोगयोनिषु जन्म लब्ध्वा नैकानि कष्टानि सहते, जन्ममृत्युपरम्परायां चङ्क्रमते च। अतः संसारासक्तस्य जीवस्य आत्यन्तिकविमुक्तये च शास्त्रकारैः मोक्षाख्यस्य चरमलक्ष्यस्यावाप्तये बहुविधोपायाः निरूपिताः सन्ति। प्रायः प्रत्येकेषु धर्मप्रतिपातकेष्वष्टादशशास्त्रेषु मोक्षस्य स्वरूपं निरूपितं वर्तते। तत् तत्वस्वरूपानुसारं कर्मानुष्ठानं क्रियमाणे सति मोक्षस्याधिगम अकाठिन्येन भविष्यति इति तत् तत् शास्त्रकारणमाशयः विश्वासश्च। श्रीमद्भागवतपुराणमपि प्रत्येकेषु स्थलेषु एतस्य लक्ष्यस्य व्याख्यानं करोति। एतस्मिन् मोक्षस्य स्वरूपं कथं निर्दिष्टमस्ति तन्मदाप्रसूयते।

आसृष्टेः जीवः स्वेनैव सदसदात्मकेन कर्मणा जन्ममृत्युपरम्परया चङ्क्रमते। नानाविधानि सुखदु:खानि गुणकर्मानुरूपाणि च तत्र श्रूयते। अतःशास्त्रकाराः बहुप्राचीनकालात् जीवस्यआत्यन्तिकमुक्तिमेव कामयन्ति। अस्माकं परम्परायां जीवस्य विमुक्तये भारतीयमुनिऋषिभिः अनेकानि शास्त्राणि विरचितानि। तेषामध्ययनाध्यापनेन श्रवणनिदिध्यासनेन च जीवस्य चरमेच्छाभूतमुक्तिः करतले समुपस्थिता भविष्यतीति तेषां विश्वासः। तानि शास्त्राणि ?था याज्ञवल्क्यानुसारम्

**पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिता।**
**वेदास्थानानि विद्यानां धर्मस्य च चतुर्दशा।।**

इतोव्यधिकानां भारतीयमुनिऋषिभिः जीवस्य आत्मज्ञानाप्तये सांसारिकविषयविमोहिनी मायया अवगतये च विविधानां दर्शनशास्त्राणां प्रणयनं विहितम्। दर्शनं तावद्विविधम् आस्तिकं नास्तिकं च। उभे जीवस्यकृते आत्यन्तिकसुखलाभः कथं स्यात् तन्निरूपयतः। समेषामाचार्याणामिदमेव मतं यत् जीवस्य दु:खलाभः एव बन्धनं सुखाप्तिरेव मोक्षः इति। यद्येवं स्यात् तर्हि निश्रेयस् इति शब्दस्य कोऽर्थः किं च तस्य वास्तविकं स्वरूपं, तन्मयाद्य: विभिन्नानां दार्शनिकानां मतमाधारीकृत्य उपस्थाप्यते।

निश्रेयस् शब्दस्य नैके अर्थाः पर्यायवाचिनः शब्दाश्च भवन्ति। अमरकोशकारेणामरसिंहेण मुक्तिः कैवल्यं, नीर्वाणं, श्रेयस्, निश्रेयस्, अमृतम्, मोक्ष, अपवर्गः, इत्यादीनि पदानि पर्यायवाचरूपेण व्यवहितानि।

**मुक्तिकैवस्यनिर्वाणं श्रेयनिश्रेयसामृतम्।**
**मोक्षापवर्गः अथाज्ञानमविद्याहंमतिः स्त्रियाम्।।**

अस्मात् ज्ञायते निश्रेयं नाम मोक्षोपवर्गः। यं लब्ध्वा मनुष्यः देवतिर्यङग् वृक्षलतादिषु कष्टप्रदेशेषु योनिषु अपरं जन्म नैव लभते केवलं परमानन्तानुभवरूपं सुखमेवाधिगच्छति च। विविधैः दार्शनिकैः स्वस्वमतानुसारमस्यैव निश्रेयस तत्वस्य लक्षणं बहुधा व्याकृतम्। मोक्षस्वरूप निर्णये सर्वभारतीयदर्शनिकानां मतं भिन्नं भिन्नं वर्तते। देहात्मवादिनः चार्वाकाः देहेच्छा मोक्षःप्रतिपादयति। बौद्धास्तु निर्मलज्ञानावाप्तिरेव मोक्षः। शून्यवादिनः आत्मोच्छेदः मोक्षः इति कल्पयन्ति। जैनानां मतानुसारेण मिथ्याज्ञानं बन्धनस्य कारणं यदा मनुष्यः तस्य निरोधं करोति तेन पूर्नार्जित कर्मणः विनाशः जायते। तस्मात् उक्तं अस्ति बन्धहेत्वाभाव निर्जराभ्यां कृत्स्न कर्म विप्रमोक्षणं सोक्षः। विशिष्टवादिनाः रामानानुजाः अभिगमनोपासनाइज्या स्वाध्याय योगपरायणानां उपरि कदाचित् ईश्वरः सन्तुष्टः सन् तस्मै पुनरावृत्तिरहितं स्वपदं प्रपच्छति। तदुक्तम्-

**स्वभक्तं वासुदेवोऽपि संप्राप्यानन्दमक्षयम्।**
**पुनरावृत्तिरहितं स्वीयं धाम प्रयच्छति।।**

द्वैतवादिनः दु:खभिन्नं पूर्णसुखावाप्तिरिव मोक्षः इति आमनन्ति। तेषां मतमित्थं विलोक्यते शास्त्रेषु तस्मिन् प्रसन्ने तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्यकामैरलमल्पकास्ते। समाश्रिताद्ब्रह्मतरोरनन्तान्निः संशयं प्राप्तय वै महत्फलम्।।

रसेशवरदर्शनं तु रसानां सेवनेन शरीरं स्थिरं भवति इति प्रतिपादयति। जीवेन् मनुष्यः यदा सांसारिकविषयेभ्यः दु:खसुखादिभ्यः विमुक्तः भवति तदा एव मोक्षवदं लभते।

**तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत् पश्यन्**
**उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव चाप्रोन्ति।।**

न्यायवैशेषिकास्तु मोक्षं अभावात्मकेन शब्देन व्यावहरन्ति। वैशेषिकाणां सम्मतेन विशेषगुणस्य नाश एव मोक्षः, परं नैयायिकाः तु आत्यन्तिकदु:खनिवृत्तिमेव मोक्षपदेन स्वीकुर्वन्ति। कतिपयास्तु नैयायिका- मोक्षस्य स्वरूपमपि निर्धारयन्ति। अष्टादशपुराणेषु श्रीमद्भागवतस्य अन्यतमस्यानन्तमस्ति। पुराणमेतत् सर्वेषां दर्शनानां धर्मार्थकाममोक्षादिपुरुषार्थचतुष्यप्रतिपादकानां शास्त्राणां च सारभूतं वर्तते। अत एवास्य प्रशस्तावुच्यते।

**धनञ्जये हाटकसंपरीक्षा महारणे शास्त्रभृतां परीक्षा।**
**विपत्तिकाले गृहिणी परीक्षा विद्यावतां भागवते परीक्षा।।**

यद्यपि पुराणानि पञ्चभिः लक्षणैरन्वितानि सन्ति तथापि श्रीमद्भागवतं पुराणां चराभिर्लक्षणैः युक्तमिति प्रतिपादयति भगवान् वेदव्यासः। चरासु लक्षणेषु नवमं लक्षणं भवति मुक्ति, या खलु अस्य पुराणस्य एकादशस्कन्धे प्रतिपादितास्ति। किं चास्य पुराणस्य महन्महत्वं

वर्तते, यत् अस्य प्रत्येकेषु श्लोकेषु श्रीभगवतः नामानि जीवस्य विमुक्तेरूपायाश्च प्रतिपादिताः सन्ति। धर्मस्य उत्सर्जनपुरस्सरं विर्मत्सराणाममलात्मत्वाम् उदारचरितानां यो परमो धर्म स एवात्र प्रतिपादितोस्मि। अस्य पारमहंस्यशास्त्रस्य श्रवणमनननिदिध्यासनेन च मनुष्यः सर्वपापविनिर्मुक्तः जायते। सर्वसुखप्रदाता हरिः भक्तजनानां हृदयकमले सद्य एवावरूह्यते। जगत्यस्मिन् शिवदं तापत्रयोन्मूलनं यद् वेद्यं तत्वं तदत्र सम्यक् प्रतापादितोऽसेति। तस्मात्कारणात् भगवता कृष्णद्वैपायनेनोक्तम्–

**धर्मःप्रोज्झितकैतवो ?त्र परमो निर्मत्सराणां सतां**
**वेद्यं वास्तवमत्र वस्तुशिवदं तापत्रयोन्मूलनम्।**
**श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः**
**सद्योद्यवरूह्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्।।**

अस्य पुराणस्य मतानुसारं बद्धः मुक्तो वा इति या व्याख्या श्रूयते, सा गुणतः एवास्माभिः क्रियते न तु वस्तुतः। यतो हि गुणाः माया मूलकाः तस्मात् आत्मनः बन्धनं मोक्षो वा नास्ति। यथा तमसि स्थितः मनुष्यः रज्जौ सर्पारोपं करोति, परन्तु यदा यथार्थज्ञानं समुदेति तदा सर्पज्ञानं नश्यति। सर्पविमुक्तः रज्जुः समुद्भासते। तथैव जीवस्य यथार्थज्ञानं यदा समुदेष्यति तदा एव तस्य विमुक्तिः भविष्यति। स्वप्नशीलः मनुष्यः स्वप्ने आत्मनः ख्यातिं पश्यति, स्वप्ने नष्टे सति सा ख्यातिः सद्य एव नश्यति, तथैव शोकमोहौ सुखदुःखे देहापात्तिश्च मायया प्रतिभान्ति, परं तत्र वास्तवं चित्रं नास्ति। तदुक्तं–

**बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः।**
**गुणस्य मायामूलत्वात् न मे मोक्षो न बन्धनम्।।**
**शोकमोहौ सुखं दुःखं देहापत्तिश्च मायया**
**स्वप्ने यथात्मनः ख्यातिः संसृतिः न तु वास्तवी।**

पुराणेऽस्मिन् भगवता व्यासेनोल्लिखितं यत् विद्या अवेद्यं च ईश्वरस्य तनू भवतः। तत्राद्या मोक्षकरी अन्या च बन्धकरी अर्थात् दुःखदायिनी अस्ति। उभे मायया एव कल्पिते स्तः। वस्तुतः जीवः ईश्वरस्यांशभूतोऽस्ति। यदा स आत्मज्ञानेन युक्तो भवति अथवा स एव जीवः यदा तस्येश्वरस्य वास्तविकं स्वरूपं जानाति तदा एव तस्य विमुक्तिः जायते। यावत् पर्यन्तं तस्यात्मज्ञानं नोत्पद्यते तावत् सः बद्धः इति वक्तुं शक्यते।

**एकस्यैव ममांशस्य जीवस्यैव महामते**
**बन्धोस्याविद्यायानादिर्विद्यया च तथेतरः।।**

बन्धमोक्षस्य लक्षणं विवक्षता पुराणकारेण उक्तं यत् तत्र एकं भवति ईश्वरसकाशात् जीवस्य भेद द्वितीयं भवति बद्धमुक्तजीवयोः लक्षणम्। यद्यपि जीवेश्वरयोः बद्धमुक्तभेदेन भेदः कल्प्यते तथापि द्वौ शरीरे नियन्ता नियन्त्रितरूपेण च तिष्ठन्ति एव। एतौ जीवेश्वरौ धर्मतः एकौ एव परं सुखदुःखमुक्तभेदेन ऊन्नौ लक्षितौ भवतः।

**अथ बद्धस्य मुक्तस्य वैलक्ष्यण्यं वदामि ते।**
**विरुद्धधर्मिणोस्तात स्थितयोरेकधर्मिणि।।**

अनयाः स्वरूपं निरूपयन् भागवतकारः कथयति इदमस्माकं शरीरम् वृक्षवदन्ति। एतस्मिन् दौ पक्षिणौ यदृच्छया कृतनीडौ वसतः उभौ रूपेण गुणेन च सदृशौ सुखायौ च। अनयोः मध्ये एक वृक्षरूरस्य शरीरस्य फलं भुङ्क्ते परमन्यः निरन्नः भूक्त्वा साक्षिरूपेणावतिष्ठते।

**सुपर्णवेतौ सदृशौ सखायौ यदृच्छयेतौ कृतनीडौ च वृक्षे**
**एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्।।**

अस्मात् प्रतीयते ईश्वरः अभोक्ता अपि बलेन ज्ञानेन ऐश्वर्येण च जीवात् भिन्न बलवत्तरश्च ज्ञायते। पुनश्च स एव स्वस्य ज्ञानेन आत्मानं तदरिक्त समग्र जगद्यपि जानाति, परं जीवः आत्मनः स्वरूपसथवा तदतिरिक्तं जगतः किमपि स्वरूपं न जानाति। अनयोः मध्ये जीवः नीत्यं मायया आच्छादितः इति हेतोः सः बद्धः परं ईश्वरः नित्यज्ञान–युक्तत्वात् स मुक्तः इति कथ्यते।

**आत्मानमन्ये च स वेद विद्वानपिप्पलादो न तु पिप्पलादः।**
**योऽविद्यया युक् स तु नित्यबद्धो विद्यामयो यः स तु नित्ययुक्तः ।।**

बन्धकारणानि।

सर्वेषां शास्त्रकाराणां मतमिदमस्ति यत् जीवस्य बन्धनं मोक्षो वा कोपि नास्ति, तर्हि मनुष्यः बद्धोहं मुक्तोऽहं कृशो ?हं पृशूलो ?हं दीनो ?हं सुखी अहमस्मीति कथं मन्यते। तदा भागवतकारः कथ्यति इदमस्माकं शरीरं दैवाधीनं अस्मिन् यानि कर्माणि भवन्ति। तानि सर्वाणि गुणप्रेरणया एव जायन्ते पुरुषः तानि कर्माणि स्वयं कृतानीति चिन्तयित्वा तत्र अबद्धः भवति। तदुक्तं–

**दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा**
**वर्तमानोऽबुधस्तत्र कर्तास्मीति निबद्ध्यते।।**

व्यावहारिकदशायामपि इन्द्रियाणि शब्दस्पर्शादीनी इन्द्रियार्थान् स्वीकुर्वन्ति। यतो हि संसारस्य अयं नियमः भवति गुणितः एव गुणगणात् स्वीकुर्वन्ति परं निर्गुणः आत्मा तत् नैव स्वीकरोति। अतः यस्तु आत्मानं सम्यक् जानाति स कथमपि बद्धो नैव भवति इति अस्य पुराणस्याभिमतम्।

अतः यस्तु आत्मानं सम्यक् जानामि स कथमपि बद्धो नैव भवति। अस्य पुराणस्य पूर्वोक्तपद्धतौ विचार्यमाणो सति ज्ञायते यत् विद्वान् सदा सर्वेषु विषयेषु विरक्तो तिष्ठति। स सदा दर्शनस्पर्शन घ्राण भोजन श्रवणादिषु कर्मसु आत्मानं कथमपि कर्तारूपेण नैव स्वीकरोति। गुणाः एव कर्तारः भोक्तारस्य भवन्ति। एवं सत्वा विद्वान् पुरुषः कर्मवासनासु तथा भलेषु नैवासक्ताः भवन्ति। एषां मनुष्याणां प्राणेन्द्रियमनोबुद्धि आदि येषां मनुष्याणां प्राणेन्द्रियमनोबुद्धि आदि चेष्ठाः संकल्परहिताः सन्ति तेषां गुणेभ्यः मुक्तिः जायते एव।

**एवं विरक्तः शयने आसनाप्नमज्जते**
**दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु**
**न तथा बद्ध्यते विद्वांस्तत्र तत्रादरान् गुणान्।**
**प्रष्टतिस्योऽप्यसंसक्तो यया खं सवितानिलः।।**
**पुराणमिदं जीवस्यात्यन्तिकविमुक्ते रूपायाम्**

निरूपयन् ज्ञानकर्मभक्त्याख्यान् नैकविधान् योगान् प्रतिपादयति। तेषु भक्तियोग एव जीवस्य विमुक्तये सर्वसुलभो कश्चन श्रेष्ठोपायेति प्रतिपादयति। अनन्यया भक्त्या एव मनुष्यः अवच्छिन्नतया धारया भगवतः नामानि गुणान् तदर्थकानि च कर्माणि समाचरन् सर्वसरलोपायेन विमुक्तेः मार्गान् अधिगमिष्यति इति अस्य पुराणस्याभिमतम्। किं च भगवद्भक्तस्य एतादृशं बलं तत्र व्याख्यातमस्ति।

**नैव विधः पुरुषकार उरूक्रमस्य पुंसां**
**तदघ्रिरजसा जितषट्गुणानाम्।।**
**चित्रं विदुरविगतः सकृदाददीत**
**यन्नामधेयमधुना स जहाति बन्धम्।।**

## सन्दर्भग्रन्थाः


1. याज्ञवल्क्यस्मृति।, शलिकृष्णमणित्रिपाठि, चौखम्वा सुरभारति, प्रकारात्, वारणासि।
2. अमरकोशः
3. सर्वदर्शनसंग्रहः, माधवाचार्यः,पृथ्वीराजसेन्, गिरिराज लैब्रेरि, 22.सि, कालेज रोट, कोलकत्ता, 2000
4. रसहृदयः, पृथ्वीराजसेन्, गिरिराज लैब्रेरि, 22.सि, कालेज रोट, कोलकत्ता, 2000
5. श्रीमद्भागवतमहापुराणम्।
6. इशावास्योपनिषत्, श.भा., तृतीयसंस्करणं, उत्तरप्रदेश, गोरखपुर, 1987
7. पुराणपर्यालोचनम्, श्रीकृष्णमणित्रिपाठि, चौखम्वा सुरभारति, प्रकाशन्, वारणासि,2002
8. अष्टादशपुराणं, पृथ्वीराजसेन्, गिरिराज लैब्रेरि, 22.सि, कालेज रोट, कोलकत्ता, 2000


## पादटिप्पणी

1. याज्ञवल्क्यस्मृति। 1-3
2. अमरकोशः, धीवर्गः। 5-6
3. सर्वदर्शनसंग्रहः ।194
4. विष्णुपुराणम्,2-16-19
5. विष्णुपुराणम्,2-16-20
6. श्रीमत्भागवतम्,1-1-2
7. श्रीमत्भागवतम्,11-11-1-2
8. श्रीमत्भागवतम्,11-11-9
9. श्रीमत्भागवतम्,11-10-4
10. श्रीमत्भागवतम्12-12-5
11. श्रीमत्भागवतम्,11-11-6
12. श्रीमत्भागवतम्,11-11-11-12
13. श्रीमत्भागवतम्12-34-5
14. श्रीमत्भागवतम् 5-1-32


*वेदान्तविभागः*
*श्री शङ्कराचार्यसंस्कृतसर्वकलाशाला,कालटी*

ISSN 2348-7828

# श्रीमद्भगवद्गीतायां कर्मयोगः

डॉ. मंजुनाथ एस.जी.

श्रीमद्भगवद्गीतापर्व महाभारतस्य भीष्मपर्वणि अस्ति। भीष्मपर्वणः त्रयोदशाध्यायादारभ्यायं भगवद्गीतापर्व आरभ्यते। भगवान् वेदव्यासः कुत्रपि 'भगवद्गीता' इति न ब्रवीति, 'भगवद्गीतापर्व' इत्येव कथयति। किन्तु कालक्रमेण भगवद्गीतापर्वणि पञ्चविंशतेः अध्यायादारभ्य द्विचत्वारिंशदध्यायपर्यन्तं विद्यमानानष्टादशाध्यायान् सप्तशतश्लोकान् 'भगवद्गीता' इति नाम्ना सूचयन्ति जनाः। अर्थज्ञानसौकर्यार्थम् अर्जुनविषादयोगः इत्यादिनामास्ति। प्रत्येकमध्यायः योग इति नाम्ना लोके प्रसिद्धः। अत्र योगो नाम परब्रह्मणा सहैक्यदर्शने, आत्मदर्शने वा मार्गः, उपायः, साधनमित्यर्थः। युज्यते परब्रह्मानेनेति योगः[1] इति परब्रह्मप्राप्तिमार्गः, परमपुरुषार्थप्राप्त्युपायः, आत्मज्ञानसाधनमित्याद्यर्थः। अन्येष्वप्यर्थेषु योगशब्दः लोके श्रूयते। यथा- समत्वं योग उच्यते[2], योगश्चित्तवृत्तिनिरोधः[3], अप्राप्तस्य प्राप्तिः योगः[4], योगः कर्मसु कौशलम्[5], अवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्मसंवेद्यतासंपादनं योगः[6], इति।

उपनिषत्सु प्रतिपादितः निवृत्तिमार्गो वा ज्ञानमार्गो वा मोक्षसाधनं वा सकलोपनिषत्सारभूतगीतायां निरूपतिम्। एवं गीतायां विद्यमानाः सर्वे अध्यायाः अष्टादशयोगा इति पदव्यपदेशभाजो भवन्ति। एवमष्टादशाध्यायात्मिकेयं गीता, वेदे यथा कर्मकाण्डम्, उपासनाकाण्डम्, ज्ञानकाण्डञ्चेति विभज्यते, तथैव विषयाधारेण त्रिधा विभक्ता। कर्मषट्कम्, उपासनाषट्कम्, ज्ञानषट्कमिति क्रमेण षण्णामध्यायानां त्रिधा त्रिधा विभागः। षट्कत्रयमेव कर्मयोगः, भक्तियोगः, ज्ञानयोगश्चेत्युच्यते। अत्रदौ षडध्यायेषु कर्मनिष्ठा, मध्ये भक्तिनिष्ठा, अन्ते ज्ञाननिष्ठा च वर्ण्यते। परस्परविरोधात्, अधिकारिफलादिभेदान्नास्ति ज्ञानकर्मसमुच्चयः। सर्वविघ्ननाशिनी भगवद्भक्तिनिष्ठा कर्ममिश्रा, शुद्धा, ज्ञानमिश्रा चेति त्रिधा विभज्यते। गीतायां प्रथमषट्के कर्म, कर्मत्यागद्वारा युक्तिपूर्वकं त्वम् पदार्थः विशुद्धात्मा निरूप्यते। द्वितीयषट्के भगवद्भक्ति-निष्ठावर्णनपूर्वकं तत् पदार्थः परमानन्दस्वरूपः भगवान् निर्धार्यते। तृतीयषट्के तत्त्वमसि[7] इति महावाक्यार्थः, तत्, त्वम् पदयोरैक्यं सम्यक् प्रतिपाद्यते। तदुक्तम्-

**सच्चिदानन्दरूपं तत्पूर्णं विष्णोः परं पदम्।**
**यत्प्राप्तये समारब्धा वेदाः काण्डत्रयात्मकाः।।**
**कर्मोपस्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात्।**
**तद्रूपाष्टादशाध्यायी गीता काण्डत्रयात्मिका।।**
**एकमेकेन षट्केन काण्डमत्रेपलक्षयेत्।**
**कर्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः।।**
**यतः समुच्चयो नास्ति तयोरतिविरोधतः।**
**भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्तिता।।**
**उभयानुगता सा हि सर्वविघ्नापनोदिनी।**
**कर्ममिश्रा च शुद्धा च ज्ञानमिश्रा च सा त्रिधा।।**
**तत्र तु प्रथमे काण्डे कर्मतत्त्यागवर्त्मना।**
**त्वं पदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते।।**
**द्वितीये भगवद्भक्तिनिष्ठावर्णनवर्त्मना।**
**भगवान्परमानन्दस्तत्पदार्थो विचार्यते।।**
**तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम्।**
**एवमप्यत्र काण्डानां सम्बन्धोऽस्ति परस्परम्**[8]।। इति।

**कर्मयोगः -**

किन्नाम कर्मेति जिज्ञासायां कायेन वाचा मनसा च यत्क्रियते तत्कर्मेत्युच्यते। प्रारब्धम्, क्रियमाणम्, सञ्चितं चेति कर्म त्रिविधं भवति। यत्कर्मवशादिह जन्मनि अस्मिन् शरीरे सुखदुःखाद्यनुभूयते तत्प्रारब्धं कर्म। अहर्निशं वर्तमानजन्मनि सुकृतदुष्कृतरूपं यत्कर्म कृतं, क्रियते चानारधफलं तत्क्रियमाणम्। प्रारब्धक्रियमाणाभ्यामन्यदनारब्धफलं यदेकत्रितं कर्म तिष्ठति तत्सञ्चितम्। पुनः सञ्चितं द्विविधं सुकृतं दुष्कृतमथवा विधिः निषेधश्च। श्रुतिस्मृतिपुराणाद्यनुमोदितं कर्म सुकृतम्। श्रुतिस्मृतिपुराणाद्यननुमोदितं कर्म दुष्कृतम्। सुकृतञ्च पुनः काम्यनित्यनै-मित्तिकप्रायश्चित्तोपासनाभेदेन पञ्चविधम्। फलोद्देशेन विधीयमानानि कर्माणि काम्यानि, यथा 'स्वर्गकामो ज्योतिष्टोमेन यजेत' इति। अकरणे प्रत्यवायोत्पादकानि नित्यानि, सन्ध्यावन्दनादीनि स्ववर्णोचिताश्रमोचित-कर्माणि च। निमित्तमात्रमासाद्य अवश्यकर्तव्यतया विहितानि नैमित्तिकानि। 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विहितानि जातेष्ट्यादीनि। विहिताकरणप्रतिषिद्धसेवनरूपनिमित्तविशेषानुबन्धीनि पापक्षयमात्रेद्देशेन विहितानि प्रायश्चित्तानि, चान्द्रायणकृच्छ्रादीनि। शास्त्रबोधिते सगुणे ब्रह्मणि नैरन्तर्येण मनोवृत्तिस्थिरीकरणमानस-व्यापाररूपाणि शाण्डिल्य-दहर-वैश्वानरविद्यादीन्युपासनानि।

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः**[9]
**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः**[10]।।

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः[11]।**

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।**

**शरीरयात्रपि च ते न प्रसिद्ध्येदकर्मणः[12]।।**

**कुरु कर्मैव तस्मात्वं पूवैः पूर्वतरं कृतम्[13]।**

**इत्यादिश्रुतिस्मृतिवचनानि लोके कर्मप्रतिपादकानि शोश्रूयन्ते।**

**किञ्च, उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।**

**न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः[14]।।**

अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति[15]। उद्योगः खलु कर्तव्यः[16], शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं तनुम्[17] इति च कर्मणः महत्त्वं ज्ञायते।

श्रीमद्भगवद्गीतायां प्रथमषट्के कर्मयोगः विस्तारेण निरूप्यते। कर्मैव योगः, मार्गः, उपायः, साधनं वा कर्मयोगः। अत्र कीदृशं कर्म बध्नाति? कथं मोचयति? कर्म मोक्षसाधनं वा न वा? मोक्षसाधनं चेत् साक्षात्साधनं वा, परंपरया वा? कीदृशं कर्म ज्ञानसहकारि? प्रतिबन्धकं कीदृशम्? इत्यादिविषयाः विचार्यन्तेऽस्मिन् षट्के। यतोहि कर्मणः गतिः दुर्ज्ञेया। यथा

**कर्मणो ह्यपि बोद्धव्यं बोद्धयं च विकर्मणः।**

**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः[18]।।** इति।

प्रवृत्तिमार्गः अर्थकामयोः पुरुषार्थयोः साधनार्थम्, मोक्षप्राप्त्यर्थं निवृत्तिधर्मश्च भवति। अयं निवृत्तिमार्गः संन्यासः कर्मयोगश्चति द्विधा विभज्यते। तत्र संन्यासः कर्मयोग श्चोभावपि निःश्रेयसकरौ, उभयोर्मध्ये कर्मयोगः श्रेष्ठः। कर्मत्यागमात्रत्सिद्धिः न प्राप्यते। नैष्कर्म्यरूपज्ञान-योगस्योपायः कर्मयोगः। श्रुतौ कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितम्। यथा- तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन[19] इति। ज्ञानिनः लोकसंग्रहार्थं कर्म कुर्वन्ति। जनकादयोऽपि कर्मणैव सिद्धिं गताः आसन्। श्रेष्ठाः यथाचरन्ति तदनुसरन्ति जनाः। कर्तव्यस्य पालनं विना यः भोगमनुभवति सः चोरः यः कर्तव्यपालनेन शरीरनिर्वाहार्थं यज्ञशेषेण जीवति सः सर्वपापात्प्रमुच्यते। यज्ञो वै विष्णुः[20] इति श्रुतिः। तस्माद्यज्ञार्थं क्रियमाणं कर्म मुक्तेः कारणं भवति। अहं किमपि कर्म न करोमीति बाह्यकर्म त्यक्त्वा मनसि विषयान् चिन्तयति सः मिथ्याचारी। अकर्मापेक्षया कर्म श्रेष्ठम्। अकर्मणा शरीरनिर्वाहोऽपि न शक्यते। प्रकृतिजैः सत्त्वरजस्तमोगुणैरहर्निशं सर्वः प्राणी कर्म करोति। तस्मात्कर्म करणीयमित्युपदिशति भगवान्।

कर्मणा मोक्षप्राप्तिर्भवति वा? इति चेत्, न। नान्यः पन्था विद्यतेऽयनाय[21] इति नित्यसिद्धब्रह्मस्वरूपस्यापि सतः प्राप्तौ ज्ञानमेव केवलं साधनं नान्यदिति श्रुतिस्मृत्यादिभिर्निश्चितत्वात्। तदुच्यते

**ज्ञानेनैव कथं मुक्तिः कर्मभिश्चापि तत्स्मृतेः।**

**नाविद्यकत्वात् बन्धस्य नान्यः पन्था इति श्रुतेः[22]।।** इति।

क्रियात्मकस्य कर्मणः परम्परया ब्रह्मावाप्तौ साधनता। यज्ञादीनां विविदिषोत्पादनद्वारा ब्रह्मप्राप्तौ परम्परयोपयोगः इति भामतीकाराणां मतम्। सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्[23] इति सूत्रेऽप्युच्यते- विद्याया उत्पत्तिं प्रति दुरितक्षयहेतुत्वेन चित्तशुद्धिद्वारा दूरतो यज्ञादिसर्वापेक्षाऽस्ति। यथा च योग्यतावशेनाश्वो न लाङ्गलाकर्षणे विनियुज्यते, रथचर्यायां तु विनियुज्यते। एवं कर्माणि ज्ञानफलसिद्धावविनियुज्यमानान्यपि ज्ञानोत्पत्तौ दूरतो विनियुज्यन्ते इति। महाभारतेऽपि

**ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः।**

**यथाऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि[24]।।**

इति कथ्यते।

तर्हि कथं कर्म करणीयमिति चेत्, योगिनः फलासक्तिं विनात्मशुध्यर्थं यथा कर्म कुर्वन्ति तथा लोकसंग्रहार्थं कर्म करणीयम्। फलासक्ताः कृपणाः भवन्ति। तस्मात्फलतृष्णां त्यक्त्वा कर्म करणीयमित्युपदिशति। यथा-

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**

**मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि।।**

**योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनञ्जय।[25]** इत्यादिः।

निष्कामकर्म परम्परया परमपदप्राप्तिकारणं भवति। संगं त्यक्त्वा भगवदर्थमेव सर्वाणि कर्माणि यः करोति सः कर्मणा न बध्यते, यथा पद्मपत्रमम्भसा न हि सम्बध्यते तथा। तस्मात्सहजं कर्म करणीयम्। अनात्मज्ञः क्षणमपि न हि अकर्मकृत्तिष्ठति। स्वधर्मे निधनमपि श्रेयस्करं भवति। यज्ञदानतपः कर्म न त्याज्यं कर्यमेव तत्[26]। किञ्च, किं करणीयम्, किमकरणीयमित्यत्र शास्त्रमेव प्रमाणम्। यथा-

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।**

**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि[27]।।** इति।

विस्तृतरूपेण कर्मजिज्ञासा गीतायामेवास्ति। कर्मयोगार्थं स्वस्यैवोदाहरणं ददाति भगवान्यथा-

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।**

**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि[28]।।** इति।

दैवसम्पदः असुरसम्पदश्चेति भवन्ति लोके। तत्रसुरसम्पत्पुरुषाः पारमार्थिकविचारं न कुर्वन्ति। दैवसम्पत्पुरुषाः मोक्ष अधिकारिणः। तेष्वधिकारिषु मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये[29] इति भगवदुक्त्यनुसारेण परमपदप्राप्त्यर्थं प्रयतमानाः विरलाः। यतोहि अनादिप्रकृतिभावात् दैवसम्पत्पुरुषा अपि फलापेक्षिणः भवन्ति।

'लोकोऽयं कर्मबन्धनः' कर्म सर्वान् संसारे बध्नाति, कर्मफलरूपपुण्य-पापात्। 'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्' इतीश्वरनियमः। स्वफलदानेन विना जन्मजन्मान्तरेष्वपि कर्म न नश्यति। पुण्यं पापमुभयमपि स्वफलभोगार्थं जन्मान्तरमुत्पादयति। जन्मान्तरे पुनः कर्म कुर्वन्ति। एवं जन्म कर्म, कर्म जन्मेति पौनःपुन्येन भवन्ति।

तर्हि एतादृशदुःखकारणात् संसारचक्रात् कथं मुक्तिरिति जिज्ञासायां, तत्र कर्मयोगः, संन्यासश्चेति मार्गद्वयमस्तीत्युच्यते। फलासक्तिं विना निष्कामकर्माचरणं कर्मयोग इति। अस्य फलं चित्तशुद्धिसम्पादनम्। यथा

**चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये।**
**वस्तुसिद्धिर्विचारेण न किञ्चित्कर्मकोटिभिः30।।** इति।

निष्कामकर्मेत्येवास्य नाम किमर्थम्? निष्क्रोधकर्म, निर्द्वेषकर्मेत्यादिनामानि कुतो नेति चेत्, सकलकर्मणः मूलं कामः, फलासक्तिर्वा भवति। काम एव कर्मबीजम्, क्रोधादय अस्य अंकुराः।

**काम एष क्रोध एष रजोगुणसमुद्भवः।**
**महाशनो महापाप्मा विध्येनमिह वैरिणम्[31]।।** इति।

अपि च, काम एष सर्वलोकशत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनां स एष कामः प्रतिहतः केनचित्क्रोधत्वेन परिणमते[32] इति शङ्करभगवत्पादाः। क्रोधः लोभमोहादीनामुपलक्षणम्। एतेषां दुर्गुणानां बीजं काम एव। दुर्बीजस्य छेदनेनासुरीसम्पन्नश्यति। तदर्थं निष्कामकर्माचरणमपेक्ष्यते। अनेन चित्तशुद्धिद्वारा ज्ञानमुत्पद्यते। तस्मात्कर्म स्वतः न बन्धकम्, तत्र फलासक्तिः बन्धकारणमिति सिद्धम्।

यद्यद्धि कुरुते जन्तुस्तत्तत् कामस्य चेष्टितम्[33] इति फलापेक्षयैव सर्वे कर्म कुर्वन्ति, नास्ति निष्काम कर्मेति ये कथयन्ति तेभ्यः उच्यते 'यथा माता शिशोः प्रीत्यर्थं शिशुं शुश्रूषते, तथेश्वरप्रीत्यर्थं कर्म करणीयम्' इति।

## पादटिप्पणी

1. भ.गी.शां.भा. 3.
2. भ.गी. 2.48
3. यो.सू. 1.2
4. भ.गी.शां.भा. 2.22
5. भ.गी. 2.50
6. तत्रैव.शां.भा. 16.1
7. छा.उ. 7.8.7
8. गू.दी. उपोद्घातः 3.10
9. ई.उ. 2
10. भ.गी. 3.5
11. तत्रैव 18.11
12. तत्रैव 3.8
13. तत्रैव 4.15
14. सु.र.भा.उ.प्र. 3
15. तत्रैव. 4
16. तत्रैव 1
17. नै.सि. 1.41
18. भ.गी. 4.17
19. बृ.उ. 4.4.22
20. तैत्ति.सं. 1.7.4
22. श्वे.उ. 3.86
22. वे.सि.सू.म. 3.1
23. ब्र.सू. 3.4.26
24. शां.प. 204.8
25. भ.गी. 2.47-48
26. तत्रैव. 18.5
27. तत्रैव 16.24
28. तत्रैव 3.22
29. तत्रैव 7.3
30. वि.चू. 11
31. भ.गी. 3.37
32. तत्रैव.शां.भा. 3.37
33. म.स्मृ. 1.123

ISSN 2348-7828

# मुग्धवोधस्य अर्थ वैशिष्ट्यम

**महेन्द्रः**

**वोपदेवस्य परिचयः**

देशः कालः कृतयश्च वोपदेव नाम्नः ख्यातिस्तावद् वङ्ग प्रदेशे वर्तते। एतस्य व्याकरणस्याध्ययनमध्यापनमचापि बङ्गेषु प्रचलितमित्यवलोक्यते। तत्र तावद् बङ्ग भाषायां व् ब् वर्णयोर भेदादेव वोपदेव एव बोपदेवोऽपि वर्तते। आधुनिक आलोचकैः विन्टरनिट्सः, कीथः, राजेन्द्र लाल मिश्राः, हर प्रसाद शास्त्री, श्रीमती रूक्मणी तथा डॉ. पल्सुले इत्याद्यैः केवलं वोपदेवः मन्यन्ते। परमच पी. वी. काणे महोदय वोपदेवः तथा बोपदेवः द्वे नामनी मन्यते। अर्थवैशिष्टदृष्ट्या वोपदेव शब्दः शिवस्य विष्णोः समीपार्थकः इति ज्ञायते।

यद्यपि बोपदेवः तथा वोपदेवः उभौ प्राप्येते। परमच अनेकैः टीकाकारैः वोपदेवः मन्यन्ते। तथा च दुर्गादास द्वारा स्पष्टीकृतार्थ वैशिष्टदृष्ट्या वोपदेवः वर्तते। यद्यपि वोपदेव महोदयानां वंश विषये कुत्रापि किमपि विवरणं न दृश्यते। तथा एवं श्रूयते यद् अस्य महाभागस्य पितुः नाम केशवः आसीत। अथ केशवः वोपदेवस्य जनकः द्विज-विप्र-पण्डित गोस्वामि इति चतुर्भिः नामभिः ग्रन्थेषु स्मर्यते। अत्र द्विज विप्र नाम द्वयं ब्राह्मणवंशद्योतकमिति।

वोपदेवस्य स्थितिकाल विषये ज्ञायते। यद् अयं देवगिरेः शासकस्य श्रीमहादेवस्य (1260-1272) तत् परवर्ति शासकस्य श्री रामचन्द्रस्य च (1271-1309) उमयोः मन्त्रिणः श्रीहेमाद्रि महोदयस्य आश्रितः पण्डितः आसीत। श्री वोपदेवेन हरिलीलामृतं मुक्ताफलमचेति ग्रन्थद्वयं श्रीहेमाद्रेः प्रेरणया तस्य तुष्टयै च रचितम्। हेमाद्रिणा अस्य हरिलीलामृते। विवेकटीका मुक्ताफले च कैवल्यदीपिका टीका विरचिता। अत एव वोपदेवः हेमाद्रेः समकालिकः आसीत। हेमाद्रिणा रामचन्द्रस्य शासनकाले वोपदेवस्य कृतिषु टीका अपि रचिता। अत एव हेमाद्रेः जीवन कालः 1276 यावत् मन्यते तदा हेमाद्रिणा वोपदेवस्य ग्रन्थेषु प्राप्ताष्टीकाः मृत्युतः पूर्वमेव रचिताः। तथा वोपदेवेन रचितं मूलं ग्रन्थः 1276 इत्यतः पूर्वमेव मन्यते तदा 1271-1272 इति वोपदेवस्य जन्मसमयः इति वक्तुं न शक्यते। यदि एतेषां ग्रन्थाणां 1271-1272 इति कालोऽपि मन्यते तदा वोपदेवस्य जन्म कालः 1240 इत्यतः पूर्वमेव ज्ञायते। वोपदेवस्य पिता केशवः सिंहराज महाभागेण (1210-1240) इति काले सम्मानितः। अत एव केशवः तथा सिंहनः समकालिकौ आस्ताम्। यदि सम्मानित वर्षे केशवस्य आयुः 40 वर्षं मन्यते तदा केशवस्य जन्मवर्षः 1200 ई. वर्तते। तथा वोपदेवस्य जन्मकालः 1240-1250 इत्यतः पूर्वमेव मन्तव्यः। त्रयोदशशताब्दयाः उत्तरार्द्धे रामचन्द्रराज्ये वोपदेवस्य सर्वा रचना अभूत। अत एव वोपदेवः हेमाद्रेः समकालिकः आसीत् इत्यनुश्रूयते। एवमनुमीयते यद् वोपदेवस्य स्थितिकालः त्रयोदशशताब्दी आसीत्।

**निवास स्थानम् -**

वोपदेव द्वारा रचित ''शतश्लोकी'' गन्थेऽस्मिन् प्राप्त पद्ये 'वरदातटम्' 'सार्थभिधानम्' महास्थानम् तथा वेदपद शब्दाः स्थान विशेषस्य परिचायकाः वर्तन्ते। भण्डारकरेण एतेषां पदे नामर्थः एवं मतः। यद् वोपदेवस्य पिता केशवः तथ गुरूधनेश सार्थनामक स्थानम् यद् वरदातटेऽस्ति तत्र निवासं करोतिस्म। अत एव वोपदेस्य निवास स्थानं वेरार मन्यते वेल्वेल्करेणापि वोपदेवस्य निवासस्थान वेरारः एव मन्यते। सुरेश चन्द्रः वन्द्योपाध्यायेण अनेन पद्याधारेण वोपदेवस्य निवासस्थानं बगुडा जिला (बंगाल) इत्यस्य महास्थानस्य वास्तन्यः इति स्वीकृत्तः। डॉ. पल्सुले महाभागेण उपर्युक्तः पद्ये प्रयुक्तः सार्थशब्दं सांकेतिक अर्थः स्वीकृतः। इति पद्ये प्रयुक्तः वेदपदेण तन्नामक स्थानं वोपदेवस्य निवास स्थानं स्वीकृयते। वोपदेवस्य कविकल्पद्रुमे वेदपदस्य, मुग्धबोधे वेदपदास्पद तथा सिद्धमन्त्रप्रकाशे वेदपदौका इत्यादि पदानां प्रयोगः विद्यते। सिद्धमन्त्रप्रकाशे वोपदेवेन महादेवं (पितामहः) वेदपदाभिधानं महाराष्ट्रस्य वास्तव्यः कथितः। तथा केशवस्य गुरोः भास्करं वेदपुरारत्य श्रीमद् राजधानी निवासी विप्रः कथितः। परमच वेदपूर नाम्ना राजधानी उल्लेखो नैव प्राप्यते। डॉ. पल्सूले मते वेदपदः आधुनिक वेदौदः जिला आलियावाद् हैदराबादस्य वर्धा नद्याः तट समीपेऽस्ति। वोपदेवेन भास्कर वेदपुर निवासी मतः। वेदपदः तथा वेदपुरः सम्भवतः एकैव स्थानस्य द्योतकमस्ति। अत एव पुरशब्दस्यार्थः जनपदः ग्रामः अथवा स्थानमस्ति। दुर्गाचार्य द्वारा वेदपदस्यार्थः ''वेदानां पदे व्यवसाये तिष्ठतीति'' गृहीतः। वोपदेवः देवगिरेः शासकस्य तथा रामचन्द्रस्य मन्त्री हेमाद्रेः आश्रितः पण्डितः आसीत। देवगिरिः आधुनिक दौलतावादः इति स्थाने वोपदेवस्य निवास स्थानं भवितुमर्हति। वोपदेवस्य ख्यातिः वङ्ग प्रदेशे एव आधिक्येन प्राप्यते। अथमच अस्य व्याकरणस्य प्रचलनमपि तत्रैव वर्तते। अत एव अयम् महाराष्ट्र देशीयः एव आसीत् इति।

**कृतयः**

वोपदेव द्वारा विरचितनिर्देशक पद्ये व्याकरणस्य दशनां कृतीनामुल्लेखः विद्यते। तथा नव वैद्यकाः एका धर्मशास्त्रस्य, तिसृणां साहित्येन सम्बन्धः, तथा च त्रय भागवता सबद्धानां ग्रन्थामुल्लेखो प्राप्यते। परमच अधुना वोपदेव नाम्ना प्रकाशितः हस्तलेखः तथा उल्लिखित रूपे षड् वैद्यकाः पमच भागवत सम्बद्धाः, एकः गणित ज्योतिषसंवद्धः,

व्याकरणपरको ग्रन्था विद्यन्ते। व्याकरण सम्बद्ध कृतयः यथा पूर्वोक्तः वोपदेवस्य व्याकरणस्य दशनां कृतीनामुल्लेखः प्राप्यते। परमच अधुना केवलं 'मुग्धवोधः' ''कविकल्पद्रुमः'' कृति द्वयमेव प्रकाशितरूपेण प्राप्यते। अत्रापि कविकल्पद्रुमस्य ''काव्यकामधेनुः'' टीकाया हस्तलेख एव लभ्यते। इति लिपिकृतं श्री नंद गुजर गौडेन स्वपाठनार्थं वा टीका वालस्थ पाठनार्थं संवत् 1903 मार्ग शिरं 8 कृतं बुधे लिपि कृतं लेखक पाठकयोः शुभं भूयात्।

**मुग्धवोधः**

वोपदेवेन मुग्धवोधः लौकिकसंस्कृतस्य प्रक्रियाशैल्यामच लिखितो व्याकरण ग्रन्थः। मुग्धवोधे सूत्राणां संख्या (1184) वर्तते। अस्य व्याकरणस्य प्रचलनं बङ्ग प्रदेशे अस्ति। मुग्धवोधस्य लोकप्रसिद्धयाः प्रमाणं ग्रन्थस्य (20) विशंतेरधिकाष्टीकाः सन्ति। मुग्धवोधे संज्ञा सूत्राणि संज्ञा प्रकरणेऽपि प्रत्येकं प्रकरणस्य सम्बद्धसंज्ञा सूत्राणि तत्तत् प्रकरणे विद्यन्ते। एतत् पूर्ववर्ति वैयाकरणेषु नैव दृश्यते। मुग्धवोधस्य प्रक्रियाशैली एव प्रक्रिया ग्रन्थकारेभ्यः विशेष रूपेण पाणिनेरादर्श रूपाभवत्। सूत्रदृष्टया गद्यापद्यात्मकमुभय विध सूत्रम् मुग्धबोधे प्राप्यते। मुग्धवोधः संक्षिप्तो व्याकरण ग्रन्थो विद्यते। ग्रन्थेऽस्मिन् प्रयुक्तानुबन्धानां स्वरूपं प्रयोजनमच पाणिनेः तुलयमैव। व्याकरणेऽस्मिन् पाणिनेरापक्षया संक्षिप्त शब्दावल्याः प्रयोगौऽपि प्राप्यते। यथाक्तंमपि मुग्धबोधे

मुग्धः सुन्दरमूढयोरिति विश्व प्रकाशः। मुग्धः सुन्दरो वोधो ज्ञानं पदपदार्थानां भवत्यस्मादिति मुग्ध बोधम् अथवा मुग्धान् मूढान् अल्पबुद्धि जनान् बोधयतीति मुग्धबोधम्।।

मुग्धबोधस्य प्रकरण क्रमः वर्णोपदेशः संज्ञा, सन्धिः, स्याद्यन्त (शब्दरूपः) क्ति (क्त्यन्तः) सीत्य (प्रत्ययः) स (समासः) त (तद्धित) त्याद्यन्तः (धातुरूपः) तथा कृत प्रत्ययाऽस्ति, कातन्त्रः तथा रूपावतारेण प्रभावितत्वात् अपि एतद् क्रमः सूत्र क्रम दृष्टया मौलिकः विद्यते। रूपावतारे शब्दरूपाणि अकारान्तादि क्रमेण वर्तते। यस्य अनुकरणं वोपदेवेन कृतम्। परमच रूपावतारे धातुरूपे सार्वधातुक तथा आर्धधातुकः क्रमोऽस्ति। वोपदेवस्य भ्वादि-अदादिः क्रमः सर्वथोचितः तथा सरलः अस्ति। मुग्धबोधे संज्ञासूत्राणि संज्ञाप्रकरणे विदितानि अपि प्रत्येकं प्रकरणेन सम्बद्ध संज्ञाः तत्तत्प्रकरणे विद्यते। यद् अन्य व्याकरणेषु नैव प्राप्यते। वोपदेवेन वर्णाणामुपदेशाय पाणिनीयः चान्द्रा, जैनेन्द्रः शाकटायनादि व्याकरणेषु प्रयुक्त। सूत्रात्मक शैल्याः गृहीतः, वोपदेवस्य वर्णोपदेशे 10 सूत्राणि प्राप्यते।

पाणिनीये अ इ उ ण् ऋलृ क् स्थाने अ इ उ ऋलृ क।

ह य व र ट् स्थाने ह य व र ल।

झ म ् घ ढ ध ष् स्थान झ ढ घ ध ं।

मुग्धबोधे हलसूत्रस्य सर्वथा अभावोऽस्ति। वोपदेवस्य वर्णानुक्रमः तथा पाणिनीय वर्णानुक्रमः भिन्नः अस्ति। यथा

| पाणिनीय | वोपदेवः |
|---|---|
| म ङ ण न म् । | ं ण ङ न म । |
| झ भ ् घ ठ ध ष। | झ ढ घ ध भ। |
| ज ब्र ग ड द श। | ज ड द ग व। |

मुग्धवोधे ग्रन्थेऽस्मिन् वर्णानां आद्यन्तसंयोगेण (40) चत्वारिशत् समाहाराणां (प्रत्याहाराणाम्) व्यवहाराऽस्ति। येषु इङ्, एङ्, एह, त्रप, णम्, खध् तथा चक् समाहराणां प्रयोगं अन्य कस्यापि व्याकरणे नैव प्राप्यते। वोपदेवेन एकस्वतन्त्रः सम्प्रदायस्य रचना कृता। परूच सूत्र रचना शैल्यां पाणिनेः पूर्णतः प्रभावो विद्यते। मुग्धवोधेऽपि केचनानि सूत्राणि पाणिनीय अष्टानायीतः अक्षरशः गृहीतनि। यथा

| वोपदेवः | पाणिनिः |
|---|---|
| जश् शसो शिः (132) | जश्शसोः शि 7.1.20 |
| किमः क्षेपे (405) | किमः क्षेपे 5.4.70 |
| स्पर्धायामाङः | (885) स्पर्धायामाङः 1.3.39 |
| अनुबन्धभेदात् - | |
| वोपदेवः | पाणिनीयः |
| अप्यर्नोनित्यम् | (245) शप्श्यनीर्नित्यम् 7.1.89 |
| संख्यायां अवयवे तयट्(460) | संख्यां अवयवे तयप 5.2.42 |
| देये त्राच्च(500) | देये त्रा च 5.4.55 |
| शदाऽगतौतङ् | शदेरगतौ तः 7.3.42 |

मुग्धवोधः संस्कृतस्य व्याकरणस्य संक्षिप्तम् व्याकरण ग्रन्थोऽस्ति। एतस्मिन् गन्थे अल्पकालनैव व्याकरण ज्ञानं प्राप्तुम् उत्सर्गापवादात्क सूत्राणां प्रक्रियाशैल्याः संयोजनमस्ति। वैदिकप्रक्रियायाः तथा अव्यावहरिक शब्दाना सिद्धेरभावोऽस्ति। तथा च संक्षिप्तशैल्यां वर्णसंक्षेपः विशेषरूपेण प्राप्यते। एतेषु आंशिक कृत्रिमः एव मेकाक्षरी संज्ञाकरणं विशिष्टः वर्तते। मुग्धवोधे पणिनेरापेक्षया संक्षिप्त शब्दावल्याः प्रयोगोऽपि प्राप्यते। यद् वैयाकरणेभ्यो रोचते।

**श्री माँ संस्कृत महाविद्यालये**
**ज्वालामुखौ ( हि. प्र. )**

ISSN 2348-7828

# अर्थवादवाक्यशेषयोः वैजात्यचिन्तनम्

डॉ. श्रीराम ए. एस.

**शोधसारः**

धर्मप्रमाणभूतस्यार्थवादस्य लक्षणं किम्, तस्य प्रामाण्यं वर्तते न वा, वाक्यशेषः को भवति, अर्थवादवाक्यशेषयोः पार्थक्येन कथनं किं निमित्तकम्, कुत्रार्थवाद एव वाक्यशेषत्वेन व्यवहृतो भवतीति चिन्तनं कृत्वा तेषां स्पष्टीकरणं चित्रमुखेन कर्तुं कश्चन प्रयासः पत्रेस्मिन् क्रियते।

अर्थवादस्य तु लक्षणमिदं यत् प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवाद इति। यच्च वेदवाक्यं यागादिविधेयं स्तौति, यच्च कलञ्जभक्षणादिनिषेध्यं निन्दति तद्वाक्यमर्थवादः। उदाहरणन्तु ''वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेन उपधावति, स एवैनं भूतिं गमयति''[1] इति। अस्य वेदवाक्यस्य विधेयस्तुतौ एव तात्पर्यम्। अतः अयमर्थवादो भवति। अयं विधिशेष इति उच्यते। यतो विधिवाक्यस्य सन्निधौ अयमर्थवादः श्रुतः। एवं ''सोरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वमि''[2]ति अर्थवादः निषेधसन्निधौ श्रुतः। अयं निषेधशेषः अथवा निन्दार्थवादः। अयं निषेध्यं निन्दति।

एषां स्वातन्त्र्येण यद्यपि प्रामाण्यं न सम्भवति, तथापि विधिनिषेधवाक्येन साकमेकवाक्यताया प्रामाण्यं भवति। अयमर्थवादः यत्र सन्दिग्धार्थनिर्णायको भवति तत्र वाक्यशेषव्यपदेशभाक् भवति। यथा ''यत्रान्या ओषधयो म्लायन्ते तथैते मोदमाना इवोत्तिष्ठन्ति''[3] इति। यवशब्दार्थः क इति विचारावसरे अयमर्थवादो निर्णयदायकः इत्यतः अत्रास्यार्थवादस्य वाक्यशेषत्वव्यवहारः। इतरथा अर्थवादत्वमेव। एवमन्यत्रापि अवधेयम्।

**उपोद्घातः**

धर्माधर्मयोः बोधनार्थं प्रवृत्तं दर्शनं मीमांसा नाम। स च धर्मः यागादिरूपः। मीमांसाभिमतधर्मलक्षणं तु वेदप्रतिपाद्यप्रयोजनवदर्थो धर्म इति। धर्मो वेदप्रतिपाद्यो भवति। स च वेदः इतरनिरपेक्षं प्रमाणम्। वेदः पञ्चधा विभक्तः। सः विधिः, मन्त्रः, नामधेयम्, निषेधः, अर्थवाद इति। वेदविभागे अन्यतमो विभागो भवति अर्थवाद इति।

मीमांसायां द्वादश अध्यायाः सन्ति। तेषु प्रथमाध्याये अष्टौ धर्मप्रमाणानि निरूपितानि। यथा – विधिः, अर्थवादः, मन्त्रः, स्मृतिः, आचारः, नामधेयम्, वाक्यशेषः, सामर्थ्यम् इति। एषु धर्मप्रमाणेषु अर्थवादः एकः, वाक्यशेषः अपरो विद्यते। तयोः पृथग्गणनात् तयोः वैलक्षण्यमस्तीति सुज्ञायते। नानाग्रन्थेषु अर्थवादस्थाने वाक्यशेषपदस्यापि प्रयोगो दृश्यते। क्वचित् वाक्यशेषपदस्थाने अर्थवादपदप्रयोगो दरीदृश्यते। अतः संशयः उदेति यत् अर्थवादपदप्रयोगः कुत्र स्यात्, क्व वा वाक्यशेषपदप्रयोग इति। तदर्थं तयोः लक्षणम् उदाहरणं च परीक्षणीयम्।

**अर्थवादः**

अर्थो नाम प्रयोजनम्। वादः कथनम्। एवं प्रयोजनकथनमिति अर्थवादपदस्य शाब्दिकार्थः। स्तुत्यर्थस्य अथवा निन्दार्थस्य वादः इति व्युत्पत्तिः अर्थवादस्य। तेन प्राशस्त्यनिन्दान्यतरपरं वाक्यम् अर्थवादः इति तल्लक्षणम्। यच्च वेदवाक्यं विधेयं स्तौति, यच्च निषेध्यं निन्दति तद्वाक्यमर्थवादः। ''वायव्यं श्वेतम् आलभेत भूतिकामः''[4] इति विधिसन्निधौ श्रूयमाणः वाक्यविशेषः ''वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेन उपधावति, स एवैनं भूतिं गमयति''[1] इति सः अर्थवादः।

**अर्थवादस्य विभागाः**

अर्थवादस्य प्राधान्येन विभागद्वयं वर्तते। यथा 1. विधिशेषः, 2. निषेधशेष इति। विधिसन्निधौ श्रूयमाणो विधिशेषः। एवं निषेधसन्निधौ श्रूयमाणो निषेधशेषः। विधिशेषस्य विधेयस्तुतौ तात्पर्यम्। निषेधशेषस्य तु निषेध्यनिन्दायां तात्पर्यम्। प्राशस्त्यस्य विध्यपेक्षितत्वात् विधिसमभिव्याहृतार्थवादानां प्राशस्त्यलक्षकत्वम्। अप्राशस्त्यस्य निषेधापेक्षितत्वात् निषेधसमभिव्याहृतार्थवादानमप्राशस्त्यलक्षकत्वम्।

''वायव्यं श्वेतमालभेत भूतिकामः''[4] इति विधिसन्निधौ श्रूयमाणः यः ''वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति''[1] इति अर्थवादः सः आद्यः। ''बर्हिषि रजतं न देयम्''[5] इति निषेधसन्निधौ श्रूयमाणः यः ''सोरोदीत्यदरोदीत् तद्रुद्रस्य रुद्रत्वम्[2] इति अर्थवादः सः निषेधशेषः।

सः अर्थवादः प्रकारान्तरेण द्विविधः। यथा 1. विधिसमभिव्याहृतार्थवादः, 2. विध्यसमभिव्याहृतार्थवादः इति। विधिवाक्येन साकं पठितः अर्थवादः प्रथमः। विधिवाक्यं विना पठितः अर्थवादः द्वितीयः।

सः प्रकारान्तरेण त्रिविधिः। 1. गुणवादः, 2. अनुवादः, 3. भूतार्थवादः इति। उक्तं च –

**''विरोधे गुणवादस्यादनुवादोऽवधारिते।**
**भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः।।''[6]**

प्रत्यक्षादिप्रमाणान्तरेण सति विरोधे अर्थवादो गुणवादः। यथा– ''आदित्यो यूपः''[7] इति। वाक्येनानेनोक्तमादित्ययूपयोः सामानाधिकरण्यं प्रत्यक्षबाधितम्। अतः अयमर्थवादो गुणवादः। प्रमाणान्तरेणावगतस्यार्थस्य बोधकः अर्थवादः अनुवादः। यथा ''अग्निः हिमस्य भेषजमिति''[8]। अनलः शैत्यस्य औषधमिति प्रत्यक्षेण विदितमर्थमयमर्थवादो ब्रुते। अतः अयं गुणवादः। प्रमाणान्तरेण विरोधाभावे, प्रमाणान्तरेणावगतार्थप्रतिपादनाभावे चार्थवादो भूतार्थवादः।

यथा–''इन्द्रो व्रत्राय वज्रमुदयच्छत्''[9] इति। अर्थवादप्रतिपादितार्थस्य प्रतिपादनं नान्येन प्रमाणेन क्रियते। प्रमाणान्तरेण विरोधोपि न दृश्यते। अत: अयमर्थवादो भूतार्थवाद:।

मतान्तरानुसारेणार्थवाद: चतुर्विध: । यथा – 1. विध्यर्थवाद:, 2. निषेधार्थवाद:, 3.परकृति:, 4. पुराकल्प: इति।

मतान्तरानुसारमर्थवाद: सप्तविध:। यथा–1. स्तुत्यर्थवाद:, 2. फलार्थवाद:, 3. सिद्धार्थवाद:, 4. निन्दार्थवाद:, 5. परकृति:, 6. पुराकल्प:, 7. मन्त्र इति।

एषामर्थवादानां धर्मे प्रामाण्यमुत न इति विचिकित्सायां द्वादशलक्षण्यां प्रथमाध्यायगतद्वितीयपादगतप्रथमाधिकरणमवलोकनीयम्। तत्र च सर्वे अर्थवादा: विषय:। उदाहरणन्तु काम्यपशुकाण्डे श्रूयते–''वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेन उपधावति, स एवैनं भूतिं गमयति''[1] इति। इदं चार्थवादवाक्यं ''वायव्यं श्वेतम् आलभेत भूतिकाम:''[4] इति विधिसन्निधौ श्रुतम्। वायुदेवताकेन श्वेतपशुद्रव्यकेन यागेन ऐश्वर्यं भावयेदिति वाक्यस्यास्यार्थ:।

क्षिप्रगामी वायु: स्वोचितेन हविरूपभागेन तोषितो भागप्रदात्रे ऐश्वर्यं यच्छति इति अस्य अर्थवादस्य शक्यार्थ:। लक्षणया अस्यार्थवादस्य प्राशस्त्यमर्थ:। विध्येकवाक्यतापन्नस्य त्वर्थवादस्य यत: शीघ्रगामिस्वभावतया शीघ्रफलप्रदो वायु: अस्य पशुयागस्य देवता, अत: प्रशस्तमिमं वायव्यपशुयागं कुर्यादिति अर्थ: सम्भवति।

**सङ्गति:**

**अर्थवादरूपधर्मप्रमाणनिरूपणात् शास्त्रसङ्गति:, अध्यायसङ्गतिश्च।**

**विध्यतिरिक्तवेदवाक्यरूपधर्मप्रमाणानां प्रामाण्यनिरूपणात् पादसङ्गति:।**

अपौरुषेयत्वात् विधिवाक्यानां प्रामाण्ये सिद्धे, अर्थवादानामपि अपौरुषेयत्वादेव प्रामाण्यसम्भवेपि अर्थवादानां विधिवदनधिगताबाधितार्थप्रतिपादकत्वाभावात् अप्रामाण्यमिति पूर्वपक्षोत्थानात् पूर्वाधिकरणेन साकमाक्षेपिकी सङ्गति:।

**विशय:**

अर्थवादानां धर्मे अप्रामाण्यमुत प्रामाण्यमिति।

**पूर्वपक्षसूत्राणि**

अर्थवादाधिकरणस्य जैमिनीयसूत्राणि पूर्वपक्षोपस्थापकानि इमानि भवन्ति। यथा–आम्नायस्य कियार्थत्वादानर्थकामतदर्थानां तस्मादनित्यमुच्यते–1.2.1। शास्त्रदृष्टविरोधाच्च–1, 2.2। तथा फलाभावात्–1,2.3। अन्यानर्थक्यात्–1,2.4। अभागिप्रतिषेधाच्च–1,2.5। अनित्यसंयोगात्–1,2.6।

**पूर्वपक्ष:**

आम्नायस्य वेदस्य कियार्थत्वात् अंशत्रयविशिष्टभावनाप्रतिपादकत्वात् अतदर्थानाम् आनर्थक्यम् एतादृशभावनाप्रतिपादकानां वैयर्थ्यम्। तस्मात् अतो हेतो: अनित्यमुच्यते अप्रामाण्यं भवति। विधिवाक्यानां तु शक्त्या इष्टसाधनत्वरूपधर्मप्रमाजनकत्वं सम्भवति। परन्त्वर्थवादानां ''ग्रावाण: प्लवन्ते''[10] ''वनस्पतय: सत्रमासत''[11] इत्यादीनां शक्त्या क्वचित् बाधितार्थस्य, क्वचित् सिद्धार्थस्य प्रतिपादकत्वात् न विध्यर्थवादस्य धर्मप्रमाजनकत्वम्, एवं निषेधार्थवादस्य अधर्मप्रमित्युत्पादकत्वं च न सम्भवति।

**तदुपरि प्रश्न:–**

शक्त्यार्थवादानां बाधितसिद्धार्थप्रतिपादकत्वं सम्भवति चेदपि लक्षणया अबाधिताज्ञातविषयप्रतिपादकत्वमङ्गीकृत्य धर्माधर्मप्रमाजनकत्वं वक्तुं शक्यमिति। तत्र, लक्षणास्वीकार: अन्वयानुपपत्त्या वा स्यात्, तात्पर्यानुपपत्त्या वा स्यात्। परमत्र अन्वयानुपपत्ति: न लक्षणाकारणम् । यत: शक्यार्थे स्वीकृतेपि अन्वयस्य उपपद्यमानत्वात्। अस्यार्थवादस्यास्मिन् अर्थे तात्पर्यमिति तात्पर्यग्राहकप्रमाणाभावात् न तावत् तात्पर्यानुपपत्ति:।

इत्थं कथञ्चिदपि प्रामाण्यासम्भवादप्रामाण्यम्।

**सिद्धान्तसूत्राणि**

इमानि सिद्धान्तोपस्थापकानि अर्थात् अर्थवादस्य प्रामाण्यबोधकानि जैमिनीयसूत्राणि– विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु:। 1.2.7। तुल्यं च साम्प्रदायिकम्। 1,2.8। आप्ताप्ता चानुपपत्ति: प्रयोगे हि विरोध: स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत। 1,2.9। गुणवादस्तु। 1,2.10। रूपात्प्रायात् । 1,2.11। दूरभूयस्त्वात् । 1,2.12। स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनम्॥ 1, 2.13। आकालिकेप्सा। 1,2.14। विद्याप्रशंसा। 1,2.15। सर्वत्वम् आधिकारिकम्। 1,2.16। फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणत: फलविशेष: स्यात् । 1,2.17। अन्त्ययोर्यथोक्तम्। 1,2.18।

**सिद्धान्त:**

विधिवाक्येन साकमेकवाक्यतां प्राप्य विधेयस्तावकत्वेन प्रमाणानि स्यु:। अध्ययनविधि: अर्थज्ञानरूपे दृष्टे फले सम्भवति स्वर्गरूपादृष्टफलकल्पनाया: अन्याय्यत्वात् अर्थज्ञानार्थमेवाध्ययनविधायक: इति मन्तव्यम्। अर्थज्ञानस्य निरर्थकत्वे अर्थज्ञानस्य भाव्यत्वं न सम्भवति। साध्यस्य यस्य कस्यापि अलाभे अध्ययने कस्यापि प्रवृत्ति: न स्यात्। तेन अध्ययनविधे: वैयर्थ्यं स्यात्। अत: अध्ययनविधे: वैयर्थ्यपरिहाराय प्रयोजनवदर्थज्ञानोद्देशेन स्वाध्यायाध्ययनं विधीयते। अथवा तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात्, प्रयोजनवदर्थज्ञानसाधनीभूतस्वाध्यायोद्देशेन अध्ययनं विधीयते। एवं च अध्ययनेन स्वाध्यायं भावयेदिति वाक्यार्थ:।

सकलस्यापि वेदस्य प्रयोजनविशिष्टार्थबोधकत्वं यदाध्ययनविधिना बोधितम्, तदा अर्थवादस्यापि प्रयोजनविशिष्टार्थवत्वं भवेत्। शक्त्या तु अर्थवादानां प्रयोजनविशिष्टार्थकत्वं न सम्भवतीति लक्षणा आवश्यकी। प्रकृते अध्ययनविधिरेव तात्पर्यग्राहक इति अर्थवादरूपवेदस्य

प्रयोजनवत्वसिद्ध्यर्थं लक्षणा सिद्ध्यति। एवं लक्षणया विध्यपेक्षित-प्राशस्त्यप्रतिपादकत्वमर्थवादानाम्। एवं स्तावकत्वेनार्थवादानां प्रामाण्यं सिद्धम्।

विधिसन्निधौ श्रूयमाणस्यार्थवादस्य विधेयस्तुतौ लक्षणा, एवं निषेधसन्निधौ श्रूयमाणस्यार्थवादस्य निषेध्यनिन्दायां लक्षणा।

प्राशस्त्यज्ञानं च रुच्युत्पादनद्वारा प्रवृत्तिं प्रति प्रयोजकीभूतेष्ट-साधनताज्ञानं प्रति सहकारि। एवमप्राशस्त्यज्ञानमरुच्युत्पादनद्वारा निवृत्तिप्रयोजकानिष्टसाधनताज्ञानं प्रति सहकारि। स्तुतिः नाम बलवदनिष्टाननुबन्धित्वयोग्यता। निन्दा नाम बलवदनिष्टानुबन्धित्व-योग्यत्वम्।

अस्यार्थवादज्ञाप्यप्राशस्त्यज्ञानस्य लिङर्थशाब्दीभावनायामितिकर्त-व्यतात्वेनान्वयः।

**वाक्यशेषः**

वाक्यशेषो नाम वाक्यस्य विधिवाक्यस्य शेषः अवशेष इति व्युत्पत्त्या अर्थवाद एव। न तु अर्थवादापेक्षया अतिरिक्तो वाक्यशेषः कश्चन विद्यते। अर्थवादस्यैव वाक्यशेषत्वे कुतो वाक्यशेषत्वेन पृथक् व्यवहार इति चेत्, अर्थवादस्य स्वरूपान्तरकथनार्थमेव वाक्यशेषत्व-मिति, अर्थवादस्यैव प्रकारान्तरेण प्रामाण्यमुपस्थापयितुं नामान्तरं प्रदाय अधिकरणान्तरं कृतम्। तस्य निरूपणमत्र क्रियते।

**विषयः**

'अक्ताः शर्कराः उपदधाति'[12] इति विधिसन्निधौ श्रूयमाणो वाक्यविशेषः 'तेजो वै घृतम्'[13] अस्याधिकरणस्य विषयः। अक्ताः अञ्जनसंस्कारेण संस्कृताः, मृत्तिकामिश्रिताः क्षुद्रपाषाणाः उपदधाति स्थापयति इति विधीयते। घृतं तेजोगुणकम् इति द्वितीयवाक्यस्यार्थः।

**संशयः**

सन्दिग्धार्थनिर्णये प्रकृतवाक्यस्याप्रामाण्यमुत प्रामाण्यमिति ।

पूर्वपक्षः

अक्ताः अञ्जनकर्मीभूताः शर्कराः उपधेयाः इत्येतावन्मात्रं विधिना विहितम्। तच्च अञ्जनं यत्किञ्चित् द्रवद्रव्यं विना नेपपद्यत इति आक्षेपादेव यत्किञ्चिदञ्जनसाधनद्रव्यं प्राप्तम् । एवं विधिना यत्किचिदञ्जनसाधनद्रव्यसामान्यस्य बोधितत्वात् तेनैवाञ्जनसाधनद्रव्यस्य निर्णयो जातः।

अञ्जनसाधनद्रव्यसामान्यं तु उपक्रमस्थविधौ श्रुतम् । घृतं तु उपसंहारस्थे अर्थवादे श्रुतम् । विधिना अञ्जनसाधनद्रव्यस्य निर्णीतत्वात्, अर्थवादापेक्षया विधेः प्राबल्यात्, उपसंहारापेक्षयोपक्रमस्यैव प्राबल्याच्चाञ्जनसाधनद्रव्यसामान्येनैवाञ्जनं कार्यम्। तेन तथा च वाक्यशेषस्य न सन्दिग्धार्थनिर्णायकत्वमिति प्राप्ते-

**सिद्धान्तसूत्रम्**

सन्दिग्धेषु वाक्यशेषात्। 1,4.29 ।

सूत्रार्थः

सन्दिग्धार्थेषु संशयग्रस्थेषु विधेयार्थेषु वाक्यशेषादर्थवादान्निर्णय इति।

**सिद्धान्तः**

विधिबोधितसामान्यद्रव्यस्याविधेयत्वात् विशेषाकांक्षायामर्थ-वादेनाञ्जनसाधनीभूतघृतरूपद्रव्यविशेषसमर्पणात् घृतेनैवाञ्जनं कार्यम्। अर्थवादसमर्पितघृतद्रव्यस्य परिग्रहे न कोपि विरोधः। एवं घृतद्रव्येणा-ञ्जनसाधनीभूतद्रव्याकांक्षायाः शान्तौ घृतातिरिक्तद्रव्यान्तरस्यापेक्षा न सम्भवति।

अर्थवादाधिकरणोक्तरीत्या अर्थवादविध्योः एकवाक्यता सम्पादनीया। तच्च उभयोः एकार्थकत्वे एव सम्भवति। तथा च विधिनापि घृतमेव बोधनीयम्।

अतः अर्थवादस्य सन्दिग्धार्थनिर्णायकत्वेनापि प्रामाण्यं सम्भवति।

एवं च यत्र संशये सति अर्थवादस्य निर्णायकत्वम्, तत्र वाक्यशेषव्यवहारः।

**वाक्यशेषेण सन्दिग्धार्थनिर्णयः**

चातुर्मास्येषु 'द्वयोः प्रणयन्ति, तस्मात् द्वाभ्यां यन्ति'[14] इत्यनेनाग्निप्रणयनं विहितम्। परं चातुर्मास्येषु चत्वारि पर्वाणि सन्ति। वैश्वदेवः, वरुणप्रघासः, साकमेधः, शुनासिरीय इति। अतः संशयो भवति कयोः द्वयोः प्रणयनमिति। संशये सति संशयहर्ता अर्थवादः श्रूयते 'ऊरू वा एतौ यज्ञस्य, यद्वरुणप्रघासश्च साकमेधश्च'[15] इति। वरुणप्रघासः, साकमेधः इति पर्वद्वयं सक्थिवत् प्रधानमिति अर्थवादेन स्तुतिः कृता। यद्विधेयं तस्य स्तुतिः इति न्यायेन मध्यमपर्वणोः एव प्रणयनमिति वाक्यशेषवशात् निर्णीयते।

एवं 'यवमयश्चरुः भवति'[16] इत्यत्र यवपदार्थः कः इति संशये 'यत्रान्ये ओषधयो म्लायन्ते तथैते मोदमाना इवोत्तिष्ठन्ति'[3] इति अर्थवादवशेन यवशब्दार्थो निर्णीतः। एवं सन्दिग्धार्थनिर्णायकार्थवादस्य वाक्यशेषत्वव्यवहारः। तेषां चित्रणमत्र प्रदीयते।

**अर्थवादस्य चित्रणम्**[17]

प्रथमाध्यायः
धर्मप्रमाणम्
विधिः → अग्निहोत्रं जुहोति
अर्थवादः → वायुर्वै क्षेपिष्ठा देवता
मन्त्रः → उरु प्रथस्व
स्मृतिः → अष्टकाः कर्तव्याः
आचारः → होलाकोत्सवः
नामधेयम् → अग्निहोत्रं जुहोति
वाक्यशेषः → तेजो वै घृतम्
सामर्थ्यम् → स्रुवेण अवद्यति

ISSN 2348-7828










विधिः वायव्यं श्वेतम् आलभेत भूतिकामः

विधिशेषः- वायुः वै क्षेपिष्ठा देवता

वायुमेव स्वेन भागधेयेन उपधावति स एवैनं भूतिं गमयति।

वायुदेवताकः अयं यागः प्रशस्तः

निषेधशेषः

निषेधः - बर्हिषि रजतं न देयम्

निषेधशेषः – सः अरोदीत्, यत् अरोदीत्, तत् रुद्रस्य रुद्रत्वम्।

विरोधे गुणवादः स्यात् अनुवादोवधारिते।
भूतार्थवादः तद्धानात् अर्थवादः त्रिधा मतः।।

अर्थवादः

गुणवादः अनुवादः भूतानुवादः

आदित्यो यूपः

प्रमाणान्तरेण विरोधे सति गुणवादः

अनुवादः

प्रमाणान्तरेण प्राप्तार्थबोधकः अर्थवादः

अग्निः हिमस्य भेषजम्

भूतानुवादः

उभयविधरूपार्थवादाभावे

इन्द्रो वृत्राय वज्रम् उदयच्छत्

ISSN 2348-7828

उदाहरणम् ( परिभाषानुसारेण )

निन्दा ➡ असत्रं वा एतद् यदच्छन्दोदम्

स्तुतिः ➡ शोभते अस्य मुखं य एवं वेद

परकृतिः ➡ अग्निर्वा अकामयत

पुराकल्पः ➡ तमशपद् धिया धिया त्वा वध्यासुः

प्राशस्त्यस्य प्रयोजनम्

आलस्यादिवशात् अप्रवर्तमानस्य पुंसः रुच्युत्पादनद्वारा प्रवृत्तिजननम्।



लौकिकः अर्थवादः

विधिः - इयं गौः क्रेतव्या



अर्थवादः - वर्षापत्या, स्त्र्यपत्या, बहुक्षीरा



वाक्यशेषस्य चित्रणम् 17

वाक्यशेषः

विधिः – अक्ताः शर्कराः उपदधाति



वाक्यशेषः – तेजो वै घृतम्



## आकरसूची

1. तैत्तिरीयसंहिता – 2.1.1
2. तैत्तिरीयसंहिता – 1.5.1
3. शतपथब्राह्मणम् – 3.6.1.10
4. तैत्तिरीयसंहिता – 2.1.1
5. तैत्तिरीयसंहिता – 1.5.1
6. तन्त्रवार्तिकम् –1–2–1
7. तैत्तिरीयब्राह्मणम् – 2.1.5.2
8. तैत्तिरीयसंहिता – 7.4.18
9. तैत्तिरीयब्राह्मणम् – 1.7.6.6
10. मूलम् – 1–2–1
11. मूलम् – 1–2–1
12. तैत्तिरीयब्राह्मणम् – 3.12.5.12
13. तैत्तिरीयब्राह्मणम् – 3.12.5.12
14. शतपथब्राह्मणम् – 11.5.3.2.5.8
15. शतपथब्राह्मणम् – 11.5.2.3.5
16. शतपथब्राह्मणम् – 5.2.4.10
17. तत्तच्चित्राण्यन्तर्जालपुटात्सङ्कलितानि।

## सन्दर्भः

1. जैमिनीयन्यायमाला – सायणमाधवाचार्यः – चोखम्भा संस्कृत संस्थानम् वाराणसी
2. मीमांसान्यायप्रकाशः – आपदेवः – सम्पूर्णानन्दविश्वविद्यालयः– वाराणसी।
3. अर्थसंग्रहः – लौगाक्षिभास्करः – श्रीरामः ए.एस् – श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः–तिरुपतिः।
4. शास्त्रदीपिका – पार्थसारथिमिश्रः – चोखम्भा कृष्णदास अकादमी– वाराणसी।
5. भाट्टदीपिका – खण्डदेवः – निर्णयसागरः – मुम्बापुरी।
6. पूर्वमीमांसा–उद्धरणकोषः

**Assistant Professor**
**Department of Dharmashastra - Mimamsa**
**Faculty of Sanskrit-Vidya Dharma-Vijnan**
**Banaras Hindu Universit, Varanasi**
**Uttar Pradesh-221005**

ISSN 2348-7828

# महायानसम्प्रदाये पारमितानां महत्त्वम्

डॉ. प्रदीपकुमारद्विवेदी

महायानसाधकानां कृते बोधिचित्तग्रहणान्तरं पारमितायाः सेवनमावश्यकम् भवति। 'पारमिता' शब्दस्य अर्थः पूर्णत्वमस्ति। अस्याः पालिरूपं 'पारमी' इति। अतो निर्वाणप्राप्त्यर्थं षट्पारमिताभावनाऽवश्यकरणीया उक्ता सौगतसाधनापद्धतौ। दानपारमिता, शीलपारमिता, क्षान्तिपारमिता, वीर्यपारमिता, ध्यानपारमिता, प्रज्ञापारमिता चेति षट्पारमिताः। आसां षण्णां पारमितानां साधनातः पूर्वं करुणाभ्यास आवश्यकः। यतो हि करुणाभ्यास एव महायानसाधनापद्धतेर्मूलम्। करुणायाः स्वरूपमुपस्थापयता भिक्षुणा अवलोकितसिंहेन निगदितम्–

**गुणानामद्वयं श्रेष्ठं विना चित्तेन भूषणम्।**
**साधूनां दयितं नित्यं कारुण्यमिति कथ्यते।।[1]**

एवं दया, कृपा, करुणोत्यनर्थान्तरं कोशप्रसिद्धम्। सर्वेषु भूतेषु करुणा मातेव हितकारिणी भवति। पुरुषा यां समाश्रित्योत्तमं सुखं प्राप्नुवन्ति–

**कृपा सर्वेषु भूतेषु मातेव हितकारिणी।**
**यां समाश्रित्य पुरुषाः प्रयान्ति सुखमुत्तमम्।।[2]**

देवा अपि एतादृशं दयावन्तं सदावृततं सर्वभूतहिते रतं जनं प्रणमन्ति। अतः सुखार्थिना करुणाभावना सेवितव्या।

**मृद्वाशया हि ये मर्त्याः साधुवत काञ्चनोपमाः।**
**कारुण्यमक्षयं तेषां सदा मनसि वर्तते।।**
**ते च सत्त्वाः सदोद्युक्ता नित्यं धर्मपरायणाः।**
**येषां कारुण्यदीपेन हृदयं सम्प्रकाशितम्।।[3]**

लोके हि कारुण्यमविनाशि धनं प्रोक्तं महर्षिभिः –

**कारुण्यं मुनिभिः शस्त्रं कारुण्यं निर्मलं सरः।**
**कारुण्यं दोषनिर्घाति कारुण्यं धनमव्ययम्।।[4]**

कारुण्यं सर्वदोषनिर्घाति गुणानाञ्च सर्वेषां भूषणम्। धैर्यपरायणे जनः कारुण्यनावमारुह्य महावेगं भवार्णवं लङ्घते। अतो दयारत्नं सदा सेव्यम्। सुखस्य मूलं कृपैव। हृदि यस्य कृपा नास्ति स दुःखी परिकीर्त्यते।

सर्वेषु भूतेषु करुणा हितकारिणी भवति, सन्तः सुखमुत्तमं प्राप्नुवन्ति, सदा सर्वभूतहिते रताः च भवन्ति। अथ च शीलवाक्करुणान्विताः जनाः देवलोकमाप्नुवन्ति–

**प्रयाति देवलोकं च शीलवान् करुणान्वितः।**
**कृपान्वितः स पुरुषो चन्द्रमा इव शोभते।।[5]**

करुणाभ्यासं सम्पूर्य प्रथमा दानपारमिता भावयितव्या, अनया करुणाभ्यासः पूर्णो भवति, चित्तं च निर्मलं भवति। एवम् एकैकपारमितापूर्त्यनन्तरं क्रमशोऽन्या अपि पारमिताः भावनीयाः। शुद्धाशुद्धदानस्य स्वरूपस्थापयता भिक्षुणा अवलोकितसिंहेनोक्तम्–

**गुणद्वादशसंयुक्तं मलैर्द्वादशभिर्विना।**
**दानं भवति शुद्धं तद् विपरीतं सकल्मषम्।।[6]**

**1. दानपारमिता–**

लोके हि धनबलमुत्तमं परिगणितम्। तेन धनेन यदि दानं न क्रियते तर्हि स धनवानपि पुरुषोऽधम एवोक्तः। दानं विना केवलाहारकांक्षिणः पुत्रदारावशानुगाश्च पुरुषाः लोभमात्सर्यमलिना भवचक्रे एव भ्राम्यन्ति। अतो लोभग्रन्थिविमोक्षाय याञ्चावक्षक्षयाय च दानमालम्बनीयम्, येन तमो निश्चयनाशो भवेत्। शीलेन परिभाविते दानाम्भसि नरः स्नात्वा दुःखस्य ज्ञानविस्तीर्णविमलं पारं यातुं समर्थः। आत्मनो हितमिच्छता पुरुषेण स्वस्मै त्रयो दीपा अवश्यं प्रज्वालनीयः दानं, शीलं ज्ञानञ्चेति। यथोक्तम्–

**पुरुषेण त्रयो दीपाः प्रज्वाल्या हितमिच्छता।**
**दानं शीलं तथा ज्ञानमेते दोषविनाशकाः।।[7]**

एवं दानी भवार्णवं तरति। दानं सुखानुगन्ता मार्गः। यतो हि दानेन शीले ज्ञाने च मतिर्भवति। अतः शीलरक्षायै ज्ञानप्राप्त्यै, तृष्णानाशाय च साधकेन दाने रतिः कार्या। तथाचोक्तम्–

**शीलवानपि कालज्ञोऽज्ञानाद्( वा )परिमुच्यते।**
**दुःखनैर्याणिको मार्गः शस्तोऽयं मुनिपुंगवैः।।[8]**

अयञ्च मनुष्यलोक एव कर्मभूमिः। न देवा दानपतयः श्रुताः। फलभूमिस्तु सुरालयः। दानमाहात्म्येनैव सुरालयः प्राप्तुं शक्यते।

एवं दानमेव सदा प्रशस्तं कर्म। दानेनैव दुःखात् विमुक्तिर्जायते। यावत् तृष्णा तिष्ठन्ति, तावत् ज्ञानिनोऽपि दानशीलाः न भवन्ति। लोके सर्वेषु दर्शनेषु सर्वेषु धर्मेषु च सुखावहं दानं एव प्रशस्तं कर्म विद्यते। दानस्य स्वरूपं प्रतिपादयता भगवता श्रीकृष्णेन उक्तम्– दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।

**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्।**
**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।**
**दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम्।।**
**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम्।।[9]**

सुखाय सर्वे जनाः सचेष्टाः भवन्ति। सुखं विना दानं कदापि न सम्भाव्यते। दानवशादेव शीलवृद्धिः तृष्णानिवृत्तिश्च जायेते। अदानात् मृतः सन् प्रेतभूमिं सम्प्राप्य क्षुत्पिपासाभ्यां दह्यते। दानरतः सुधार्मिकश्च चक्रवर्तीराजा भवति। दातारो मात्सर्यमलवर्जिताः भवन्ति। अतः देवत्वं

पूर्णत्वञ्च प्राप्त्यर्थं दाने स्वाभाविकीप्रवृत्तिः करणीया। लोकः दानेन प्रियत्वमाप्नोति, तुष्टिमधिगच्छति श्रीमान् च भवति जनः। गुरुभ्यः शोभनकर्मभ्यः यद् दीयते तत् सदा सुखाय एव भवति। दानरहितः पापाचारी भवति। दानं मातृवत् पितृवदेव नित्यं सुखावहं भवति–

**पञ्चगत्युपपन्नानां सत्त्वानां स्वेन कर्मणा।**
**मातृवत् पितृवद् दृष्टं दानं नित्यं सुखावहम्।।**[10]

इह लोके सुवर्णकंकणैर्युक्तः पुरुषः यदि ध्यानाध्ययननिर्मुक्तो दानशीलविवर्जितोऽस्ति, स जीवनापि मृतवदेव।[11] यस्य दानदीपने ज्ञानप्रदीपेन च हृदयं नावभासितं सोऽज्ञानी मनुष्यचर्मणाच्छन्नोऽपि तिर्यग्भूत एवात्र चरति। किं बहुना, दानहीनो च मर्त्यः, अपि त्वयं प्रेतिविग्रहवानेव मन्तव्यः। एवं दानशीलज्ञानयुतो गुणवानेवात्र लोके महीयते। एतदेव आलक्ष्योपसंहरति–

**एतां भूमिमवस्थाप्य सत्त्वो दानरतो भवेत्।**
**दानशीलता नित्यं मुच्यन्ते भवसङ्कटात्।।**[12]

बोधचर्यावतारग्रन्थे आर्यशान्तिदेवेन दानपारमिताविषये उक्तमस्ति–

**फलेन सह सर्वस्वत्यागचित्ताज्जनेऽखिले।**
**दानपारमिता प्रोक्ता तस्मात् सा चित्तमेव तु।।**[13]

अर्थात्–सर्वस्वं बाह्याध्यात्मिकं सर्वं वस्तु दानं दानफलं च सर्वसत्त्वेभ्यः परित्यजतोऽभ्यासेन प्रकर्षगमनाद् यदा अपगतमात्सर्यमलं निरासङ्गतया चित्तमुत्पद्यते, तदा दानपारमिता निष्पन्न इत्युच्यते। तस्मात् सा दानपारमिता चित्तमेव, नान्या।

**2. शीलपारमिता–**

**दौःशील्यम् अशुभं रूपं शीलं तद्विरितिः द्विधा।**
**बुद्धेन प्रतिषिद्धाच्च परिशुद्धं चतुर्गुणम्।।**[14]

एवमशुभं रूपं दौःशील्यमित्युच्यते। दौःशील्यविरतिरेव शीलम्। विरतिरस्ति विज्ञप्तिः, येन कर्मणा हेतुभूतेन विरतो भवति। अविज्ञप्तिः स्वविरति कार्यम्। भगवता प्रतिषिद्धात्कर्मणो विरतिरपि शीलम्। यथा विकालभोजनादि विरतिः। शीलं परिशुद्धमस्ति, यत इदं चतुर्भिर्गुणैः युक्तम्। तच्च चतुर्गुणं न दौःशीलविप्लुतं, न दौःशील्यहेतु विप्लुतं, दौःशील्यविपक्षस्य सुशीलताया आश्रमभूतं शान्त्याश्रयः दौःशील्यहेतवः क्लेशा उपक्लेशाः।

वस्तुतः भावना हि चित्तं वासयति। शीलस्य फलं प्रधानतः स्वर्गं प्रहाणमार्गार्था च भावना। उक्तञ्च आचार्यवसुबन्धुना–

**दानस्य पूरिः कृपया सर्वेभ्यः सर्वदानतः।**
**क्षान्तिशीलस्याङ्गच्छेदे सरागस्याप्य कोपतः।।**[15]

एवं कृपापुरःसरं सर्वेभ्यः सर्वं दत्त्वा बोधिसत्त्वेन दानपारमिता पूरिता। सरागस्य (अवीतरागस्य) अपि बोधिसत्त्वस्य कोपं विना एव अङ्गच्छेदः क्षान्तिपारमिताः शीलपारमितायाश्च पूर्तयेऽभूत्।

आर्यशान्तिदेवेन उक्तं बोधिचर्यावतारे ग्रन्थे– चित्तमेव शीलपारमिता वर्तते–

**मत्स्यादयः क्व नीयन्तां मारयेयं यतो न तान्।**
**लब्धे विरतिचित्ते तु शीलपारमिता मता।।**[16]

अर्थात्–प्राणातिपातादिसर्वावद्यविरतिचित्तमेव हि शीलम्, न पुनः तदाश्रयभूत–बाह्यविषयनिवृत्तिस्वभावम्। यदि पुनः वधादिविषयवस्तु–अभावेन तत् वधादि–अभावात्–शीलं स्यात्, तदा ते मत्स्यादयः क्व नीयन्तां यत्र तेषां दर्शनं न स्यात्। अन्यथा तद् वधादि–उपक्रमे शीलं न स्यात्। न च एवम्। तस्मात्तेषु विद्यमानेष्वपि लब्धे विरतिचित्ते निवृत्तिमनसिकारे शीलपारमिता मता सम्मता तत्स्वभावविदाम्; तस्मात् सा चित्तमेव शीलपारमिता।[17]

**धनानामुत्तमं शीलं सूर्यो ज्योतिष्मतामिव।**
**विहाय गच्छति धनं शीलं स्थितमिवाग्रतः।।**[18]

एवं शीलं सूर्य इव शोभते। यदि चेतनाभावितं दानं शीलं च परिरक्षितं स्यात् तर्हि तेन परिरक्षितेन शीले नैव तथा सुखं प्राप्तुं शक्यते यथा माता पित्रादिभिरपि न दातुं पार्यते। शीलवानेव निर्वाणसुखं प्राप्नोति। शीलेन परिरक्षितो जनो मृत्युकाल उपस्थिते न विभेति?, यतो हि शीलं सर्वसौख्यप्रवर्तकमाद्यन्तकल्याणं च वर्तते। शीलवस्त्रेण येच्छन्नास्तेच्छन्नाः पुरुषाः मताः।

शीलं स्वर्गस्य सोपानमस्ति। शीलं निर्वाणसुखगामिकमिति धर्मज्ञैः सङ्केतितम्। अतः शीलवानसंख्यानि सौख्यान्युपभुनक्ति। अतः सर्वसौख्यदायकं शीलं सता पुरुषेणावश्यमेव भावयितव्यम्। एवं दान–शीलयुता दान्ता सर्वभूतहिते रता मैत्रीभावनया युक्ता देवसङ्गतिं यान्ति। शीलवाजिनमारूढाः पुरुषस्तत्त्वचिन्तका अन्तेः देवभवनं तु अवश्यं प्रयान्ति, यतो हि इह लौकिकं पारलौकिकं च सुखं शीलाचाराधीनमेव। अत एवोक्तम्–

**स्वगृहं हि यथा मर्त्याः प्रविशान्ति गतव्यथाः।**
**तथा शीलसमाचाराः प्रयान्ति त्रिदिवं नरः।।**
**एतत् सुजीवितं श्रेष्ठं यच्छीलपरिरक्षणम्।**
**मरणानां परं मृत्युः यच्छीलपरिवजर्नम्।।**[19]

शीलं संसारोत्तरणाय प्लवभूतः। शीलाचरणस्य परिणामो निर्वाणसुखम्। परन्तु यः कश्चित् स्वर्गाकाङ्क्षयैव शीलमाचरति, तर्हि तस्य तृष्णाक्षयो न भवति, तेन निर्वाणं ततो दूरमेव स्यात्। अतः भौतिकसुखं प्रति निरपेक्षेण निर्वाणकाङ्क्षयैव शीलमाचरणीयम्–

**शीलप्रशस्तसम्बुद्धैर्निर्वाणपुरगामिकम्।**
**आयुर्याति ध्रुवं धीमान् नित्यं शीलेन बृंहितम्।।**[20]

तच्च शीलं त्रिविधम्– हीनम्, मध्यम् विशिष्टं च। तस्य फलमपि त्रिविधम्– हीनम्, मध्यम्, उत्तमं च। अप्रमादोषबृंहितं शीलं नित्यं सुखदम् इति शीलस्य धर्मता। शीलप्रभा सूर्यहस्रप्रभामप्यत्येति। यो नरोत्तमः शीलं संरक्षति, स सुगतेन देशितं फलं प्राप्नोति एव।

**शीलोद्भवा या विमला प्रभा भवति देहिनाम्।**
**न सा सूयर्सहस्त्रस्य संयुक्तस्य भविष्यति।।**

**शीलं सप्तविधं रम्यं यो रक्षति नरोत्तमः।**
**स कामं भुञ्जति फलं सुगतेन च देशितम्।।**[21]

शीलं धनेषु सर्वोत्तमम्। मानवः शीलेन देवलोकं परमं सुखञ्च प्राप्नोति। दुष्चरितं परित्यजति मोहान्धसंसारात् विनिवृत्तो भवति। सदा कार्याकार्यतत्त्वज्ञः शीलवान् भवति। यदि शीलं परित्यजति जनः, तदा नरके गच्छति दुःखञ्चानुभवति। शीलस्य फलं विपुलं सुखमेव। शीलचारी क्षमावान् सुप्रसन्नो भवति। तस्मात् सुप्रसन्नेन मनसा शीलं रक्षणीयम्। मानवाः शीलमाश्रित्य सम्यक-दर्शनतत्पराः जायन्ते। दानधर्मशीलाः शान्तिमधिगच्छन्ति। सत्यमेतद् यत् शीलादृते अन्यत् सुखसाधनं नास्ति। तस्मात् देवसुखं यदि अभीष्टं तर्हि शीलं समाचरेत्। शीलेन रक्षितः पुरुषो देवसानिध्यं गच्छति एव। अतो दौःशील्यं सदा वर्ज्यम् ?-

**तस्माच्छीलं सदा कार्यं दानज्ञानतपोधनैः।**
**दौःशील्यं च सदा वर्ज्यं विषशस्त्रानलोपनम्।।**[22]

**3. क्षान्तिपारमिता-**

क्षान्तिपारमिता विषये बोधिचयार्वतारग्रन्थकारेण आर्य-शान्तिदेवेन उक्तं, न चित्ताद् भिन्न क्षान्तिपारमितापि इति आह-

**कियतो मारयिष्यामि दुर्जनान् गगनोपमान्।**
**मारिते क्रोधचित्ते तु मारिताः सर्वशत्रवः।।**[23]

परापकारादिसम्भवेऽपि चित्तस्य अकोपनता क्षान्ति। अन्यथा यदि सर्वशत्रूणां तद् विनिपातेन वैरनिर्यातनं कृतवतः केनचिद् वैराभावात् उपशान्तवैरस्य न कश्चिदपकारी स्यात। इति मर्षणं क्षान्तिः। तदा एतदशक्यानुष्ठानम्। शत्रवो हि गगनसमत्वादपर्यन्ताः, तेषां मारणमशक्यम्। तस्मात् क्रोधादिनिवृत्तिचित्तमेव तेषामुपायेन मारणमिव, तत्कृतापकारस्यागणनात् जन्मजन्मान्तर-वैर-असम्भवात् च मारितप्रायास्ते।[24]

क्षान्तिः, क्षमा तितिक्षा चेति एकस्य एव अर्थस्य विभिन्नाः पर्यायाः। तितिक्षापि निर्वाणगामिनोऽत्यावश्यिकी साधना। तदेव विवृणोति-

**क्षमावान् पुरुषः सर्वप्रियो भवति देहिनाम्।**
**पूज्यते दैवतैर्नित्यं तस्मात् क्षान्तिः परंतप।।**[25]

क्षमा हि परमं तप इति भावः। क्षान्त्या यथा भूषितो भवति पुमान्, तथा नेतरैर्धनैरिति क्षान्तिधनं सर्वधनप्रधानम्। क्षमावन्त एव लोके वस्तुतो धनवन्तः भवन्ति। उक्तञ्च भिक्षुणा अवलोकितसिंहेन-

**क्षान्तिधनं धनं शीलप्रज्ञावर्धनमेव च।**
**धनान्यन्यानि शस्तान्ति न हितस्य कथञ्चन।।**[26]

क्रोधदोषैः विवर्जितः क्षमायुक्तो पुरुष इह लोक परत्र च सर्वत्र पूज्यते। सद्धि ?: अपि यशसा क्षमावानेव पूज्यते-

**क्षमावान् पुरुषः सर्वैः क्रोधदोषैर्विवर्जितः।**
**यशसा पूज्यते नित्यमिह लोके परत्र च।।**
**पूज्यते सततं सद्भिर्यशसा चैव पूज्यते।**
**क्षमावान् पुरुषः सर्वस्तस्मात् क्षान्तिपरो भवेत्।।**[27]

सर्वेषां धनानां सत्यपि विनाशे क्षान्तेः कदापि विनाशो न भवति। निखिलदोषशून्यः इहलोके परत्र च यशसामपि वर्धते। सर्वप्राणिप्रियः क्षमावान् भवति। क्रोधविषयस्य क्षान्ति एव परममौषधम्। सर्वेषां तपसां परमं तपः क्षान्तिरेव। दुःखविघातिका सुखावहा क्षान्ति। इयमेव स्वर्गसोपानभूताः। क्षान्तिरेव शिवात्मिका मातेव हितकारिणी सन्मार्गप्रदायिनी च। एतस्याः क्षमायाः माहात्म्यमेव वर्णितं धर्मसमुच्चयग्रन्थे-

**सा गुणौघैः सदा पूर्णा शिवा भवति देहिनाम्।**
**सा प्रशस्ते सुखे प्राप्ते क्षान्तिः[28]कार्या प्रयत्नतः।**
**सर्वलोकस्य मातेव सन्मार्गमृतदीपिका।।**

**4. वीर्यपारमिता-**

वीर्यपारमिता तु कुशलोत्साहस्वभावा अतिविस्पष्टं चित्तमेवेत्याह आर्यशान्तिदेवेन बोधिचर्यावतारग्रन्थे-

**सहापि वाक्शरीराभ्यां मन्दवृत्तेर्न तत्फलम्।**
**यत्पटोरेककस्यापि चित्तस्यापि ब्रह्मतादिकम्।।**[29]

वचनकायसहितस्यापि चितस्य कुशलपक्षे मन्दप्रचारस्य न तादृशं फलमुपजायते, यादृशं ध्यानादिविषये पटुप्रवृत्तेरेकाकिनोऽपि चित्तस्य फलं ब्रह्मभूयादिकम्। तस्मात् सा वीर्यपारमिता चित्तमेव।[30] मिलिन्दपञ्हपालिग्रन्थे उल्लेखमस्ति- भासितं पेतं, महाराज, भगवता- 'विरियवा खो, भिक्खवे, अरियसावको अकुसलं पजहति, कुसलं भावेति। सावज्जं पजहति, अनवज्जं भावेति; सुद्धमत्तानं परिहरती'ति।[31]

श्री शीलभिक्षु-अवलोकितसिंहः विवरीतुमिच्छति चतुर्थी वीर्यपारमिताम् (वीर्यम्= उत्साहः) -देशाकालोपपन्नस्य क्रियातिथ्योचित्तस्य च।

**न्यायेनारभ्यमाणस्य वीर्यस्य[32] सकलं फलम्।।**[33]

अर्थात्-न्यायदेशक्रियाहीना अधर्मेण विवर्जिताः वीर्येण परिवर्जिताः पुरुषस्य कार्यनिकराः सीदन्ति-

**न्यादेशक्रियाहीना अधर्मेण विवर्जिताः।**
**सीदन्ति कार्यनिकरा वीर्येण परिवर्जिताः।।**[34]

आरब्धवीर्याश्च निर्वाणरूपं भवजालमोक्षमधिगच्छन्ति। वीर्यवान् पुरुषो यानि कार्याण्यारभते, तानि समृद्धानि पूर्णानि च भवन्ति। लोकसम्मताः लोकोत्तराश्चाथार्ः वीर्येणैव साधयितुं शक्यते। यथोक्तम्-

**मन्दवीर्यं चिरोत्साहं सद्धर्मेण विवर्जितम्।**
**नरो विशति लोकं च शशाङ्कमिव कल्मषम्।।**[35]

परन्तु मानवः वीर्येण सद्धर्मे प्रवृत्तो भवति। उत्साहस्य प्राप्तिरपि वीर्येणैव भवति। शक्त्या बोधितत्त्वस्य प्राप्तिः भवति। उक्तञ्च-

**वीर्येणावाप्यते बोधिः स्ववीर्येण तथा मही।**
**अर्हत्त्वं वीर्यवद्धि ?श्च तस्मान्नाग्निसमागतिः।।**[36]

जरामरणवर्जितमनुत्तमं स्थानं ज्ञानेन लभमानो नरः वीर्यशात् शान्तेन्द्रियः जायते। स एव न रो यदि वीर्यधनो महोत्साहश्च भूत्वा आर्याष्टाङ्गमार्गेण ज्ञानं परिपालयति, सोऽन्ते परमां गतिं प्राप्नोति-

**आर्याष्टाङ्गेन[37]मार्गेण न ज्ञानपरिपालितः।**
**वीर्यवत्तामहोत्साहो प्रयाति परमां गतिम्।।[38]**

अतः साधकेन उत्तमस्थानप्राप्त्यर्थं वीर्यारम्भ मतिः कार्या। भिक्षुणा अवलोकितसिंहेन उक्तम्–

**तस्मात् देवान् गुणान् मत्वा वीर्यवान् नियतेन्द्रियः।**
**वीर्यारम्भे मतिं कुर्यान्नास्ति वीर्यसमर्थनम्।।**
**वीर्यार्थी स्मृतिमान् यश्च नरो ज्ञानपरायणः।**
**प्रयात्यनुत्तमं स्थानं जरामरणवर्जितम्।।[39]**

**5. ध्यानपारमिता–**

ध्यानपारमिता पञ्चमी। तां विवृणोति ध्यानम्–एकाग्रता। तथा चोक्तं भिक्षुणा अवलोकितसिंहेन–

**असंसक्तमतेर्नित्यं नित्यं ध्यानविहारिणः।**
**विशुद्धमनसो नित्यमेकाग्रभिरतस्य च।।[40]**

आचार्यशान्तिदेवस्य मतमस्ति ध्यानं तु चित्तैकाग्रतालक्षणं चित्तादन्यथा वक्तुमशक्यम् इति आह–जपास्तपांसि सर्वाणि दीघर्कालकृतान्यपि।

**अन्यचित्तेन मन्देन वृथैवेत्याह सर्ववित्।।[41]**

अर्थात्–मन्त्राद्यावर्तनलक्षण वचनव्यापारा जपाः। तपांसि च इन्द्रियदमनलक्षणाः कायिकाः। तानि अतिबहुकालमभ्यस्तान्यपि अन्यत्र सक्तचित्तेन मिद्धाद्युपहितचित्तेन वा। समानपाटवविकलेन इत्यर्थः। वृथैव निष्फलमेव, अत्यर्थकृशफलत्वात्, अभिमतार्थेऽनुपयोगाद्वा। पुत्रोऽप्यपुत्र एव, पुत्रकार्याकरणाद्यथा। इत्याह भगवान् सवर्ज्ञः। तस्माद् ध्यानपारमितापि चित्तमेव।[42]

यस्य चित्तमन्यत्र न तदेकाग्रमस्ति, दोषास्तस्य कथमपि बाधका न भवितुमर्हन्ति। स

दोषभयनिर्मुक्तो भवति। तस्य चित्तमेकाग्रं भूत्वा विवेकम् अनुसरति, विवेकेन च स सर्वतर्कविनिर्मुक्तो भूत्वा स्वस्थो भवति। उक्तञ्च–

**यस्यैकाग्रकरं चित्तं तस्य दोषा न बाधकाः।**
**स दोषभयनिर्मुक्तः स्वस्थ इत्यभिधीयते।।**
**एकाग्राभिरतश्चेतो विवेकमनुधावति।**
**सर्वतर्कविनिर्मुक्तः स्वस्थ इत्यभिधीयते।।[43]**

ध्यानजं समाधिजं च चित्तम् एकाग्रतासुखं लभते। एकान्तमनाः संक्षिप्तेन्द्रियश्च पुरुषो दोषनिचयविनिर्मुक्तो भवति। बुधो हि ज्ञानाम्भसा तृष्णाग्निनातिवृद्धं दोषजालं हन्ति। हत्वा च स विशुद्धस्तृष्णाविमुक्तो भवति।

ध्यानं निवार्णपुरगामी श्रेष्ठो मार्गः। अतः योगी मनो निगृहयैव ध्यानजं सुखं लब्धुं शक्नोति। ध्यानजं सुखं निरुपमं भवति। यथोक्तम्–

**तत्र स्थिताः नराः श्रेष्ठाः श्रद्धावन्तो मनीषिणः।**
**प्रयान्ति परमं स्थानमशोकं हतकिल्विषम्।।**
**निर्विषस्कस्य तुष्टस्य निरागस्यापि धीमतः।**
**यत् सुखं ध्यानजं[44] भाति कुतस्तस्योपमा परा।।[45]**

एवं परमं पदं प्राप्त्यर्थं ध्यानैः मनः कार्यम् इति निगदित भिक्षुणा अवलोकितसिंहेन–

**एतत्सारं सुधीराणां योगिनां पारगामिनाम्।**
**यदेवेदं मनः श्रुत्वा प्रयान्ति पदमच्युतम्।।[46]**

**6. प्रज्ञापारमिता–**

**प्रज्ञा–विषये आचार्यशान्तिदेवेन उक्तं बोधिचर्यावतारे– प्रज्ञा तु निर्विवादा चित्तमेव।[47]**

**आचार्यवसुबन्धुना उक्तम् अभिधर्मकोशग्रन्थे– प्रज्ञाऽमला सानुचराऽभिधर्मः,[48] तत्र**

प्रज्ञा=धर्मप्रविचयः। अमलेति अनास्रवा। सानुचरेति सपरिवारा। एवमनास्रवः पञ्चस्कन्धोऽभिधर्म इत्युक्तम्। सा प्रज्ञा त्रिविधा– श्रुतमयी, चिन्तामयी भावनामयी च। भिक्षुणा अवलोकितसिंहेन उक्तं– धर्मानुसारिणी प्रज्ञा वीर्येण परिबृंहिता।

**समाधिबलसंयुक्ता मातेव हितकारिणी।।[49]**

सा हि सर्वान् नरान् गतिपञ्चकात् त्रायते। मृत्युकाले च सम्प्राप्ते न माता न पिता न च बान्ध्वास्तवमनुगन्तं शक्नुवन्ति, परं सा तमनुगच्छत्येव। ज्ञानी शीलकन्दरशोभनं प्रज्ञाशिखरम् आरुह्य सर्वं भवदोषं द्रष्टुं शक्नोति–

**सा हि सन्त्रायते सर्वान् पुरुषान् गतिपञ्चकात्।**
**न माता न पिता तत्र गच्छन्तमनुगच्छति।।**
**प्रज्ञाशिखरगारुह्य शीलकन्दरशोभनम्।**
**भवदोषमिदं सर्वं पश्यति ज्ञानभूषणः।।[50]**

ज्ञानी समाधिना प्रज्ञा लब्ध्वा भवसागरं तरति। ज्ञानं (प्रज्ञा) च दान–शील–तपोध्यानैः श्रेष्ठमुच्यते। महायने प्रसिद्धेषु अष्टसु मार्गेषु प्रज्ञा (सम्यग्ज्ञानम्) मोक्षप्रदोष्टमो मार्गः श्रेष्ठ उक्तः–

**चक्षुषां च परा दृष्टा प्रज्ञोक्ता या सुनिर्मला।**
**मार्गाणां चाष्टमो मार्गः शिवः प्रोक्तस्तथागतैः।।[51]**

सत्यचतुष्टये दुःखनिरोधः दुःखनिरोधगामिनीप्रतिपच्चेति द्वे सत्ये स्तः। सर्वा जन्मपद्धतिः सर्वदोषनिर्वहश्च ज्ञानशस्त्रेण छेत्तुं शक्यौ नास्ति लोके ज्ञानात् परः सहायवान् बन्धुभूतः।

प्रज्ञा समाधिबलसंयुक्ता सर्वथाहितकारिणी भवति। यत्र पितरौ न गच्छतः, तत्र प्रज्ञा गच्छति। दानशीलतपोध्यानैः प्रज्ञायाः प्राधान्यं वर्धते। प्रज्ञाबलमेव सर्वोत्कृष्टं बलम्। अमृतानां परं ज्ञानं श्रेयसामुत्तमं निधिभूतम्।

अतः गतस्पृहैरेव प्रज्ञा सेवनीया। अतो ज्ञानशीलयुता वीतरागा गतस्पृहा वृद्धास्तत्त्वमार्गनिदर्शकाः सदैव सेव्याः पारमिताः।

ISSN 2348-7828

## सहायकग्रन्थाः

1. धर्मसमुच्चयः, भिक्षु अवलोकितसिंहः, सम्पादकः - विजयशङ्कर चौबे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी, 1883 तमे ख्रैस्ताब्दे।
2. बोधिचर्यावातरः, आर्यशान्तिदेवः, प्रधानसम्पादकः- स्वामिद्वारिकादास-शास्त्रि, बौद्धभारती, वाराणसी- 2001 ई. ।
3. बौद्धधर्ममीमांसा, आचार्यबलदेव उपाध्याय, चौखम्बा विद्याभवन, वाराणसी-2011
4. अभिधर्मकोशम्, आचार्य वसुबन्धु, प्रधानसम्पादकः - स्वामिद्वारिकादास-शास्त्रि, बौद्धभारती वाराणसी, -2008
5. मिलिन्दपञ्हपालि, भिक्षुनागसेनः, प्रधानसम्पादकः - स्वामिद्वारिकादास-शास्त्रि, बौद्धभारती, वाराणसी- 2006
6. श्रीमद्भगवद्गीता, गीताप्रेस, गोरखपुर-2068 सं., (एक सौ नब्बेवां पुनर्मुद्रण)

## पादटिप्पणी

1. धर्मसमुच्चयः, करुणावर्गः, का.- 17
2. धर्मसमुच्चयः, करुणावर्गः, का.- 01
3. धर्मसमुच्चयः, करुणावर्गः, का.- 9-10
4. धर्मसमुच्चयः, करुणावर्गः, का.- 13
5. धर्मसमुच्चयः, करुणावर्गः, का.- 4
6. धर्मसमुच्चयः, दानवर्गः, का.- 1
7. धर्मसमुच्चयः, दानवर्गः, का.- 7
8. धर्मसमुच्चयः, दानवर्गः, का.- 25
9. श्रीमद्भगवद्गीता- 17/20, 21, 22
10. धर्मसमुच्चयः, दानवर्गः, का.- 47
11. ज्ञानशीलविनिर्मुक्तो दानरत्नविवर्जितः।
जीवमानोऽपि पुरुषो मृत इत्यभिधीयते।। - धर्मसमुच्चयः, दानवर्गः, का.- 43
12. धर्मसमुच्चयः, दानवर्गः, का.- 48
13. बोधिचर्यावतारः, का.- 5/10
14. धर्मसमुच्चयः, पृ.सं. - 203
15. अभिधर्मकोशः, 4/111
16. बोधिचर्यावतारः, का.- 5/11
17. बोधिचर्यावतारः, पृ.सं. - 64
18. धर्मसमुच्चयः, शीलवर्गः, का.- 1
19. धर्मसमुच्चयः, शीलवर्गः, का.- 51, 52
20. धर्मसमुच्चयः, शीलवर्गः, का.- 15
21. धर्मसमुच्चयः, शीलवर्गः, का.- 72, 73
22. धर्मसमुच्चयः, शीलवर्गः, का.- 83
23. बोधिचर्यावतारः, का.- 5/12
24. बोधिचर्यावतारः, पृ.सं. - 64
25. धर्मसमुच्चयः, क्षान्तिवर्गः, का.- 2
26. धर्मसमुच्चयः, क्षान्तिवर्गः, का.- 4
27. धर्मसमुच्चयः, क्षान्तिवर्गः, का.- 3, 5
28. क्षान्तिस्त्रिविधा। तद्यथा - धर्मनिध्यानक्षान्तिः, दुःखाधिवासनाक्षान्तिः, परोपकारधर्मक्षान्तिश्चेति।
- नागार्जुनस्य धर्मसङ्ग्रहात्। (धर्मसमुच्चयः, पृ.सं.- 213)
29. बोधिचर्यावतारः, का.- 5/15
30. बोधिचर्यावतारः, पृ.सं.- 65
31. मिलिन्दपञ्हपालि, महावग्गो विरियलक्खणपञ्हो।
32. चेतसः समुत्साहो 'वीयम्'। पुष्यतिष्य-सम्बुद्धस्य एकपादे स्थित्वा सप्ताहोरात्रं स्तुतिः अस्य वीर्यपारमिता पूर्यते। वीर्यं त्रिविधम्। तद्यथा- संनाहवीर्यम्, प्रयोगवीर्यम् परिनिष्ठावीर्यम् च इति। (धर्मसमुच्चयः, पृ.सं.- 214)
33. धर्मसमुच्चयः, वीर्यवर्गः, का. -1
34. धर्मसमुच्चयः, पृ.सं.- 2
35. धर्मसमुच्चयः, वीर्यवर्गः, का. - 6
36. धर्मसमुच्चयः, वीर्यवर्गः, का.सं.-8
37. सम्यग्दृष्टि ?:, सम्यक्सङ्कल्पः, सम्यग्वाक्, सक्यक्कर्मान्तः, सम्यगाजीवः, सम्यग्व्यायामः, सम्यक्स्मृतिः, सम्यक्समाधिश्चेति।
38. धर्मसमुच्चयः, वीर्यवर्गः, का.सं.-7
39. धर्मसमुच्चयः, वीर्यवर्गः, का.सं.-9, 10
40. धर्मसमुच्चयः, ध्यानवर्गः, का.सं.-1
41. बोधिचर्यावतारः, का.सं.- 5/16
42. बोधिचर्यावतारः, पृ.सं.- 65
43. धर्मसमुच्चयः, ध्यानवर्गः, का. -2,3
44. चत्वारिध्यानानि सन्ति। तद्यथा- सवितर्कं सविचारं प्रीतिसुखमिति प्रथमं ध्यानम्। अध्यात्मप्रमोदनात्प्रीतिसुखमिति द्वितीयम्। उपेक्षास्मृतिसंप्रजन्यसुखमिति तृतीयम्। उपेक्षास्मृतिपरिशुद्धिरदुःखसुखा वेदेनेति चतुर्थध्यानम् इति।
45. धर्मसमुच्चयः, ध्यानवर्गः, का. -12
46. धर्मसमुच्चयः, ध्यानवर्गः, का. -14
47. बोधिचर्यावतारः, पृ.सं.- 65
48. अभिधर्मकोशम्, 1/2
49. धर्मसमुच्चयः, प्रज्ञावर्गः, का.सं.-1
50. धर्मसमुच्चयः, प्रज्ञावर्गः, का.सं.-2,3
51. धर्मसमुच्चयः, प्रज्ञावर्गः, का.सं.-6

**बौद्धदर्शनविभागः**

**के.सं.वि.वि., एकलव्यपरिसरः,**

**अगरतला, त्रिपुरा**

ISSN 2348-7828

# वचोविच्छित्तिपदार्थविचार:

मनोरमा

**उपोद्घातः –**

**विभिन्नाः कोषध्यायि वचोविच्छित्तिः –**

idiom – इड् –डि–अम्– a specific form of e&presion of a language,भाषागत विशेषत्व,मुहावरा

idioms–वाग्रीतिः, वाग्वृत्तिः, वाग्व्यापारः, वाग्व्यवहारः, वाग्धारा, विशेषवाक्यं, विशिष्टवचनं, विशिष्टवाक्यं, विशिष्टभाषा, भाषालक्षणं, भाषावच्छेदः, अवच्छेदकवाक्यं, विशेषवचनं, सविशेषवाक्यं, भाषाविशेषणं, विशेषभाषा,सम्प्रदायः,

**व्याकरणदिशा तेषाम् व्युत्पत्ती –**

भाषा–स्त्री, भाष्यते शास्त्रव्यवहारादिना प्रयुज्यते इति। भाष् +,''मुरोश्च हलः'', 3.3102, इत्यप्रत्ययः। टाप् युक्तेकृते भाषा इति निष्पद्यते।

लक्षणम् – क्ली, (लक्ष्यतेह्यनेनेति ।लक्ष+ल्युट् ।यद्वा, ''लक्षेरट् च'',उणा.3.7। इति नप्रत्ययस्तस्याडागमश्च अनेन रुपम् नपुंसकलि. प्राप्ते लक्षणम् इति रुपम्)।

व्यवहारः – पुं ( वि+अव्+हृ+घञ् ) अर्थविशेषवाधनाय शब्द विशेषप्रयोगे।

वचनम् – क्ली, उच्यतेह्यनेनेति। श्लेष्मनाशकत्वादस्य तथात्वम्। वच् + ल्युट्। वाक्यम् इति तत्पर्य्यायः।

धारा – स्त्री, धीर्य्यन्ते यया। धृ+णिच् + अङस्त्रीयां टाप् इति।

वाक्यम् – क्ली, उच्यते इति ।वच् +ण्यत्''चजोः कु घिण्यतोः'' 7.3.52 इति कुत्वम्। शब्दसंज्ञात्वात् वचोह्यशब्दसंज्ञायाम् 7.3.67। इति निषेधो न।

विशेषः – पुं, (वि+शिष+घञ) प्रभेदः।a different or various object, various particulars ex. !

Idiom - an expression that has become established in a language and that has a meaning that cannot be derived from the meaning of its individual elements, have bats in one's belfry meaning to be mad or eccentric. The language peculiar to a people or to a district, community, or class .the syntactic, grammatical, or structural form peculiar to a language. A characteristic style or form of artistic expression the modern jazz idiom.

Examples - hit the sack.

Your guess is as good as mine.

Back against the wall .

Good things come to those who wait.

Idiom - a group of words in a fixed order having a particular meaning , different from the meanings of each word understood on its own . to 'have bitten off more than you can chew' is an idiom that means you have tried to do something which is too difficult for you .the idiom of a particular person, place, or style of music, art, building, etc. is their particular and typical style of expression. They hoped their brave action would, in the Marxist idiom, 'bring about a proletarian revolution'. The opera is very much in the modern idiom.

विषयः–

वाचः प्रयोगप्रकारविशेषः एव 'वाग्रूढि' पदेन निर्दिष्टः। दैनन्दिने वाग्व्यवहारे क्वचित् सहजा चमत्कृतिः या परिस्फुरति सा एव वाग्रूढिः। क्वचित् सरलतया विषयस्य अवबोधनाय एतादृश्यः वाग्रूढ्यः आश्रीयन्ते।'वाचोयुक्तिः' अपि कथनप्रकारविशेषः एव अत्र वाच्यार्थमर्यादाम् अतिक्रम्य लक्ष्यार्थव्यङ्ग्यार्थद्वारा अभिप्रेतः अर्थः प्रतिपाद्यते।'वाचोविच्छित्तिः' इत्यपि अयं निर्दिश्यते। अलङ्कारिकतल्लजः कुन्तकः 'भङ्गीभणितिः' इति पदं प्रयुङ्क्ते अस्मिन् एव अर्थे। आङ्गलभाषया अयं भावः 'ईडियम्' इति पदेन निर्दिश्यते।

संस्कृतभाषायामपि एवंविधाः असंख्याकाः शब्दाः उपलभ्यन्ते तादृशानाम् अर्थविशेषपरिपुष्टानां शब्दानां पदबन्धानां च कोशस्यैकस्य निर्माणेन काव्यादिषु तेषां प्रयोगः, प्रयुक्तानां चार्थज्ञानं सुलभं भवेदिति धिया इदम्, एवम् च –

कृत्तध्दित्तसमासैकशेषसनाद्यन्ताः पञ्चवृत्तयः केवलं संस्कृत–भाषयामेवोपलभ्यन्ते। भाषायामस्यां षष्ठीतत्पुरुषसप्तमीतत्पुरुषादिनामभिः ये व्यवह्रियन्ते समासाः तत्सदृशाः केचित् समासाभासाः आङ्गलभाषादिषु विरलतया दृश्यन्ते चेत् दृश्यन्तां नाम। अन्यषां समासानां सर्वथा तत्र अभाव एव, का कथा वृत्त्यन्तराणाम्। एतेषु 1.समासेषु – ङ्.अव्ययीभावे केचन अर्थविशेषप्रतिपादकाः ''तिष्ठद्गु'' ''आयतीगवम्'' इत्यादयः। ङ्.विशिष्टार्थाः ''उदम्भरिः'' ''कण्ठेकालः'' ''देवानाम्प्रियः'' इत्यादयः ष. अलुक्समासाः समासान्तप्रत्यययोगेन लब्धवर्णपरिवर्तनाः ''सुगन्धिः'' इत्यादयः समासाः। ''पितरौ'' ''वक्रदण्डौ'' इत्यादयः केचन एकशेषवृत्तिसंबद्धाः शब्दाः।

ईषद्वर्णभेदेन भिन्नानर्थान् बोधयन्तः ''समजः–समाजः'' ''भोग्यम्–भोज्यम्'' इत्यादयः कृत्प्रत्ययान्ताः, अर्थविशेषेषु प्रयुक्ताः ''पञ्चक'' ''सौस्नातिकः'' इत्यादयः तध्दितान्ताः। पदभेदेन (परस्मैपदात्मनेपदभेदेन) अर्थं भिन्नं बोधयन्ति कानिचित् क्रियापदानि। भिन्नार्थद्योतकलकारान्तानि क्रियापदानि तद्घटितानि कानिचित् वाक्यानि, कारकाणि, विशिष्य उपपदविभक्त्यः 'दुष्टाय क्रुध्यति' इत्यादीनि। 'कथंकारं भुङ्क्ते' इत्यादयः केचित् णमुलन्तप्रयोगाः। 'वशंवदः' इत्यादयः कृतखस् प्रत्ययाः केचन शब्दाः। एकस्मिन्नेवार्थे दिवधा प्रयोक्तुं शक्याः 'तुन्दपरिमृजः', 'तुन्दपरिमार्जः' इत्यादयः शब्दाः। 'अश्नीतपिबता, अवतप्ते नकुलस्थितम्, तत्त्वनिष्ठुरम्,कृतहस्तः, इत्यादयः अर्थविशेषवाचकाः।

उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते।

**प्रहाराहारसंहारविहारपरिहारवत्।।**

**इत्युक्तरीत्या उपसर्गाणां योजनेन धातुषु सुमहती**

अर्थपरिवृत्ति: दृश्यते। तेषां सर्वेषामप्यर्थ विशेषाणां वर्णनाय स्वतन्त्रतया एक: ग्रन्थ: निर्मातव्यो भवेत्। तर तमा र्थकयो: ईयसुन् इष्ठ प्रत्यययो: प्रयोगेण वाक्ये किञ्चिद् वैचिर्त्यमिव प्रतिभाति, पाणिन्यादय: वैयाकरणा: तत्तत्प्रकृतिभ्य: तेषां तेषां तद्धित प्रत्ययादिनां विधानम् अकुर्वन्। प्रकृत्यन्तरैरपि एषां प्रत्ययानां योजनेन नूतनानां विविधार्थबोधनक्षमाणां शब्दानां निर्माणं कर्तुं शक्यते। अत एव प्रक्रियासर्वस्वस्य निर्माता महाकवि: नारायणभट्टतिरि: चन्द्रभोजादिनिर्मितव्याकरणनिर्देशपुर:सरं यथावकाशं केषाञ्चित् नूतनानां शब्दानां निर्मिति: अवश्यकर्तव्येति–

**पाणिन्युक्तं प्रमाणं न तु पुनरपरं चन्द्रभोजादिशास्त्रं**
**केह्यप्याहुस्तल्लधिष्ठं न खलु बहुविदामस्ति निर्मूलवाक्यम्।**
**बह्वङ्गीकारभेदो भवति गुणवशात् पाणिने: प्राक् कथं वा**
**पूर्वोक्तं पाणिनिश्चाप्यनुवदति,विरोधेह्यपि कल्प्यो विकल्प:।।**

इत्युपक्रम्य प्रतिपादयति अपाणिनीयप्रमाण्यसाधनाख्ये लघुनिबन्धे। पात्रेसमित:, खादतमोदता, इत्यादीनां बहूनां शब्दानां परिशीलननेन ज्ञायते एतादृशानां केषांचिदन्येषां लोकसभायां शूर:, जल्पतप्रशंसता, इत्यादीनां पदबन्धानां, तद्धितान्तानां च नूतनानां शब्दानां निर्माणे न कोह्यपि दोष इति। तदा भाषायां शब्दाभाण्डागारस्य वृद्धि: भवेत्। इति.

उदाहरण–असिधारामधुलेह:, मात्स्यन्याय:, लाङ्गुलतरणम्, वलीमुखनारिकेल:, रावणकाष्ठम्, शल्यसारथ्यम्, शाखाचङ्क्रमणं, रामठकरण्ड:, केसरी भक्षयेन्न तृणम्,मृगतृष्णाम्भसि स्नात: खपुष्पकृत–शेखर:। एष वन्ध्यासुतो याति शशशृङ्गधनुर्धर:, आदि:।।

Subject of idioms are hindi language –

मुहावरे की परिभाषा (idioms)– ऐसे वाक्यांश, जो सामान्य अर्थ का बोध न कराकर किसी विलक्षण अर्थ की प्रतीति कराये, मुहावरा कहलाता है। मुहावरा भाषा विशेष में प्रचलित उस अभिव्यक्तिक इकाई को कहते हैं, जिसका प्रयोग प्रत्यक्षार्थ से अलग रुढ लक्ष्यार्थ के लिए किया जाता है। मुहावरा किसी भाषा में आने वाला वह वाक्यांश है, जो अपने शाब्दिक अर्थ को न वताकर किसी विशेष अर्थ को वताता है।

उदाहरण – 1. कक्षा में आने की सूचना पाकर मैं ख़ुशी से फुला न समाया अर्थात् बहुत खुश हो जाना।

2. केवल हवाई किले बनाने से काम नहीं चलता, मेहनत भी करनी पडती है

अर्थात् कल्पना में खोए रहना । इन वाक्यों में ख़ुशी से फूला न समाया और हवाई किले बनाने वाक्यांश विशेष अर्थ दे रहे हैं । यहां इनके शाब्दिक अर्थ नहीं लिए जाएँगे । ये विशेष अर्थ ही मुहावरे कहलाते हैं ।

विशेषता – मुहावरे का प्रयोग वाक्य के प्रसंग में होता है, अलग नही। जैसे ,कोई कहे कि पेट काटना तो इससे कोई विशेष अर्थ प्रकट नहीं होता है। इसके विपरीत, कोई कहे कि मैंने पेट काटकर अपने लडके को पढाया, तो वाक्य अर्थ में एक संकेत, सुंदरता और एक लय प्राप्त हो जाती है।

2. मुहावरा अपना असली रुप कभी नही बदलता अर्थात् उसे पर्यायवाची शब्दों में परिवर्तित नहीं किया जा सकता जैसे –कमर टूटना एक मुहावरा है, लेकिन् इसके स्थान पर कमर टुटने के पर्यायवाची शब्द कटिभंग जैसे शब्द का प्रयोग गलत होगा ।

3. मुहावरे का शब्दार्थ नहीं, उसका विशेष अर्थ ही ग्रहण किया जाता है , जैसे खिचडी पकाना । ये दोनों शब्द जब मुहावरे के रुप में प्रयुक्त होगें, तब इनका शब्दार्थ नहीं लिया जाता ।

लेकिन् ,वाक्य में जब इन शब्दों का प्रयोग होगा ,तब विशेष अर्थ होगा – गुप्तरुप से सलाह करना ।

4. मुहावरे का अर्थ प्रसंग के अनुसार होता है । जैसे लडाई में खेत आना। इसका अर्थ युद्ध में शहीद हो जाना है, न कि लडाई के स्थान पर किसी खेत का चला आना ।

5. हिन्दी के अधिकतर मुहावरों का सीधा सम्बन्ध शरीर के भिन्न भिन्न अंगों से है । यह बात दूसरी भाषाओं के मुहावरों में भी पायी जाती है, जैसे मुँह, कान हाथ पाँव इत्यादि पर अनेक मुहावरे प्रचलित हैं । हमारे अधिकतर कार्य इन्हीं के सहारे चलते हैं ।

मुहावरों के प्रकार – निम्नलिखित आधारों पर वर्गीकृत किया जा सकता है –

1. सादृश्य पर आधारित,सोने पर सुहागा.
2. शारीरिक अंगों पर आधारित,आँखे चुराना.
3. असंभव स्थितियों पर आधारित,दिन में तारे दिखाई देना.
4. कथाओं पर आधारित,साँप को दुध पिलाना.
5. प्रतीकों पर आधारित,ढाई दिन का बादशाहत होना.
6. घटनाओं पर आधारित,काँटा निकालना.

उपसंहार: –

**संस्कृते भारतीयानां शुद्धा श्रद्धाभिवर्धताम्।**
**विनूत्नै: शब्दसंघातै: संस्कृतं चाभिवर्धताम्।। इति।**

## पादटिप्पणी

1. dictionary English and Sanskrit.
2. Monier Williams
3. Motital banarsidass publishers private limited Delhi,
4. Shree ganga pustakalaya, gaighat, bannaras.
5. अ.क 6. सि.क
7. अष्टा.
8. Longman dictionary of contemporary english2004
9. Concise o&ford English dictionar4
10. पंचतन्त्र 2/4
11. वाल्मीकियरामायण (कि.का)88/29
12. व्या.भुषणसार: 13. चा.नि
14. अ.क 15. सि.क
16. अष्टा.
17. Longman dictionary of contemporary english2004
18. Concise o&ford English dictionar4
19. पंचतन्त्र 2/4
20. वाल्मीकियरामायण (कि.का)88/29
21. व्या.भुषणसार: 22. चा.नि

ISSN 2348-7828

# रीतिसिद्धान्तस्य विकासपरम्परा काव्यात्मत्वञ्च

डॉ. सुधीर कुमार

रीति शब्दो हि 'रीङ्' धातुना 'क्तिन्' प्रत्ययेन निष्पन्नः। यदर्थञ्च मार्गं, चलनं, निर्माणं वा। तथा चोक्तम् ?– 'रीङ्गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते''। काव्ये रीतिः शब्दः नैकाचार्यैः नैकनाम्ना निर्दिष्टाः। यथा– वामनेन रीतिनाम्ना, कुन्तकेन मार्गनाम्ना, मम्मटेन वृत्तिनाम्ना, आनन्दवर्धनविश्वनाथाभ्यां पदसंघटनानाम्ना, राजशेखरेण वचनविन्यासक्रमनाम्ना, दण्डिना मार्गनाम्ना च उल्लिखः।

राजशेखरमतानुसारं सुवर्णनाभः अस्य सिद्धान्तस्य प्रवर्तकः आसीत्। परन्तु तस्य कश्चिद् ग्रन्थः नोपलभ्यते। अतः वामन एव आद्याचार्यः येन रीतेः स्पष्टतया साङ्गोपाङ्गविस्तृतञ्च निरुपणं कृतं तथा च अस्याः काव्यात्मत्वं प्रतिष्ठापितम्।

''रीतिरात्माकाव्यस्य''[1] इति तस्य प्रमुखः सिद्धान्तः। रीतिः का ? इत्याकाङ्क्षयामुच्यते ''विशिष्टपदरचनारीतिः''[2] ''विशेषो गुणात्मा''[3] अर्थात् ? रचनायां वैशिष्ट्यमेव रीतिः। तथा च रचनायामियं विशिष्टता माधुर्योजादिगुणानामवस्थित्यैव उत्पन्ना भवति। अत एव गुणोपरि रीतिसिद्धान्तः अवलम्बित इत्यपि वक्तुं शक्यते। सिद्धान्तेऽस्मिन् ? गुणरीत्योः सम्बन्धे घनिष्टेति कारणात् ? इदं रीतिमतं गुणसम्प्रदायनाम्नाऽपि व्यवहृतम्।

प्रारम्भिककाले रीतीनां सम्बन्धः देशविशेषेणैवासीत् ?। यत्प्रान्तिनो यादृश्यां शैल्यां विशिष्टतां प्राप्तवन्तस्तत्प्रान्तनाम्ना तादृशशैल्याः प्रसिद्धिरभूत्। तत्र वैदर्भ्यां विदर्भप्रदेशेन, गौड्यां वंगप्रदेशेन, पाञ्चाल्याः पाञ्चाल (पंजाब) प्रदेशेन, लाट्या लाट (गुजरात) प्रदेशाभिधेयेन सम्बन्धः आसीत्।

वामनात्पूर्वमलङ्काराणां वर्चस्वमासीत् काव्यशास्त्रे। अस्य शास्त्रस्य आरम्भकाले प्रायः सर्वेऽपि ग्रन्था अलङ्काराश्रित्यैव निर्मिताः। तथा च सिद्धान्तोऽयं गुणोपरि अवलम्बितः। अतः वामनार्चयेण गुणालङ्कारयोः परस्परं स्फुटं प्रभेदं प्रतिपादयन् अलङ्काराणाम् ? अपेक्षया गुणानां विशेषमहत्त्वं प्रतिपादितम् ?। तेनोक्तम् ?–

**''काव्यशोभायाः कर्तारोधर्माः गुणाः।**
**तदतिशय हेतवस्त्वलङ्काराः॥''[4]**

अलङ्कारसम्प्रदायापेक्षया एतत् सिद्धान्तस्यालोचनादृष्टि सूक्ष्मातिगहना च प्रतीयते। यतो हि वामनार्चायेण काव्यशोभायाः उत्पादकधर्माः गुणाः स्वीकृताः, अलङ्कारास्तु तस्याः शोभाभिवर्धका एव। अत्र काव्यज्ञेषु गुणालङ्कारविषये वैमत्यं दरिदृश्यते। केचनाचार्याः काव्यमार्गे गुणालङ्कारयोः भेदः न परिगण्यन्ते। तेषु भट्टोद्भटः प्रमुखाचार्यः। तेन काव्यालङ्कारस्य टीका ''भामहविवरणम्'' इत्यस्मिन् ग्रन्थे गुणालङ्कारयोः भेदः एका मिथ्या कल्पना स्वीकृता। तेनोक्तम् यत् लौकिके संसारे गुणालङ्कारयोः भेदः सम्भवः यतो हि हारादीनाम् अलङ्काराणां शरीरेण सह संयोगसम्बन्धः भवति तथा च शौर्यादीनामात्मना सह समवायसम्बन्धः। अतः लोके भेदसम्भवः परन्तु काव्ये माधुर्योजादिगुणानाम् अनुप्रासोपमाद्यलङ्काराणां उभयोरपि नित्य समवायसम्बधेनैव स्थितिर्भवति। अतः काव्ये भेदोपपादनम् नोचितम्। तेन स्वविचारः एवं व्यलेखि–

''समवायवृत्या शौर्यादयः संयोगवृत्त्या तु हारादयः गुणालङ्काराणां भेदः, ओजः प्रभृतीनाम् अनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डालिकाप्रवाहेणैवेषां भेदः।''[5]

अतः भट्टोद्भटः अभेदवाद्याचार्येति वक्तुं शक्यते। वामनस्तु भेदवाद्याचार्यः। तस्य रीतेः सिद्धान्तः गुणालङ्कारयोर्भेदकृत्वैव तिष्ठति।

**विकासपरम्परा–**

काव्यशास्त्रे रीतिसिद्धान्तस्य विकासपरम्परा अतिप्राचीना अस्ति। काव्यज्ञेषु रीतितत्त्वस्य स्वसमयानुगुणं विभिन्ननि नामानि प्रचलितानि। तेषां काव्यज्ञानां रीतिसिद्धान्तः अत्र प्रस्तूयते।

**भरतमुनिः–**

भरतमुनिः रीतिं प्रवृत्तिसंज्ञया अवर्णयत्। तन्मतेन पृथिव्यां नानादेशवेशभाषाचारवार्ताः ख्यापयतीति प्रवृत्तिः। प्रवृत्तिभेदान् वर्णयता तेनोक्तम्–

**''चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोगतः।**
**आवन्ती दाक्षिणात्या च पाञ्चाली चौड्रमागधी॥''[6]**

**भामहः–**

भामहेन स्वसमये प्रचलितस्य रीतसिद्धान्तस्य नामोल्लेखं विनैव सङ्केतः कृतः।

**दण्डी–**

दण्डी रीतिसिद्धान्तस्य व्यवस्थितरुपेण आदिप्रतिपादकाचार्यः। वामनात्प्राक् सैव रीतेः वैज्ञानिकं विश्लेषणं मार्गनाम्ना कृतवान्। यथा काव्यादर्शे–

**''अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्।**
**तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ॥**
**श्लेषः प्रसादः समता माधुर्यं सुकुमारता।**
**अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः॥**
**इति विदर्भमार्गस्य प्राणा दशगुणाः स्मृताः।**
**एषां विपर्ययः प्रायो लक्ष्यते गौडवर्त्मनि॥**
**इति मार्गद्वयं भिन्नं तत्स्वरुपनिरुपणात्।**
**तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकविस्थिताः॥''[7]**

**वामनः–**

एषैवाचार्यः रीतिं काव्यात्मपदे प्रतिष्ठापितवान्। अनेन रीतिसिद्धान्तः विस्तृतरुपेण वर्णितः। एष रीतेः साङ्गोपाङ्गं वर्णनं कृतवान्।

**आनन्दवर्धनाचार्यः-**

वामनपरवर्तिभिः आचार्यैः रीतीनामङ्गत्वेनैव वर्णनं कृतम्। ध्वन्यालोककारेणाचार्यानन्दवर्धनेन रीति संघटनानाम्ना वर्णिता। तन्मतेन संघटना त्रिधा- (क) समासरहिता (ख) मध्यमसमासयुक्ता (ग) दीर्घसमासयुक्ता चेति। यथा-

**''असमासा समासेन मध्यमेन च भूषिता।**
**तथा दीर्घसमासेति त्रिधा संघटनोदिता॥''**[8]

**राजशेखरः-**

आचार्य राजशेखरेण त्वित्थमत्र निर्दिष्टम्-''तत्र देशविन्यासक्रमः प्रवृत्तिः, विलासविन्यासक्रमो वृत्तिः, वचनविन्यासक्रमो रीतिः।''

**भोजदेवः-**

भोजदेवेन तु सरस्वतीकण्ठाभरणे रीतीनां साहित्यमार्गेण अर्थात् रचनायाः क्रमेण च सम्बन्धः प्रदर्शितः। रीति शब्दो हि रीङ्धातुना निष्पन्नः, यदर्थञ्च चलनं निर्माणं वा। तथा चोक्तम्-''रीङ्गतावितिधातोः सा व्युत्पत्त्या रीतिरुच्यते।'' तेनैव वृत्तेसम्बन्धः विकास-विक्षेप-सङ्कोच-विस्तारमनोदशाभिः रीतीनां सम्बन्धो बाह्यवर्णविन्यासैरधिको वर्तते इति प्रदर्शितः।

**कुन्तकः-**

अनेनाचार्येण रीतिसिद्धान्तः मार्गसंज्ञया वर्णितः। तेन रीतीनां प्रदेशाश्रितं वर्ग विभाजनं कृतम्। कविस्वभावस्यापि प्राधान्यं स्वीकृतमनेनाचार्येण। यथा-

**''संप्रति तत्र ये मार्गाः कविप्रस्थान हेतवः।**
**सुकुमारो विचित्रश्च मध्यमोभयात्मकः॥''**[9]

अस्य कवेः मार्गत्रयम्-

(क) सुकुमारमार्गः

(ख) विचित्रमार्गः

(ग) मध्यममार्गः

**मम्मटविश्वनाथादय-**

मम्मटमते वृत्तिः नियतवर्णगतो रसविषयो व्यापारः। परवर्तिभिविश्वनाथादिभिः प्रायेण ध्वन्यालोकमतानुसारमेव रीतेः विवेचनं कृतम्?।

**रीतेः भेदकतत्त्वानि-**

काव्य तत्त्वज्ञानां ग्रन्थानुशीलनेन ज्ञायते यत् तैः रीतेः विभिन्नानि भेदकतत्त्वानि प्रतिपादितानि। समेषामपि काव्यज्ञानां रीतेः प्रतिपादनाधारः भिन्नः। केचन प्रान्ताधारेण अन्ये गुणाधारेण रीतेः प्रतिपादनं कुर्वन्ति।

**तद्यथा-**

1. **देशः**- केषाञ्चन विदुषां मतेन देशः रीतीनां भेदकतत्त्वम्। विदर्भदेशे प्रचलिता रीतिः वैदर्भी कथ्यते, पाञ्चालप्रदेशस्य पाञ्चाली, वंगप्रदेशस्य च गौडी। परन्तु मतमिदं न सर्वसम्मतम्।

2. **गुणः**- दण्डीमतेन गुणः रीतीनां भेदकतत्त्वम् सः गुणान् आश्रित्य एव मार्गद्वयं प्रवर्तितवान्। वामनाचार्योऽपि दण्डीमतमेवानुसरति। तन्मते विशिष्टा पदरचना रीतिः। विशेषो गुणात्मा। गुणभेदात् रीतिभेदान् प्रतिपादयता तेनोक्तम्-''समग्रगुणा वैदर्भी, ओजः कान्तिमती गौडीया, माधुर्यसौकुमार्योत्पन्ना पाञ्चाली।''[10] अनयोः मतेन गुणः रीतेः विभेदकतत्त्वम्।

3. **समासः**-समासाश्रिताः रीतयः। अस्य मतस्य प्रवर्तकः रुद्रटः। आनन्दवर्धनोऽपि अनेन मतेन प्रभावितो प्रतीयते। तेन समासं भेदकतत्त्वरुपेण स्वीकृतम्। तेन समासाश्रिताः त्रयः संघटनाभेदाः प्रतिपादिताः। यथा-

**''असमासा समासेन मध्यमेन च भूषिता।**
**तथा दीर्घसमासेति त्रिधा संघटनोदिता॥''**[11]

अस्मिन् मते समासः रीतीनां भेदकतत्त्वं गुणाश्च आन्तरिक तत्त्वानि सन्ति।

4. **कविस्वभावः**-सर्वेऽपि कवयः स्वस्वभावानुसारमेव काव्यरचनां कुर्वन्ति। अतः कविस्वभाव विभेदकरणेन काव्यमार्गभेदः समीचीनतां प्राप्नोति। कुन्तकः अस्य मतस्य पोषकः। तेन कविस्वभावानुकूलमेव मार्गत्रयम् कल्पितम्- सुकुमारमार्गं, विचित्रमार्गं मध्यममार्गञ्चेति। एवं कुन्तकमतेन मार्गाः कविप्रस्थानहेतवः।

5. **वर्णगुम्फः**-मम्मटमते वर्णगुम्फः रीतेः भेदकतत्त्वम्। रीतिः (वृत्तिः) नियतवर्णगतोव्यापारः। तत्र वर्णगुम्फानुसारमेव रीतिभेदाः निधीर्यन्ते। यद्यपि मम्मटेन रीतिभेदनिर्धारणे समासस्यापि भूमिका स्वीकृता परन्तु प्राधान्यं वर्णगुम्फस्यैव। विश्वनाथोऽपि मम्मटमतमेवानुसरति।

एवम् आचार्यैः स्वस्वमतानुसार रीतेः भेदक तत्त्वानि स्वीकृतानि।

**रीतिलक्षणम्-**

नैकाचार्यैः रीतेः लक्षणानि प्रतिपादितानि। वामनः काव्यालङ्कारसूत्रे रीतिलक्षणं प्रतिपादयन्नाह-''विशिष्टा पदरचना रीतिः'' ''विशेषो गुणात्मा''। वामनमतेन पदरचनायां वैशिष्ट्यमेव रीतिः। रचनायां विशिष्टता च गुणानामवस्थित्या उत्पद्यते। रीतिः गुणानवलम्ब्य तिष्ठति। अतएव रीतिसम्प्रदायः गुणसम्प्रदायोप्युच्यते।

सरस्वतीकण्ठाभरणे रीतिलक्षणं निरुपयन्नाह भोजराजः-

**वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः।**
**रीङ्गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते॥**[12]

साहित्यदर्पणकारस्य रीतिलक्षणं सुप्रसिद्धम्। रीतिस्वरुपं निरुपयता तेनाह-

**पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत्।**
**उपकर्त्री रसादीनाम्-------------------॥**[13]

यथा विभिन्नैः अवयवैः शरीरसंरचना भवति तथैव पदसङ्घटनया काव्यरचना जायते। इयं रुचिरा पदसंरचनैव रीतिः।

**रीतिभेदाः-**

काव्यादर्शकारेण दण्डिना रीतेः एवं विभागः कृतः-

**श्लेषः प्रसादः समता माधुर्यं सुकुमारता।**
**अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः॥**

**इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः।**
**एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि॥**[14]

आचार्यवामनेन रीतेरेवं भेदः कृतः-

सा त्रेधा वैदर्भी गौडीया पाञ्चाली चेति। समग्रगुणा वैदर्भी। ओजः कान्तिमती गौडीया। माधुर्यसौकुमार्योपपन्ना पाञ्चाली।

कविराजविश्वनाथः रीतिरेवं विभैजे-

**-----------सा पुनः स्याच्चतुर्विधा।**
**वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा॥**[15]

वैदर्भीरीतेः लक्षणम्-

**माधुर्यव्यञ्जकैर्वर्णैः रचना ललितात्मिका।**
**अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते॥**[16]

उदाहरणम्-

**लताकुञ्जं गुञ्जन् मदवदलिपुञ्जं चपलयन्।**
**समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्॥**
**मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्।**
**रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि॥**[17]

गौडी लक्षणम्-

**ओजः प्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः।**
**समास बहुला गौडी----------------------॥**[18]

उदाहरणम्-

**चञ्चद्भुज भ्रमित चण्डगदाभिघात-**
**सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।**
**स्त्यानावनद्धघनशोणित शोणपाणि-**
**रुत्तंसयिष्यति कचांस्तव देवि! भीमः॥**[19]

पाञ्चाली लक्षणम्-

**----------------------वर्णैः शेषैः पुनर्द्वयोः।**
**समस्तपञ्चषपदो बन्धः पाञ्चालिका मता॥**[20]

उदाहरणम्-

**मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।**
**मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥**[21]

लाटी लक्षणम्-

लाटी तु रीतिवैदर्भीपाञ्चाल्योरन्तरे स्थिता।[22]

उदाहरणम्-

**अयमुदयति मुद्राभञ्जनः पादमेनीना-**
**मुदयगिरिवनालीबालमन्दार पुष्पम्?।**
**विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दम्?।**
**कुपितकपिकपोलक्रोडताम्रस्तमांसि॥**[23]

**रीतेः काव्यात्मत्वं महत्त्वञ्च-**

रीतिं विना रोचककाव्यनिर्माणमसम्भवमेवेति रीतिवादीनां मतम्। केवलशब्दज्ञानमात्रेण इतिवृत्तनिबन्धनेन, रसभावसमावेशेन छन्दोऽलङ्कारनैपुण्येन वा काव्यं चारुतां नाप्नोति। काव्ये चमत्कारं रम्यतां लालित्यञ्चासादयितुं रीतिरनिवार्या। तदभावे कवितावनिता लावण्यं विहाय मलिनायते। सर्वेषु तत्त्वेषु सत्स्वपि यावन्न रीतिर्विराजते तावन्न खलु कविताकामिनि शोभते। अत एवाह नीलकण्ठदीक्षितः-

**सत्यर्थे सत्सु शब्देषु सति चाक्षरऽम्बरे।**
**शोभते यं विना नोक्तिः स पन्था इति धुष्यते॥**

वामनस्य मतेन तु रीतिरेव काव्यस्यात्मा। परवर्तिभिः आचार्यैः रीतेः काव्यात्मत्वं न स्वीकृतम्। तथापि रीतिसिद्धान्तस्य महत्त्वं स्वीकृतमेव। वामनो रीतिसिद्धान्तं गुणानामाधारेण स्थापितवान्। गुणाः रस धर्माः। ते काव्ये सन्तं रसं नियतरुपेण उपकुर्वन्ति। गुणाभावे न काव्यस्य काव्यत्वम्। वामनो रसस्य कान्तिनामके अर्थगुणे समावेशं कृतवान्। दीप्तिरसत्वं कान्ति लक्षणम्। अतस्तस्य मतानुसारं रीतिः काव्यस्य आत्मतत्त्वमेवासीत्।

**सन्दर्भसूची:**


1. अलंकारसूत्रम्- 1/2/6
2. अलंकारसूत्रम्- 1/2/7
3. अलंकारसूत्रम्- 1/2/8
4. अलंकारसूत्रम्- 1/3/1-1/3/2
5. भामहविवरणम्- गुणालङ्कार भेद सन्दर्भे
6. नाशा- 14/36
7. काव्यादर्शः- 1/40-43
8. ध्वन्यालोकः- तृ. उधोत श्लोक-5
9. व.जी.- 2/24
10. का. सूत्राणि- 1/2/11-13
11. ध्व. लोकः- 3/5
12. सरस्वतीकण्ठाभरणम्?- 2/27
13. सा. द.- 9/1
14. काव्यादर्शः- 1/41-42
15. सा. द.- 9/1
16. सा. द.- 9/2
17. सा. द.- 8/3 कारिकायाः उदाहरणम्?
18. सा. द.- 9/3
19. वेणीसंहारम्-1/21
20. सा. द.- 9/4
21. सा. द.- 9/4 कारिकायाः उदाहरणम्?
22. सा. द. - 9/5
23. सा. द.- 9/5 कारिकायाः उदाहरणम्?


*सहायक प्राध्यापक, साहित्य*
*क. मि. संस्कृत महावि., दीप*

ISSN 2348-7828

# मूल्याङ्कने मापने च प्रश्ननानाम् उपादेयता

कृष्णानन्द दन्नाना

**सारांशः-**

शिक्षाप्रणाल्यां मूल्याङ्कनस्य स्थानं महत्वपूर्णं वर्तते। मूल्याङ्कनं विना छात्राणां विकासः मार्गदर्शनं च नैव भवितुमर्हति। अतः आधुनिककाले मूल्याङ्कने बहूनि परिवर्तनानि दृश्यन्ते।तत्र शिक्षामनोविज्ञानस्य महत्वपूर्णं योगदानम् अस्ति। मूल्याङ्कने मापनं साधनं भवति।मापनाय उत्तमपरीक्षणं साधनं भवति तथा च उत्तमपरीक्षणाय विभिन्नप्रकारानां प्रश्नानां ज्ञानं तेषां नियोजनमपेक्षते एवं विभिन्नप्रकारान् प्रश्नान् उपयुज्य उत्तमपरीक्षणस्य निर्माणं भवति तेन क्रमशः मापनं मूल्यांकनञ्च उत्तमं भवति।अतःउत्तमपरीक्षणाय मूल्यांकनाय च प्रश्नप्रकाराणां ज्ञानं, निर्माणं, नियोजनं च अत्यन्तमावश्यकं भवति।अस्मिन् लेखे क्रमशःएते विषयाः प्रस्तूयन्यते। मूल्याङ्कनस्य अर्थः, मूल्याङ्कनस्य परिभाषाः मूल्याङ्कनस्यवैशिष्ट्यम्, मूल्यङ्कनस्योद्देश्यानि, मापनस्य अर्थः, मापनस्य परिभाषाः, मापनस्य कार्याणि, परीक्षणनिर्माणम्, प्रश्नानां प्रकाराः, निबन्धात्मकप्रश्नाः, निबन्धात्मकपरिक्षायाः गुणाः, निबन्धात्मकपरिक्षायाः दोषाः, निबन्धात्मकपरीक्षायाः दोषान् दरीकर्तुमुपायाः, वस्तुनिष्ठप्रश्नाः, वस्तुनिष्ठपरिक्षायाः गुणाः, वस्तुनिष्ठपरिक्षायाः दोषाः, वस्तुनिष्ठप्रश्नानां प्रकाराः इति।

**कूटशब्दाः**-मूल्यांकनम्, मापनम् ,प्रश्नप्रकाराः ।

**मूल्याङ्कनस्य अर्थः-**

मूल्याङ्कनं हि सततप्रचाल्यमाना विसृता प्रक्रिया। एतसस्यां कस्यचिन् वस्तुनः उपयोगितायाः विषये निर्णयो निर्धार्यते। मूल्यस्य अङ्कनंम् एव मूल्याङ्कनं भवति। मूल्याङ्कने वस्तुनः उपयोगित्वम् अनुपयोगित्वं वा परीक्ष्यते।

**मूल्याङ्कनस्य परिभाषाः-**

मूल्याङ्कनस्य विकासः शिक्षायां नूतनस्य दृष्टिकोणस्य परिणामो वर्तते। तदनुसारं शिक्षायाः केन्द्रं विद्यार्थी भवति। छात्राणां विकासाय मार्गदर्शनाय च मूल्याङ्कनस्य स्थानं महत्वपूर्णं भवति। मूल्याङ्कनस्य सम्प्रत्ययः एताभिः परिभाषाभिः सुस्पष्टं भवितुमर्हति।

**कोठारीकमीशन-**

मूल्याङ्कनं सततप्रचाल्यमाना प्रक्रिया। मूल्याङ्कनं शिक्षाप्रणाल्याः एकम् अभिन्नम् अङ्गं भवति।उभयोर्मध्ये घनिष्ठः सम्बन्धः वर्तते।

**रेमर्सगेजयोः महोदययोर्मतानुसारम् -**

जनस्य समाजस्य च एताभ्यां दृष्टिकोणाभ्यां किं समीचीनं वाञ्छनायञ्च वर्तते इत्येतस्यनिर्धारणं भवति मूल्याङ्कनस्योद्देश्यम् इति।

**वेस्लेमहोदयमतानुसारम्-**

मूल्याङ्कनं हि छात्रस्य व्यवहारे परिवर्तनेन सम्बन्धितानां तथ्यानामेकत्रीकरणस्य, तेषां विवेचनस्य च पद्धतिरस्ति इति।

स्पष्टमेतद्वर्तते यत् शिक्षया बालकानां व्यवहारे समाजदृष्ट्या च वाञ्छनीयनि उत्तमानि च परिवर्तनानि कियज्जातानीति इति मूल्याङ्कनस्य कार्यम् अनेन शिक्षाया उद्देश्यानां सिद्धौ बलं लभ्यते। मूल्याङ्कनं हि कस्यचिद् गुणस्य वैशिष्ट्यस्य वा मात्रात्मकस्य वर्णनस्या गुणवत्तायाः (Quality) निर्धारणं वर्तते। वस्तुनि जनोपलब्धानां गुणानां सन्तोषप्रदत्वं वाञ्छनीयत्वं वा कियद्वर्तते इति मूल्याङ्कनमेव निर्धारयति।

**मूल्याङ्कनस्यवैशिष्ट्यम्-**

मूल्याङ्कनस्य विश्लेषणेन एतस्य वैशिष्ट्यं प्रकटितं भवति। एतद् वैशिष्ट्यं अत्र प्रस्तुयते यत्-

1. मूल्याङ्कनमुद्देश्यकेन्द्रितं भवति।
2.मूल्याङ्कनस्य प्रक्रिया सततं प्रचलति।
3.मूल्यङ्कने व्यापकता भवति।
4. मूल्यङ्कनं विश्लेषाणात्मकं संश्लेषात्मकञ्च भवति।

**मूल्यङ्कनस्योद्देश्यानि -**

मूल्याङ्कनस्य प्रक्रिया सोद्देश्या भवति। एतस्य प्रमुखान्युद्देश्यानि निम्नलिखितानि सन्ति।

1. शिक्षणोद्देश्यस्य प्रदर्शनम्।
2. शिक्षणप्रक्रियायां प्रभावोत्पादनम्।
3. शिक्षणप्रक्रियायाः परीक्षणम्।
4. छात्राणां वर्गीकरणम्।
5. मानदणडानां स्छुद्यदह्य निर्धारणम् चेति।

**मापनस्य अर्थः-**

मापनं हि मूल्यङ्कनस्याङ्गभूतं भवति। मूल्याङ्कनस्य प्रक्रियायां मापनेन एव परिणामानां वाञ्छनीयतायाः (Desirability), निर्णयः क्रियते। मापनं साधनं भवति मूल्यांकनाय।मापनेन मात्रात्मकसंकलनं लभ्यते तथा च संकलितस्य विवेचनं,विश्लेषणं च मूल्यांकनेन क्रियते।

**मापनस्य परिभाषाः-**

**काम्पबेल महोदयः-**

नियमानुसारेण वस्तूनां घटनानां च मात्रात्मकरूपेण व्याख्यानं मापनम्।

**रास महोदयः-**

मापनम् एका परिमाणीकरणप्रक्रिया भवति।

**हैल्मसटेडर महोदयः-**

मापनम् एका तादृशी प्रक्रिया येन कस्यचित् व्यक्तेः वस्तुनश्च निहितानां विशेषणानां अङ्कनं करोति।

**मापनस्य कार्याणि**–

**वर्गीकरणम्**–मापनेनैव छात्राणां वर्गीकरणम् भवितुमर्हति।

**पूर्वकथनम्** –मापनाधारेण छात्राणां भविष्यस्थितिं वक्तुं शक्नुमः।

**तुलनाकरणम्**–मापनेनैव तुलनात्मकाध्ययनं कर्तुं शक्नुमः।

**परामर्शदानं निर्देशनञ्च**–मापनाधारेण छात्राणां कृते परामर्शदानं निर्देशनञ्च दातुं शक्नुमः।

**अन्वेषणाय उपकरणरूपेण**–शोधक्षेत्रे मापनम् अन्वेषणाय उपकरणरूपेण उपकुरुते।

परिभाषाभिः स्पष्टं यत् मापनं नाम किमिति। मापनस्याङ्गभूतं भवति परिक्षणम्। मापनप्रक्रियायाः मुख्यं साधनं भवति परिक्षणम्। परिक्षणस्य निर्माणे प्रश्नानां भूमिका महत्वपूर्णं स्थानं भवति। अतः उत्तमपरीक्षणनिर्माणय प्रश्नानां विषये ज्ञानं,संकलनं च अपेक्षते।

**परीक्षणनिर्माणम् (Test Candtructions)**

परीक्षायाः कृते परीक्षणस्य प्रश्नपत्रस्य वा निर्माणं क्रियते । परीक्षणनिर्माणेन सहैव उत्तरपत्रं निर्मितं भवति।

**प्रश्नानां प्रकाराः**–

**प्रश्नानां प्रकारद्वयं मुख्यरूपेण**–

**1. निबन्धात्मकप्रश्नाः 2. वस्तुनिष्ठप्रश्नाः**

**निबन्धात्मकप्रश्नाः**–न केवलंभारते अपि तु विभिन्नेषु राष्ट्रेषु निबन्धात्मक परिक्षायाः बाहुल्यं प्रभुत्वं चासीद्यत्। भारतेतु अधुनापि निबन्धात्मक परीक्षायाः प्रचलनमस्ति। किन्तु प्रगतिशीलेषु राष्ट्रेषु एतादृशीपरीक्षणां महत्वं नास्ति। एतादृशीषु परीक्षासु पाठ्यक्रमस्य विशिष्ठस्य अङ्गस्य प्रश्नाः दीयते। छात्राः स्वसामर्थ्यानुरूपं स्वातन्त्रेण स्वैच्छयानुरूपं उत्तराणि लिखन्ति।

**निबन्धात्मकपरिक्षायाः गुणाः**–सामाजिकविज्ञानशिक्षणे भाषाशिक्षणे च निबन्धात्मकपरिक्षायाः महत्वमधिकं भवति।

निबन्धात्मकपरिक्षायाः अधोलिखिताः गुणाः सन्ति ।

1. छात्राणां भावावबोधकक्षमतायाः ज्ञानं भवति ।

2. छात्राणां भाषाशैल्याः लेखन–कलायाश्च ज्ञानं भवति।

3. निबन्धात्मकपरीक्षा छात्रेभ्यः पर्याप्त रूपेण स्वातन्त्रतां ददाति।

4. परीक्षायाः प्रश्नपत्रं सरलतयानिर्मितं भवति।

5. छात्राः सरलतया प्रश्नमअधिगच्छन्ति।

6. निर्माणं समय ङ्कधनस्य च दृष्ट्या सरलं भवति।

7. समूह–परीक्षणस्य दृष्ट्या निबन्धात्मक–परीक्षणां संचालनं सरलं भवति।

8. छात्राणां रचनात्मकचिन्तनस्य प्रोत्साहनं भवति।

9. छात्राः सरलतया लिखितुं सन्नद्धाः भवन्ति।

**निबन्धात्मकपरीक्षायाः दोषाः**–

1. निबन्धात्मकपरिक्षायाः विश्वसनीयता न भवति।

2. मूल्याङ्कने वैधतायाः अभावः भवति।

3. प्रश्नानां निर्माणं पाठ्यक्रमस्य विशिष्टस्याङ्गस्यैव भवति तेन समग्रपाठ्यक्रमस्य ज्ञानस्याध्ययनस्यावबोधनस्य च मूल्यङ्कनं न भवति।

4. समुचित उत्तराभावेऽपि छात्रः यत्किमपि लिखति तेन मूल्याङ्कनं सफलं न भवति।

5. मूल्याङ्कने परीक्षानिरिक्षकस्य प्रभावःअधिकः भवति तेन वस्तुनिष्ठता न भवति।

**निबन्धात्मकपरीक्षायाः दोषान् दरीकर्तुमुपायाः**–

1. प्रश्नानां निर्माणम् अतीवावधानतया भवेत् प्रश्नानां निर्माणं समुचितरीत्या भवेत। येन छात्राः उत्तराणि लिखितुं वञ्चिता न स्युः।

2. प्रश्नानां वितरणं समग्रपाठ्यक्रमानुरूपेण स्यात्।

3. प्रश्नपत्रनिर्माता परीक्षकश्च एकस्यैव स्यात्।

4. मूल्याङ्कनकार्यम् अत्यधिकपरिश्रमेण भवेदिति।

5. मूल्याङ्कनस्य एकमेव परिमाणं भवेत्।

**2. वस्तुनिष्ठप्रश्नाः**–वस्तुनिष्ठपरीक्षणे उत्तरप्रदाने स्वतन्त्रता न भवति। छात्राः यदेच्छन्ति तदा उत्तरं दातुं समर्थाः न भवन्ति। प्रत्येकं प्रश्नः उत्तरस्य दृष्ट्या विशिष्टः भवति। छात्रेभ्यः अपेक्ष्यन्ते यत् ते तादृशमेव उत्तरं लिखन्तु इति। अपरा विशेषता भवतव यत् इमानि परीक्षणानि संक्षिप्तरूपेण ज्ञानात्मकरूपेण उत्तराणि दातुं कथयन्ति।

**वस्तुनिष्ठपरीक्षणस्य गुणाः**

1. वस्तुनिष्ठपरीक्षणं समग्रे पाठ्यक्रमे प्रसारितं भवति।

2. मूल्याङ्कने अध्यापकः वञ्चना कर्तुं न प्रभवति।

3. उत्तरस्य लेखनं अतीव सरलं भवति।

4. मूल्याङ्कनं अतीव सरलं विश्वसनीयञ्च भवति।

5. पक्षपातरहितं मूल्यांकनं संभवति।

6. वस्तुनिष्ठपरीक्षणस्य माध्यमेन छात्राणां अवधानस्य, ज्ञानस्य तर्कशक्त्या निर्णयश्क्त्या च ज्ञानं भवति।

7. भाषाया अधिकं महत्वं नास्ति।

8. अधिक लेखनस्यापि आवश्यकता न भवति। यतेहि लेखनं संक्षिप्तेषु शब्देषु वर्णेषु न भवति।

**वस्तुनिष्ठपरीक्षणस्य दोषाः**

1. प्रश्नपत्रस्य निर्माणे समयाप्ययः

2. अस्मिन् अशुद्ध उत्तराणां माद्यमेनापि सफलतायाः संभावना भवति।

3. भाषायाः अभिव्यक्ते च महत्वं नास्ति।

4. अनुकरणस्य प्रवृत्तिर्भवति।

**वस्तुनिष्ठप्रश्नानां प्रकाराः**

**1. मेलकाः प्रश्नाः**–

यदा वयं कस्याचित् विशिष्ट सूचनायाः परीक्षायां आवश्यकतां अनुभवामः। यत्र च पुनःस्मरणस्य आवश्यकता न भवति। यस्य माध्यमेन तथ्यद्वयेषु सम्बन्धस्य योग्यता समुचितरीत्या भवेत्।

तत्र मेलकाः प्रश्नाः पृच्छन्ते।-------------------

**उदाहरणम्-**

| वर्ग क | वर्ग ख |
|---|---|
| कोलंबो | इग्लैन्ड |
| नव दिल्ली | श्रीलंका |
| पजिंगा | भारतम् |
| लन्दन | अमेरिका |
| टोक्यो | चीन |

**( 2 ) रिक्तस्थानपूर्तिः प्रश्नाः-**

एतादृशेषु प्रश्नेषु विशिष्ट सूचनायाः परीक्षणं भवति। प्रमुखतया नाम-दिनाङ्कः-संख्या-स्थानादीनां विषये प्रश्नाः भवन्ति।

1. जार्ज वाशिंगटन............................... देशस्य राष्टपतिः आसीत्।

2. गणतन्त्रदिवसः..........................दिनाङ्के आयोजितः भवति।

3. जवहरलालनेहुरू महाभागस्य ....................रचना अस्ति।

**( 3 ) सत्यासत्य प्रश्नाः-**

मूल्याङ्कने एतादृशाः प्रश्नाः प्रयुज्यन्ते। प्रविधिशास्त्रस्य दृष्ट्या मूल्याङ्कने एतादृशाः प्रश्नाः श्रैष्ठाः भवन्ति किन्तु अध्ययने न उदाहरण रूपेण

1. अस्माकं वर्तमान प्रधानमन्त्री अटलबीहार वाजपयी अस्ति सत्य/असत्य

2. पथ्वी सूर्यस्य परिक्रमणं करोति सत्य/असत्य

3. अक्बरः महान् साम्राट् आसीत् सत्य/असत्य

**( 4 ) बहुविकल्पात्मक प्रश्नाः-**

एतादृशेषु प्रश्नेषु प्रश्नानां सम्मुखे अपेक्षितानि उत्तराणि दीयन्ते। तेषु एकमेव उत्तरं सत्यं वास्तविकं च भवति। छात्रश्च शुद्ध उत्तरस्य चयनं कृत्वा क्रमाक्षरं लिखति। चिह्नाङ्कितं वा करोति। उदाहरणम्-

1. जार्जवाषिंगटन् राष्टपतिरासीत्। ( )

क. अमरिक देशस्य ख ब्रिटन् देशस्य ग प्रान्स्देशस्य घ जर्मनी देशस्य

**( 5 ) सर्वोत्तम चयन प्रश्नाः -**

एतादृशाः प्रश्नाः अपि बहुविकल्पात्मकाः भवन्ति। किन्तु प्रायः सर्वाण्युत्तराणि समीचीनानि भवन्ति। तेषु एकमेव उत्तरं सर्वोत्तमं भवति। छात्रा अस्यैवउत्तरस्य चयनं करोति। उदा- 1.साम्राट् अशोकः बौद्धः-धर्मं स्वीकृतवान्। यतोहि

1. बुद्धः तं प्रभावितवान्

2. कलिंगयुद्धं तं प्रभावितमकरोत्।

3. जनाः अशोकं बाध्यमकुर्वन्।

**( 6 ) सरला - स्मरण प्रश्नाः -**

अस्यां परीक्षायां तादृशाः प्रश्नाः भवन्ति। येषां उत्तराणि अतीवसीमितेषु शब्देषु भवन्ति। अतीवलघूत्तरीयाः प्रश्नाः भवन्ति। एक द्वि त्रयेषु वा शब्देषु प्रश्नस्य उत्तरं दीयते।

1. पृथिव्याः उपग्रहस्य किं नाम अस्ति।

2. अस्माकं प्रथम प्रथानमन्त्री कः आसीत्।

**( 7 ) वर्गीकरण प्रश्नाः-**

एतादृशेषु प्रश्नेषु केचन शब्दाः विभिन्न समूहेषु संयोजिताः भवन्ति। प्रत्येकस्मिन् समूहे समान वस्तु-व्यक्ति-स्थान-घटन-तथ्यानां वा नामानि भवन्ति। समूहे एकः शब्दः पृथक् भवति। छात्राः तस्य पृथक् शब्दस्य चयनं कुर्वन्ति।

1. पृथिवी, सूर्य, चन्द्र, शनि, मंगल, वायु

2. सूर, तुलसि, बिहारी, मीरा, कबीर, इन्दिरा गान्धी।

एवं प्रकारेण विभिन्नप्रकारान् प्रश्नान् उपयुज्य उत्तमपरीक्षणस्य निर्माणं भवति तेन क्रमशः मापनं मूल्यांकनञ्च उत्तमं भवति।अतःउत्तमपरीक्षणाय मूल्यांकनाय च प्रश्नप्रकाराणां ज्ञानं तथा च निर्माणमत्यन्तमावष्यकं इति ज्ञायते।

सन्दर्भग्रन्थ


1. सौरभ अग्रवाल,शिक्षा में मापन एवं मूल्यांकन
2. एस् .पि.गुप्ता,आधुनिक मापन एवं मूल्यांकन
3. डॉ .पार्थसारथी पाण्डेय, शिक्षा में मापन एवं मूल्यांकन



*सहायकाचार्य*
*शिक्षाशास्त्रविभाग*
*के. सं. वि वेदव्यास परिसर*

ISSN 2348-7828

# पण्डितदुर्गादत्तशास्त्रिणः कृतयः

अरूणदीप

पण्डितदुर्गादत्तशास्त्रिणा संस्कृतकाव्य–कथा–नाटक–उपन्यास–अनुवाद–व्याकरणादि–विविधसंस्कृतसाहित्यिकविधासु हिन्दीभाषानुवादयुक्ताः विहिताः। गद्यपद्ये उभेऽपि लेखनीविषयीकृते कविना। अधिकांशतः कविकृतयश्च साहित्यपुरस्कारेणापि पुरस्कृताः। कविः स्वरचननासु सांस्कृतिक–पारम्परिक–धार्मिक–संस्काराणां कृते जनसमूहं प्रेरयति। कविना छन्दसां प्रयोगे वरीयता प्राप्ता। छन्दःशास्त्रे वर्णितानि संस्कृत–हिन्दी–छन्दांसि अतिरिच्य लोकगायकैः गीयमानानां लोकरागाणामपि छटा शास्त्रिवर्यस्य रचनासु सर्वत्र लभ्यते।

सम्पूर्णं मधुवर्षणं काव्यं तु गेयश्रुतिसौम्यच्छन्दोभिः प्रणीतम्। कविना स्वकृतिषु वैदर्भीरीत्या उत्प्रेक्षाद्यलङ्काराणां कृते अद्यतनीयोपमोत्प्रेक्षाणां प्रयोगः विहितः। सामाजिकजीवनस्य न किमपि एतादृशम् अङ्गमस्ति यत् कविना स्वलेखन्या वर्जितम्। कविना स्वशक्तलेखन्या रोगस्य निदानमपि न कृतम् अपितु तं वारणाय उपाया अपि प्रदत्ताः। भवद्भिः स्वीयतीक्ष्णदृष्ट्या सूक्ष्मातिसूक्ष्मसमस्या अधिकृत्य तासामुन्मूलनाय स्वच्छन्दहस्तेन उन्मुक्तमानसा लेखनी चालिता। कविना स्वमौलिकसाहित्यसंस्कृतभाषायां निबद्धम्। भाषा न सरला सरसा मधुरा। श्लेष–यमकानुप्रासाद्यलङ्काराणां द्युतिः सर्वत्र व्याप्ता। जनसाधारणे प्रयुज्यमानानां स्टेशन–एक्सप्रेस–प्लेटफार्म–स्कूटर–चिलमादिविदेशीयशब्दानां प्रयोगोपि भवद्भिः उन्मुक्तत्वेन क्रियते किन्तु व्याकरणनियममनुसृत्येव, येन ते शब्दाः खट्खटायन्ते न अपितु तैः पाठकस्य रुचिं वर्धयति।

तस्मिन् काले संस्कृतभाषा अल्पगम्या प्रतीयते स्म अतः पाठकानां सौविध्याय भवद्भिः सकलकृतिनां हिन्दीरुपान्तरमपि दत्तम्, यत् अनुवादवत् न प्रतीयते अपितु मौलिकवदेव अनुभूयते। पण्डितदुर्गादत्तशास्त्री संस्कृतसाहित्यस्य विविधविधामनुसृत्येव महत्वपूर्णं साहित्यं रराच। एतेषां कृतयः अधस्तात् प्रस्तुयन्ते यथा–

**1 राष्ट्रपथप्रदर्शनम्, 2 तर्जनी, 3. मधुवर्षणम्, 4. वत्सला, 5.वियोगवल्लरी, 6 बृहत्सप्तपदी, 7. तृणजातकम्, 8.संस्कृतकाव्यकुञ्जम्।**

**लघुकृतयः– 1 छायाविलासः, 2 अनारकली, 3. रेलमन्त्री।**

पण्डितदुर्गादत्तशास्त्रिणा 1937 वर्षे गुलेरराज्यस्य तत्कालीनराजानम् आद्यत्वेन संस्कृतकविता उपहारस्वरूपेण प्रस्तुता। राज्ञा एकविंश रूप्यकाणि प्राप्य राङ्कववस्त्रेण यथाविधिं सम्मानमर्जयत्। इतः एव कविवर्यस्य कवितायाः सूत्रपातमजायत्। कवितायाः श्लोकाः निम्नलिखिताः सन्ति–

**राजधानी गुलेराख्या सर्वसम्पत्समन्विता।**
**दीनहीनजनैर्हीना काङ्गडाप्रान्तमध्यगा॥**
**उद्यमार्थो गुरीधातुर ईरश्च प्रेरणार्थकः।**
**अभेदाद्रलयोः प्राह सिद्धां सञ्ज्ञां मनीषिणः॥**
**उद्यमिनो जनास्सर्वे स्वस्वकार्यपरायणाः।**
**विरोधं नैव जानन्ति सहानुभूतिशालिनः॥**
**चौरः कश्चिन्न तत्रास्ति न चास्ति परनिन्दकः।**
**यत्र भूपाः प्रियन्यायास्तत्रेदं दुर्लभं सदा॥**[1]

**राष्ट्रपथप्रदर्शनम्–**

अष्टादशसर्गेषु विभक्तमिदं काव्यमस्ति। अत्र 958 श्लोकास्सन्ति। 248 पृष्ठात्मकमिदं काव्यं 1967 वर्षे प्रकाशितम्। स्वतन्त्रताप्राप्तेः पूर्वं या राष्ट्रभक्तिः जनमानसे आसीत् सा अष्टौ–दशवर्षाण्यतीत्य स्वल्पतां प्राप्ता तस्याः स्थाने स्वार्थोच्छृङ्खलता आगता। राजनेतारः छात्रवर्गमाध्यमेन क्षेत्रवाद–भाषावाद–जातिवादादिराष्ट्रविरोधिकुत्सितभावान् अवर्धयन्। फलतः किशोरावस्थायां छात्रवर्गः अमर्यादितोत्छृंखलो भूत्वा अग्निदाहादिराष्ट्रविरोधिगतिविधिषु निमग्नः जातः। सकलवृतान्तं वीक्ष्य आहतमनसा कवेः लेखनी गतिशीला जाता तया प्रसूतः अष्टादशसर्गात्मिकमिदं राष्ट्रपथप्रदर्शनं काव्यम्।

एतस्य काव्यस्य शोभनः छात्रः, धिगेनं धूम्रपायिनं, पुत्री नादेशपालिनी, पुण्यं हलप्रवहणमादिभिः अध्यायैः कविना पथभ्रष्टच्छात्रवर्गाय सन्मार्गः प्रदर्शितः। अत्र रचनायां गीतायाः प्रतिच्छाया यत्र तत्र दृश्यते यथा–

**देवार्चने करौ व्यस्तौ मनस्तु गृहकर्मणि।**
**चञ्चलं हि मनो लोकैर्गृहीतुं नैव पार्यते॥**[2]
**मनो यदि वशे जातं जिता सर्वा वसुन्धरा।**
**मनो यदि वशे नास्ति निष्फलाः सकलाः क्रियाः॥**[3]

कवि सुसंस्कृतव्यक्तित्वाय बालकान् प्रेरयति यथा–

**प्रलायन्तु भो बालाः संस्कृतिं वः पुरातनीम्।**
**सम्पदं पैतृकीं त्यक्त्वा को भवति महाजनः।।**[4]

पाश्चात्यप्रभावेन दुर्विदग्धमानसाम् आधुनिकतामनुसरन्तीं पुत्रीं वीक्ष्य माता निगदति–

**हा हा पुत्रि! महानेष कृतोऽनर्थस्त्वया।**
**पूतता पाकशालायाः क्षणेनैव विनाशिता॥**[5]

**तर्जनी–**

एकादशसर्गात्मकमिदं काव्यं 1111 श्लोकेषु विभक्तमस्ति। रचनेयं कवेः हृदि चीनपाकिस्तानराष्ट्राभ्यामारोपितस्य युद्धस्य प्रभावः प्रदर्शयति। कृषकसमाजयोः नैतिकसहयोगः रणक्षेत्रे कार्यरतं वीरसैनिकं प्रोत्साहयति युद्धसमये सैनिकः समाजात् किम् अपेक्षते ? समाजस्य

सैनिकं प्रति कानि कानि कर्त्तव्यानि ? एतेषामेव तथ्यानां दिग्दर्शनम् उक्तरचनायां कविना प्रदर्शितम् । एतदतिरिच्य देशस्य आन्तरिकसम्बन्धाः राष्ट्रद्रोहस्य घटनाश्च काव्यकारस्य हृदयं व्यदारयत् । अतः प्रासङ्गिकतामाधारीकृत्य ''तर्जनी'' काव्यमाध्यमेन कविः राष्ट्रं तर्जयन् सैनिकसन्नद्धतायै अवदत् । प्रथमसर्गे भार्या रणक्षेत्रे युद्धरतं स्वपतिं रक्तेन लिखित्वा सम्बोधयति–

**स्प्रष्टुं नार्हसि मां कान्त! यदि शत्रुं जेष्यसि।**
**हत्वा शत्रून गृहमधिगतं त्वामहं सत्करिष्ये ।।**[6]

सर्गमिदमागामिनी रचना ''मधुवर्षणम्'' इत्यस्य भूमिकामात्रेण तिष्ठति यौतुकेप्सिन्योः शेवश्रोः दुर्गतिः, लालबहादुरशास्त्रिणः त्यागः, मद्यपपतेः दुर्दशा, पारावारिककलहः सन्तानाधिक्यम् उत्कोचग्रहणस्य परिणामः, निवारणादि–विषयानाधारीकृत्य प्रत्येकं सर्गस्य रचना विहिता।

**मधुवर्षणम्–**

अस्मिन् काव्ये सप्तसर्गेषु प्रवाहरूपेण एकस्याः एव कथायाः क्रमशः विकासोऽभवत् । अस्या कथाया कथानकं रणभूमौ प्रयत्नपरसैनिकस्य देशभक्तपत्न्या इतस्ततः एव परिभ्रमति। रचनेयं संगीतदृष्ट्या गेयमन्दाक्रान्ताच्छन्दसि निबद्धा । डॉ. कर्णसिंहेन काव्यकर्तुः श्रीशास्त्रिणः तुलना राष्ट्रकविमैथिलीशरणगुप्तेन सह कृत्वा प्राशंसत् । मधुवर्षणस्य रचनाकालेऽपि कवेः हृदयं चीनारोपिताक्रमेण व्याप्तमासीत् । तत्कालीनपरिस्थित्यानुरूपं काव्यकर्ता हिमालये युद्धरतं सैनिकं स्वरचनामाध्यमेन प्रोत्साहयति।

जाया युद्धरतं स्वपतिं रक्तलिखितपत्रेण वाचयति– हे नाथ ! गेहस्य चिन्तां वर्जयित्वा शत्रुं जयतामिति। यदि शत्रुं जीत्वा आगमिष्यति चेत् ते स्वागतं भविष्यति नो चेत् स्पर्शमात्रमपि न सहिष्ये। अतः मम वैविध्यपूर्णजीवनं वीक्ष्य शत्रोः पुरतः नतमस्तकं मां भवेति। यदि पुनर्नागमिष्यति तदपि अपरस्मिन् जन्मनि ते सहयोगं करिष्ये। अत्रकाव्ये हिमालयसुरक्षा, चीनपाकिस्तानराष्ट्रयोः भर्त्स्ना, आक्रान्तराष्ट्रस्थितेः उत्साहवर्धनञ्च कविना कृतम्।

कृतेरस्याः एकः भागः हिमाचलविश्वविद्यालयेन शास्त्रीपरीक्षायाः द्वितीय वर्षे निर्धारितः ।

**वत्सला–**

काव्यं 1975 वर्षे प्रकाशितम् राष्ट्रीयतायाः भावनया पूरितमिदं नाटकमस्ति। संस्कृतपाठस्य पुरतः संस्कृतगद्यानां गद्ये पद्यानां पद्ये कृतोऽनुवादः मौलिकवदेव प्रतीयते। षडङ्केषु विभक्तमिदं रूपकेषु नाटकसंज्ञामाप्नोति। 166 पृष्ठात्मकमिदं प्रतीयते। सङ्गीतशास्त्रसम्मतचतुर्दशगीतिकाः तासां च गेयहिन्दीरुपान्तरमस्य नाटकस्य विशेषता अस्ति। यथा–

**वैरावर्ते मा मां भ्रामय– बैर के कीचड़ में ना लिपटूं।**
**स्नेह समुद्रे मज्जय मां – प्यार में डुबकी दो भगवान।**
**रिपुदलने – मान – निहने – अरिदल –मान – विमर्दिनी।**
**जय जय मातृभूमे – जय जय मातृभूमि।**[7]

नाटकेऽस्मिन् काश्चित् गीतिका अपि लिखिता या शास्त्रीयसंगीते स्थानीयस्वरे च गेयास्ति।

**वियोगवल्लरी –**

रचनेयं संस्कृतौपन्यासिकमिति विधामङ्गीकरोति अत्र ब्रह्मचर्य–गृहस्थ–संन्यास–वानप्रस्थाश्रमाणां दिग्दर्शनमस्ति। 1981 तमे वर्षे महाकविबाणभट्टपुरस्कारेण उत्तरप्रदेशशासनः प्रस्तुतरचनां सम्मानम् अददात्। अत्र चतुर्णामाश्रमाणां विशदतया वर्णनमुपलभ्यते। महिष्या दत्तोपदेशः शुकनासोपदेशवत् प्रतीयते । सूर्यकेतुना पितुराज्ञया वनगमने रामायणस्य वनगमनप्रतिच्छाया प्रतिभाति । उपन्यासेऽस्मिन् 92 पृष्ठे श्रीरामेण शिवधनुषभञ्जनसमं दृश्यं दृष्टिगोचरं भवति । चन्द्रकेतु–यक्ष–सम्वादः महाभारतस्य युधिष्ठिरयक्षयोस्सम्वादमनुसरति। 130 पृष्ठे धर्मनिरपेक्षतायास्सम्बन्धितश्लोकाः महत्वपूर्णाः सन्ति। रचनायां यथास्थाने प्रकृतिवर्णनं विविधरससम्पुटम्, विरोधाभासः यमकः, अनुप्रासादिनां सुष्ठु प्रयोगः कृतः।

रचनेयं प्रौढा सति क्लिष्टतां न आप्नोति यथा–उत्पीडनमिक्षुदण्डानां न प्रजाजनानाम्। क्षयस्तिथीनां न जनायुषम्। वक्रता वेणुपादेषु न मानवाङ्गेषु। सौन्दर्यप्रतियोगिता हस्तसाधितशिल्पानां न कामिनाम्। वर्णसंकरो व्याघ्रचर्मणि न प्रजाजने।

**बृहत्सप्तपदी–**

235 पृष्ठेष्वाधारितायां कृतावस्यां सप्तकथास्सन्ति पितुर्नाम–अश्रुसंयोग–कङ्कणबंधन–मस्तकरुधिर–सुवर्णपादप–पुन्नामनरक–सुतशापाश्चेत्येताः सप्तकथा विद्यन्ते।

**तृणजातकम्–**

एकाङ्किविधायां लिखितोऽयं एकाङ्किनाटकमस्ति । अभिनेयता दृष्ट्या सर्वश्रेष्ठं विद्यते । अत्र साम्यवादस्य प्रतिच्छाया दरीदृश्यते। यथा–

**प्रासादस्था मधुरसभुजः कुस्कुराः पीनकायाः**
**गर्वोन्मत्ताः प्रतिदिनमहो स्वीयभाग्ये तु केचित्।**
**हट्टेष्वेते त्वधनमनुजा न क्षमा ग्राममासुम्।**
**सृष्टिं धाता कथमरचयत्प्रन्यायहीनां नयज्ञः।।**[8]

रचनायामस्यां संस्कृतगद्यस्य हिन्दीगद्ये संस्कृतपद्यस्य हिन्दीपद्ये अनुवादः कविना कृतः। पञ्जाबविश्वविद्यालयेन शास्त्रिकक्षायाः पाठ्यक्रमे रचनेयं पाठ्यविषये रूपेण निर्धारितास्ति।

**संस्कृतकाव्यकुञ्जम्–**

काव्येऽस्मिन् सप्तविंशतिसोपानानि सन्ति। विभिन्नसामयिकविषयाणामुपरि सप्तविंशतिसंख्याकाः कविताः लिखिताः सन्ति। अस्मिन् प्राकृतिकछटायाः मनोहरं चित्रणमुपलभ्यते। मद्यपान–अस्पृश्यता–दहेजप्रथा–उग्रवादादयः कतिपयविषयाः कविना स्वच्छन्दतया स्वलेखनीविषयीकृताः। हिमाचलप्रदेशस्य नार्यः मनोहारिचित्रणमत्र प्रस्तूयते। यथा–

**पृष्ठे कृत्वा विधुसमशिशुं पेटिकां वामहस्ते**
**कार्पासस्य क्षुपपरिकराद् भेदयन्ती च तूलम्।**

ISSN 2348-7828

**गायन्तीयं किमपि मधुरं ध्यानमग्ना स्वभर्तु**
**नारी काचिद् गगननगरादागता तारकाम्य:।।**[9]

**लघुरचना:**

15. छायाविलास: पद्यकाव्यम्
16. अनारकली पद्यकाव्यम्
17. रेलमन्त्री पद्यकाव्यम्

**निष्कर्ष:-**

निष्कर्षरूपेण वक्तुं शक्नुम: सौम्यमूर्तिना साधारणवेशधारिण: श्रीदुर्गादत्तशास्त्रिणा यद्यपि स्वकीयजीवनकाले कठिनतरस्य संकटापन्नस्य कालस्य प्रत्यक्षं कृतम्, तथापि निरन्तराभ्यासशीलता लग्नपूर्वककार्ये स्थित्वा च 'क्रियासिद्धि: सत्त्वे भवति महतां नोपकरणे'। इति उक्ति: अक्षरश: सफलीकृता। परिणामस्वरुपं शास्त्रिवर्येण स्वजीवनस्य उद्गारा: संस्कृतसाहित्यजगति समर्पिता:। तत्कालिक-समयानुसारं भाषावाद- क्षेत्रवाद-जातिवाद-अनुशासनहीनता-यौतुकप्रथा-विधवाविवाह-राष्ट्रद्रोह-पारिवारिककलह-पुत्रेच्छा-उत्कोचादिसामाजिककुरीतीनामुपरि स्वलेखनी चालिता। तस्मिन् समये भारतीयसंस्कृते: समूलोच्छेदनेन विदेशीशासनस्य परमलक्ष्यमासीत् अत: तस्मिन् समये पराधीनयुगे भारतीयमूलाधारसंस्कृतभाषामुच्छेदने ययासु:। अत: स्वरचनामाध्यमेन पण्डितवर्येण तेषां कपोले स्वीयसाहित्य-रचनारुपी चपेटिका दत्ता।

अत: पण्डितदुर्गादत्तशास्त्रिणा संस्कृतकाव्यकथा-नाटक-उपन्यास-व्याकरणादि-विविधसंस्कृतसाहित्यिकविधासु हिन्दीभाषानुवादसहितरचना: विहिता: कवि: स्वरचनासु सांस्कृतिक-पारम्परिक-धार्मिकसंस्काराणां कृते जनसमूहं प्रेरयत्।

इत्थं वक्तुं शक्यते पण्डितदुर्गादत्तशास्त्रिणा संस्कृतसाहित्ये पर्याप्तसम्मानम् अर्जितम्।

## पादटिप्पणी

1. हिमाचल प्रदेश के साहित्यकार दुर्गादत्तशास्त्री, पृष्ठसङ्ख्या- 15
2. राष्ट्रपथप्रदर्शनम् नवयुगसभ्यता, श्लो0 सं.- 6
3. राष्ट्रपथप्रदर्शनम् नवयुगसभ्यता, श्लो0 सं.- 7
4. राष्ट्रपथप्रदर्शनम् नवयुगसभ्यता, श्लो0 सं.- 11
5. राष्ट्रपथप्रदर्शनम् नवयुगसभ्यता, श्लो0 सं.- 24
6. तर्जनी प्रथमसर्गे
7. वत्सला, तृतीयोऽङ्क:, पृष्ठसङ्ख्या-50
8. तृणजातकम् । श्लोकसं. 8
9. संस्कृतकाव्यकुञ्जम्। 7.10

*सहायकाचार्य संस्कृत विभाग*
*एम सी एम डी ए वी महाविद्यालय कांगडा हि.प्र.*

ISSN 2348-7828

# लक्षणाया वृत्तित्वावृत्तित्वविमर्शः

**प्रलय नन्दी**

**शोधच्छात्रः, रामकृष्णमिशन्-विवेकानन्द-शैक्षणिक-शोध-संस्था बेलुडमठम्, हावडा, पश्चिमवङ्गः**

**निबन्धसंक्षेपः**- वैयाकरणसिद्धान्तलघुमञ्जूषायां लक्षणानिरूपणावसरे नागेशाचार्यः शक्तावेव लक्षणामन्तर्भावयन् स्वमतसमर्थनाय ''गङ्गायां मीनघोषौ'' इति वाक्यमुदाहरति। वैयाकरणभूषणसारादिष्वपि लक्षणायाः पृथग्वृत्तित्वे गौरवं प्रदर्श्य शक्तावन्तर्भावः सिद्धान्तितः। परन्तु न्यायशास्त्रादिषु लक्षणाया वृत्तित्वं स्वीकृतं सप्रपञ्चं लक्षणास्वरूपञ्च प्रतिपादितम्। एवं लक्षणायाः पृथग्वृत्तित्वे सम्प्रदायेषु परस्परं विरोधः स्फुट एव। निबन्धेऽस्मिन् तत्तसम्प्रदायानुमतमतान्युपस्थाप्य कतमः पक्षः समाश्रयणीय इति युक्त्योपपाद्यते।

**मूलशब्दाः** - वृत्तिः, शक्तिः, अभिधा, लक्षणा, प्रतीतिः, शाब्दबोधः, कार्यकारणभावः।

**उपोद्घातः**-वाग्व्यवहारप्रक्रियायां प्रथमतस्तिस्रो वृत्तयः समुपलभ्यन्ते। अर्थप्रतिपादकः शब्दनिष्ठव्यापारो वृत्तिरित्युच्यते। तत्र सङ्केतापेक्षयार्थावगमनशक्तिरभिधेत्युच्यते, वृत्तिसामान्यस्य अभिधावृत्तेश्च शास्त्रेषु शक्तिरिति प्रयोगः प्रायिकः। मुख्यार्थबाधादिसहकार्यपेक्ष-यार्थप्रति-भासनशक्तिर्लक्षणेत्युच्यते। अभिधेयादिव्यतिरिक्तार्थप्रतिपा-दनपरा व्यञ्जनावृत्तिः। तुरीया तात्पर्यवृत्तिरपि प्रधानतो भाट्टमीमांसकैः प्रतिपादिता, परन्तु तात्पर्यवृत्तिर्न शब्दशक्तिरपि तु वाक्यशक्तिरिति नेयं सर्वसम्प्रदायसमादृता। अभिधेयाभिधायिकाभिधा सर्वशास्त्रसम्मता, परन्तु लक्षणाव्यञ्जनयोर्विषये शास्त्रेषु वैचित्र्यं परिलक्ष्यते। लक्षणाविषयकवैचित्र्यमस्मदालोच्यविषयः। स्वज्ञाप्यसम्बन्धो लक्षणेति मीमांसकानुमतं लक्षणास्वरूपम्, तच्च न्यायशास्त्रादिविरुद्धम्। ''शक्यसम्बन्धो लक्षणे'ति नैयायिकनिर्णीतं लक्षणालक्षणम्[1], तल्लक्षणं साहित्यसम्मतमपि[2], परन्तु साहित्यिकैः शक्यसम्बन्धात्मकलक्षणायाः शक्यतावच्छेदकारोपरूप आशयः प्रकाशितः[3]। सोऽयमाशयो शब्दशास्त्रेऽपि समादृतः परन्तु लक्षणायाः पृथग्वृत्तित्वं निराकृत्य शक्तावेवास्या अन्तर्भावः सिद्धान्तित इति वैयाकरणानां विशेषः। लघुनिबन्धेऽस्मिन् भिन्नसम्प्रदायरीत्या लक्षणास्वरूपमुल्लिख्यास्या वृत्तित्वावृत्तित्वविषयको विचारः प्रस्तूयते।

**लक्षणावृत्तिः**-''गङ्गायां मीन'' इत्युच्यमाने गङ्गापदाभिधेयभ-गीरथरथखातावच्छिन्नजलप्रवाहरूपशक्यार्थस्य मीनपदार्थेन वाधाभावात्तात्पर्योपपत्तेर्न यत्नान्तरापेक्षा। परन्तु शैत्यपावनत्वाद्यभीष्टधर्म-प्रतीतये ''गङ्गायां घोष'' इति प्रयुज्यमाने आभीरपल्ल्यात्मकघोषपदार्थेन गङ्गापदाभिधेयभगीरथरथखातावच्छिन्नजलप्रवाहात्मकशक्यार्थस्य बाधेन तात्पर्यानुपपत्तेर्यत्नान्तरापेक्षानुभवसिद्धा। तदेतद्यत्नान्तरं शास्त्रेषु लक्षणा, भक्तिः, अप्रसिद्धशक्तिरिति व्यवह्रियते। सम्प्रति नानामतानुगुणं लक्षणास्वरूपं प्रतिपाद्यते।

**न्यायनयः**-शक्यार्थसम्बन्धो लक्षणेति न्यायनये लक्षणास्वरूपम्। तदुच्यते विश्वनाथपञ्चाननाचार्यैः-''लक्षणा शक्यसम्बन्धस्तात्पर्या-नुपपत्तितः[4]'' इति। अत्र प्रथमांशो लक्षणास्वरूपपरः। शक्तिप्रतिपाद्यो वाच्यार्थापर्यायः शक्यार्थः, अस्य सम्बन्धो लक्षणेत्याशयः। शक्यसम्बन्धात्मकलक्षणायाः प्रवृत्तौ बीजञ्च तात्पर्यानुपपत्तिः। तात्पर्यं वक्तुरिच्छाविशेषः, अनुपपत्तिर्बाधः। एवञ्च तात्पर्यानुपपत्तिर्लक्षणाबीजम्। ''गङ्गायां घोष'' इत्युच्यमाने वाक्यस्य श्रोतुः गङ्गाप्रवाहवृत्त्याभीरपल्लीति बोधो भवति। ततो वक्तुः तात्पर्यस्य बाधो भवति, गङ्गातटवृत्तिर्घोष इति तात्पर्येण वाक्यस्य प्रयुज्यमानत्वात्। एवञ्च तात्पर्यबाधरूपलक्षणा-बीजस्य सत्त्वाद्बाधपरिहाराय गङ्गापदे शक्यसम्बन्धात्मकलक्षणाप्रवृत्तिः। शक्यो गङ्गाप्रवाहः, गङ्गातटरूपार्थेनास्य सामीप्यसम्बन्धः, सामीप्य-सम्बन्धवशाच्च गङ्गातटरूपार्थप्रतीतिः। ततश्च गङ्गातटवृत्त्याभीरपल्लीति वक्तृतात्पर्यमुपपद्यत इति न्यायरीतिः। अत्र मते वृत्तिर्नाम अर्थबोधानुकूलः पदपदार्थसम्बन्धः[5], सामीप्यादिसम्बन्धात्मिका लक्षणापि वृत्तिरेव। गदाधरभट्टाचार्येणाप्युक्तं शक्तिवादे-''सङ्केतो लक्षणा चार्थे पदवृत्तिरि'ति[6]। एवञ्च शक्यसम्बन्ध एव लक्षणा, लक्षणापि काचिद्वृत्तिरिति न्यायनयः।

**वेदान्तनिर्णयः**-लक्षणा न पदमात्रवृत्तिः, वाक्यवृत्तिरपीति वेदान्ते विशेषः। लक्षणा शक्यसम्बन्धात्मिका, तात्पर्यानुपपत्तिश्च लक्षणाबीजमिति वेदान्तेऽपि सम्मतम्। परन्तु लक्षणाप्रतिपाद्यो यथा पदार्थस्तथा वाक्यार्थोऽपीति विशेषः। ''गङ्गायां घोष'' इत्यत्र गङ्गापदबोध्यः शक्यो गङ्गाप्रवाहः, शक्यसम्बन्धः सामीप्यं लक्षणा, अनया लक्षणया गङ्गाशब्दो गङ्गातटरूपार्थमुपस्थापयति ततस्तात्पर्योपपत्तिः। परन्तु न्यायादिदिशा ''गभीरायां नद्यां घोष'' इत्यादौ निर्वाहो न सम्भवति। ''गभीरायां नद्यां घोष'' इत्यत्र गभीरपदाद्गभीरपदार्थस्य नदीपदान्नदीपदार्थस्योपस्थितिः। गभीरपदार्थस्य नदीपदार्थेन सहाभेदान्वयः, ततो गभीराभिन्ननदीति बोधः। अयम्बोधो ''गभीरायां नद्यामि'ति पदसमुदायेन जायते, परन्तु अस्यार्थस्य घोषपदार्थेन सहान्वये तात्पर्यं नोपपद्यते। तात्पर्यानुपपत्तितश्च लक्षणाप्रवृत्तिः। अत्र शक्यार्थो गभीराभिन्ननदीति, तद्बोधको ''गभीरायां नद्यामि'ति पदसमुदायः। लक्षणायाः पदमात्रवृत्तित्वे प्रकृतस्थले लक्षणाया अप्रवृत्तौ तात्पर्योपपत्त्यसम्भवः। अतः पदवत्पदसमुदायेऽपि लक्षणाङ्गीकर्तव्येत्याशयः। शक्यसम्बन्ध एव लक्षणा, शक्यपदेनात्र स्वशक्तिज्ञाप्यं विवक्षितम्। पदार्थो यथा शक्तिज्ञाप्यस्तथा पदार्थज्ञानद्वारा वाक्यार्थोऽपि शक्तिज्ञाप्य एव[7]। वाक्यमत्र पदसमुदायः, ततश्च गभीराभिन्ननदीरूपार्थः शक्य एव। स्वशक्यसम्बन्ध इति लक्षणायाः स्वरूपं फलितम्। स्वं ''गभीरायां नद्यामि'ति पदसमुदायः, तद्बोध्यो गभीराभिन्ननदीरूपशक्यार्थः, अस्य तटेन सह सामीप्यसम्बन्धः। ततश्च स्वशक्यसामीप्यसम्बन्धरूपलक्षणावृत्त्या गभीराभिन्ननदीतटरूपलक्ष्या-र्थस्योपस्थितौ गभीराभिन्ननदीतटवृत्तिर्घोष इति तात्पर्यमुपपद्यते।

शाब्दबोधानुकूलः पदपदार्थसम्बन्धो वृत्तिरिति वेदान्तसम्मतं वृत्तिस्वरूपम्। एवञ्च लक्षणायाः सम्बन्धात्मकत्वं वृत्तित्वञ्च वेदान्तिभिः सिद्धान्तितम्।

**मीमांसाशयः**-लक्षणास्वरूपनिर्णये वेदान्तमीमांसयोः मतैक्यं परिलक्ष्यते। मीमांसका अपि पदवाक्ययोरुभयोरपि लक्षणावृत्तिमङ्गीकुर्वन्ति। स्वशक्यसम्बन्ध इति वेदान्तोक्तं लक्षणास्वरूपम्, स्वज्ञाप्यसम्बन्ध इति मीमांसकानुमतं लक्षणास्वरूपम्। वाक्यार्थस्य शक्यत्वं शक्तिज्ञाप्यत्वं वा मीमांसकैर्नानुमन्यत इति विशेषः। पदार्थानां शक्यत्वात्पदार्थज्ञानद्वारा वाक्यार्थस्यापि शक्यत्वं वेदान्ते प्रतिपादितम्, तत्र वाक्ये साक्षात्शक्तिर्नाङ्गीकृता। एवं मीमांसकैरपि वाक्ये शक्तिर्नाङ्गीक्रियते, प्रत्येकं पदैः स्वपदार्थोपस्थितौ समभिव्याहारादेव परस्परसम्बन्धरूपस्य वाक्यार्थस्य प्रतिपत्तिरिति तदाशयः। ततो वाक्यार्थो वाक्यज्ञाप्यो न तु वाक्यशक्य इति प्रतिपादनभेदादेव लक्षणास्वरूपगतो भेदोऽवबोध्यः। ''अनन्यलभ्यो हि शब्दार्थः'', ''स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यत''-इति शब्दार्थोपस्थितिनियमात्र हि वाक्ये वाक्यार्थोपस्थापिका शक्तिरिति मीमांसाहृदयम्। एवञ्च स्वज्ञाप्यसम्बन्ध इति प्रकृते लक्षणास्वरूपं फलितम्। स्वं वाक्यं ''गभीरायां नद्यामि'ति पदसमुदायः, तद्बोध्यः गभीराभिन्ननदीरूपार्थः, अस्य तटेन सामीप्यसम्बन्धः। ततश्च स्वबोध्यसामीप्यसम्बन्धात्मकलक्षणावृत्त्या गभीराभिन्ननदीतटरूपलक्ष्यार्थोपस्थितौ गभीराभिन्ननदीतटवृत्तिर्घोष इति वाक्यसन्दर्भे मीमांसानुमतो लक्षणालक्षणसमन्वयो बोध्यः। एवं स्वबोध्यसम्बन्धो लक्षणा, सा चाभिधावद्वृत्तिरपीति मीमांसासम्मतिः।

**साहित्यसमयः**-जगन्नाथाचार्यो रसगङ्गाधरे लक्षणास्वरूपं प्रतिपादयति-''शक्यसम्बन्धो लक्षणे''[8]ति। न्यायशास्त्रादिनिरूपितं लक्षणास्वरूपमेवात्र स्वीकृतम्, परन्तु लक्षणास्वरूपाशयप्रतिपत्तिस्तथा लक्ष्यार्थोपस्थितिक्रमनिर्णयोऽत्र विशेषः। आचार्यो मम्मटः काव्यप्रकाशे लक्षणां निरूपयति-

**''मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया।।**[9]'' इति।

मुख्यार्थस्य बाधे, मुख्यार्थस्य योगे च रूढितः प्रयोजनाद्वा यया वृत्त्या मुख्यभिन्नोऽन्योऽर्थः प्रतिपाद्यते सा वृत्तिः लक्षणेति कारिकाशयः। अभिधया प्रतिपाद्यमानानां मुख्यार्थानां परस्परमन्वयेन तात्पर्यवृत्त्याखण्डवाक्यार्थोपस्थित्यभावे मुख्यार्थबाधः, तदैव लक्षणायाः प्रवृत्तिः। लक्षणाप्रवृत्तौ रूढिरथवा प्रयोजनं कारणं भवति। किञ्च लक्षणया प्रतिपाद्यमानो यो मुख्यभिन्नार्थस्तेन लक्षणीयार्थेन मुख्यार्थस्य साक्षात् सम्बन्धो दृश्यते। एवञ्च- मुख्यार्थबाधः, लक्षणीयार्थेन मुख्यार्थस्य साक्षात्सम्बन्धस्तथा रूढिप्रयोजनान्यतरदिति लक्षणास्थले हेतुत्रयं दृश्यते। अत्र मुख्यार्थबाधमुख्यार्थयोगयोर्दण्डचक्रादिन्यायेन मिलितयोरेव कारणत्वं, रूढिप्रयोजनयोस्तु तृणारणिमणिन्यायेन प्रत्येकमेव कारणत्वमिति विशेषः। ''गङ्गायां घोष'' इत्यत्र लक्षणया गङ्गातीररूपलक्ष्यार्थस्य प्रतीतौ गङ्गाप्रवाहे आभीरपल्ल्यवस्थानासम्भवाद् मुख्यार्थबाधः, गङ्गाप्रवाहरूपमुख्यार्थगतशैत्यपावनत्वादिधर्माणां गङ्गातीररूपलक्ष्यार्थे प्रतीतिरूपप्रयोजनं तथा गङ्गातीरात्मकलक्षणीयार्थेन प्रवाहात्मकमुख्यार्थस्य सामीप्यात्मकसाक्षात्सम्बन्ध इत्यंशत्रयं समुपलभ्यते। अत्र लक्षणीयार्थो मुख्यार्थसम्बन्ध्यपि मुख्यार्थभिन्न एव भवति। लक्षणावृत्त्या रूढिप्रयोजनान्यतरानुगुणं मुख्यार्थभिन्नार्थः समुपस्थाप्यते, ततश्चोपस्थितानामर्थानां परस्परमन्वये शाब्दबोधो जायत इति भावः। अथ मुख्यार्थबाधे सति लक्षणा, अर्थाद् मुख्यार्थानामुपस्थित्यनन्तरमेव लक्षणाप्रवृत्तिः सम्भवति। अतो लक्षणावृत्तेः पूर्वमवश्यमेवाभिधायाः प्रवृत्तिर्भवति, अत एव ''अभिधापुच्छभूता लक्षणा'' इति विद्वांसोऽभिवदन्ति। अत्र मतेऽपि वृत्तिः पदपदार्थसम्बन्धरूपा एव। ततः शक्यार्थसम्बन्धो लक्षणेति सम्बन्धात्मकत्वाल्लक्षणापि वृत्तिरिति साहित्यसमयः।

**शाब्दिकाशयः**-लक्षणास्वरूपविषये वैयाकरणनिकाये नैके विशेषाः परिलक्ष्यन्ते। शाब्दिकैर्लक्षणाया वृत्तित्वाभावः सिद्धान्तितः। तत्र प्राचीनवैयाकरणा लक्षणायाः साक्षादभावमेव प्रतिपादयन्ति। शक्तिग्राहकशिरोमणिना व्यवहारेण यथा मुख्यार्थस्योपपत्तिर्जायते तथा लक्ष्यार्थोऽपि उपपद्यते। अतो लक्ष्यार्थप्रतीतये पृथक् लक्षणावृत्त्याः स्वीकारोऽनावश्यक इति प्राचीनाशयः। जलप्रवाहरूपार्थप्रतीतये यथा गङ्गापदप्रयागात्मको वृद्धव्यवहारो दृश्यते तथा गङ्गातीररूपार्थप्रतीतयेऽपि वृद्धैर्गङ्गापदं प्रयुज्यत एव। अतः शक्यलक्ष्ययोरुभयोरप्यर्थयोः गङ्गापदप्रयोगसम्भवात् जलप्रवाहरूपशक्यार्थ इव तीररूपलक्ष्यार्थेऽपि गङ्गापदस्य शक्तिः सिध्यति। एवञ्च शक्त्यैव मुख्यार्थवत् लक्ष्यार्थोऽपि बुध्यत इत्यतो लक्ष्यार्थोपपत्तये पृथक् लक्षणावृत्त्याः स्वीकारो न युक्तः। अपि च, लक्षणाया अनङ्गीकारे लाघवमपि। घटपदशक्तिमजानतः प्रत्यक्षेणापि घटरूपार्थावबोधाभावात् शाब्दबोधं प्रति वृत्तिज्ञानाधीन-पदजन्यपदार्थोपस्थितिः कारणम्। एवञ्च मुख्यार्थघटितशाब्दबोधं प्रति शक्तिज्ञानाधीनपदजन्यपदार्थोपस्थितिः कारणम्, लक्ष्यार्थघटितशाब्दबोधं प्रति लक्षणाधीनपदजन्यपदार्थोपस्थितिः कारणमिति पदजन्यपदार्थोप-स्थितौ कार्यकारणभावद्वयं स्वीकार्यम्। लक्षणाभावे तु शक्तिज्ञानाधीन-पदजन्यपदार्थोपस्थितिरूपेण एकेनैव कारणेन शक्यलक्ष्योभयबोधोपपत्तेः कार्यकारणभाव एक एवेति लाघवम्। किञ्च कार्यकारणभावद्वयकल्पने व्यभिचारस्तथा अनन्तकार्यकारणभावप्रसङ्गोऽपि। अतो लाघवाद् अदृष्टत्वाच्च लक्षणाभावपक्ष एव स्वीकर्तव्य इति लक्षणावृत्तेरभाव एव प्राचीनवैयाकरणैः सिद्धान्तितः। शाब्दबोधजनकज्ञानविषयपदपदार्थ-सम्बन्धत्वं वृत्तित्वमिति वृत्तिस्वरूपं प्राचीनैरपि स्वीकृतम्, परन्तु अत्र मते लक्षणैव न स्वीक्रियत इति न कापि लक्षणा नापि तस्या वृत्तित्वमिति प्राचीनवैयाकरणानामाशयः।

नव्यवैयाकरणानां मते लक्षणाया अस्तित्वमस्ति परन्तु वृत्तित्वं नास्तीति विशेषः। ''सर्वे सर्वार्थवाचकाः'' इति वचनात् शक्त्यैव शक्यलक्ष्योभयबोधापत्तेः लक्षणोच्छेदे इष्टापत्तिरिति प्राचीनैः समाहितम्। परन्तु -''योगिनां सर्वार्थवाचकत्वज्ञाने सत्यप्यस्मदादीनां तदभावात्[10]'' व्यवहारेषु सङ्केतितान्यस्यार्थस्य बोधार्थं विलक्षणा वृत्तिः

काचिदावश्यकीति नव्यवैयाकरणानां मतम्। अतो लक्षणेति अप्रसिद्धशक्तिविशेषः स्वीकृतः। शक्त्या मुख्यार्थोपस्थितिः ततः अन्वयसिद्धौ शाब्दबोध इति साधारणतः क्रमः। तत्र मुख्यार्थोपस्थित्यनन्तरम् अन्वयानुपपत्तौ मुख्यार्थस्य यः सम्बन्धस्तद्विषयकज्ञानेनोद्बुद्धो यः संस्कारविशेषस्ततो जायमाने बोधे लक्षणेति व्यवह्रियते। अन्वयानुपपत्तिर्वस्तुतः अन्वये सत्येव ज्ञायते, अतस्तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वं न तु अन्वयानुपपत्तेः[11] इति अन्यत्रापि प्रतिपाद्यते। अथ नव्यमते लक्षणेति शक्तिविशेषः स्वीक्रियत इत्येतावता समायातम्, परन्तु अयं शक्तिविशेषः अप्रसिद्ध इति विशेषः। शाब्दबोधजनकज्ञानविषयपदपदार्थसम्बन्धस्य वृत्तित्वेन प्रसिद्धिः, नव्यमते तु शक्यतावच्छेदकारोप एव लक्षणा[12]। आरोपश्च न सम्बन्ध इति कृत्वा लक्षणाया वृत्तित्वमत्र निराकृतम्। एवञ्च ''गङ्गायां घोषः'' इत्यादौ गङ्गापदशक्यार्थो गङ्गाप्रवाहः, शक्यतावच्छेदकस्य प्रवाहत्वस्य गङ्गातीरे आरोपः क्रियते तदनु व्यञ्जनया गङ्गाप्रवाहगतशैत्यपावन-त्वादिधर्मा अपि तीरे प्रतीयन्त इति नव्यानामाशयः। एवञ्च शक्यार्थेनैव शब्दस्य सम्बन्धो भवति, क्वचिद् निमित्तात् तात्पर्यं भिद्यते। अत उक्तं वाक्यपदीये-''अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः[13]।।'' इति। अपि च लक्षणायाः शक्यतावच्छेकारोपात्मकत्वादेव ''गङ्गायां मीनघोषौ'' इत्यादौ द्वन्द्वसमास उपपद्यते। समुदायार्थस्य एकधर्मावच्छिन्नेनान्वये सत्येव द्वन्द्वः सिध्यति, ततः प्रकृते गङ्गातीरेऽपि प्रवाहत्वस्यारोपेण प्रवाहत्वैकधर्मावच्छिन्नेन गङ्गाप्रवाहेण मीनघोषसमुदायस्यान्वयाद् द्वन्द्वः सिध्यति। लक्षणाया आरोपरूपत्वेन स्वीकाराभावे तु प्रवाहत्वं तीरत्वमिति धर्मद्वयावच्छिन्नो गङ्गापदार्थ इति कृत्वा द्वन्द्वो नोपपद्येत इति भावः। किञ्च, लक्षणायाः पृथग्वृत्तित्वे मीनांशेऽभिधाया घोषांशे लक्षणाया इति वृत्तिद्वयस्य युगपदप्रवृत्तेः शाब्दबोधोऽपि न सम्भवेदिति बोध्यम्। अतो लक्षणेति कश्चिदप्रसिद्धशक्तिविशेषोऽस्ति परन्त्वस्या वृत्तित्वं नास्तीति नव्यवैयाकरणैः सिद्धान्तितम्।

**विमर्शः**-एतावता भिन्नानां सम्प्रदायानां मतानुसारं लक्षणायाः स्वरूपं तथा लक्षणाया वृत्तित्वं स्वीकृतं न वेति विषये आलोचनं प्रस्तुतम्। सम्प्रति तत्तन्मतदिशा लक्षणाया वृत्तित्वावृत्तित्वविषये विचारः प्रस्तूयते -

1. लक्षणायाः शक्तावन्तर्भावे सति शक्त्या पदार्थोपस्थितिः शक्यार्थबोधे कारणमित्यवेवम् एकमेव कार्यकारणभावेन शक्यलक्ष्योरुभयोरपि निर्वाहसम्भवः। लक्षणायाः पनुः पृथग्वृत्तित्वे तु लक्षणया पदजन्यपदार्थोपस्थितिः लक्ष्यार्थबोधे कारणमिति कार्यकारणभावान्तरस्य कल्पने गौरवमिति प्रतिपादितम्। परन्तु शक्यार्थप्रतीतौ पदप्रयोगानन्तरं यथा झटित्येवार्थबोधः शाब्दबोधश्च जायते, न तथा लक्ष्यार्थविषये दृश्यते। अत्र प्रथमस्तरे शक्यार्थस्य प्रतीतिः ततो मुख्यार्थबाधो तदनन्तरं लक्ष्यार्थप्रतीतिरिति मुख्यार्थबाधपुरःसरं शाब्दबोधो भवति। अपि च लक्ष्यार्थप्रतीतौ मुख्यार्थबाधः सर्वत्रैव दृश्यते, तस्मात् लक्षणास्थले तात्पर्याद्यनुपपत्तिप्रतिसन्धानपुरःसरं विलम्बेन बोधो भवति। कार्यकारणभावस्यैकत्वे शक्यलक्ष्ययोरुभयोर्विषये समाना पदार्थोपस्थितिप्रक्रिया उचिता, परन्तु लक्ष्यार्थविषये वैशिष्ट्यदर्शनात् अस्त्येव वैलक्षण्यम्। अतः अवश्यमेव पृथक्कार्यकारणभावः स्वीकर्तव्यः। उभयपक्षे साम्याच्च अस्तु लक्षणायाः पृथग्वृत्तित्वमपि।

2. शक्यतावच्छेदकारोपो लक्षणेति यद्यप्युच्यते, वस्तुतो शक्यतावच्छेदकारोपः शक्यसम्बन्धस्यैव फलमिति न्यायादिमतेऽपि न वैलक्षण्यम्। शक्यार्थेन सह सम्बन्धसत्त्व एव तीराद्यर्थे शक्यतावच्छेदकस्य आरोपः सम्भवति। ''सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम''[14] इति व्याख्यया विश्वनाथाचार्य एतदेव सङ्केतयति। अपि च, अभिधा वाच्यवाचकसम्बन्धः, अस्य फलं सङ्केतितार्थबोधः; लक्षणा शक्यसम्बन्धः अस्य फलं लक्ष्यार्थबोधः-इत्येव युक्ततरम्। तथा सति व्यवस्थापि सम्यक् निर्वोढुं शक्यते।

3. ''गङ्गायां मीनघोषौ''-अत्र प्रकरणम् अन्वेषणीयम्। शङ्कामात्रोपस्थापनाय एवं प्रयोगो नोचितः। सर्वमेव वाक्यं सप्रकरणं भवति, जगति प्रकरणं विना किमपि वाक्यं न प्रवर्तते। ''गङ्गायां घोषः'' इत्यादि वाक्यमपि सप्रकरणमस्ति। किञ्चित्तत्र प्रकरणमस्ति, तादृशवाक्यप्रवृत्तौ। एवमालोच्यमाने ''गङ्गायां मीनघोषौ'' इत्यत्र किं प्रकरणमिति आदौ चिन्तनीयम्। यतो हि ''गङ्गायां घोषः'' इति वाक्ये वक्तुः मुख्यार्थबाधो भवत्विति विवक्षा स्पष्टतयास्ति, यतो ह्यत्र घोषस्य माहात्म्यं प्रकटनीयमस्ति, तद्दिशा एतादृशं वाक्यं वक्त्रा प्रयुक्तमस्ति। किन्तु प्रकरणं यदा भिन्नं भवति तदा कदाचित् मुख्यार्थबाधो न भवति। यथा - महान् जलप्रवाहो वर्तते, येन पूर्णो ग्राम एव आप्लुतो जातोऽस्ति, जले ग्रामो मज्जन्नस्ति। तत्काले ''गङ्गायां घोषः'' इति वाक्यप्रयोगस्य मुख्यार्थबाधविवक्षा अवश्यमेव न भवति। एवं वक्तुर्विवक्षानुसारेण मुख्यार्थबाधादि भवति। अतो ''गङ्गायां मीनघोषौ स्तः' इति वक्तुकामस्य कोऽभिप्राय इत्यन्तं प्रश्नार्हं भवति। यादृशं वाक्यं लोके वक्तुमेव न शक्यमस्ति तादृशं वाक्यं स्वीकृत्य आलोच्यमाने किमपि न लभ्यते। तस्मात् -''गङ्गायां मीनघोषौ'' इति वक्तुराशयः प्रथमं स्पष्टीकरणीयः अस्ति, तत एव अत्रायमभिप्रायः, लक्षणा च प्रवर्तते अथवा न प्रवर्तते इत्यादि विभागेन वक्तुं शक्यते। बौद्धिकस्तरे यत्किञ्चित् स्फुरति ततः यः कश्चनार्थश्च परिकल्पयितुं शक्यः। परन्तु स एवार्थः प्रायोगिकस्तरे सम्भवति न वेति तु चिन्तनीयम्। व्यञ्जनावृत्तावपि ''गतोऽस्तमर्कः'' इत्यादिकं यद्वाक्यं तत्र ''अयं व्यङ्ग्यार्थः'' इति वक्तुं प्रकरणादिकमावश्यकमस्ति। प्रकरणं किञ्चिद्भवति, वस्तुतः सूर्योऽस्तं गच्छन्नेव तिष्ठति, कश्चिज्जनः कञ्चिज्जनं प्रति कथयति - ''पश्यतु सूर्योऽस्तं गत'' इति, तत्र अन्यार्थविवक्षैव नास्तीति कृत्वा, प्रकरणबलाद् अन्योऽर्थः विवक्षितो नास्तीति स्पष्टमनुभूयते। तस्मादत्र व्यङ्ग्यार्थोऽपि कश्चिन्न स्फुरति। एवं प्रकरणं वाक्यस्य अत्यन्तं प्रधानं नियामकं भवति, तेन लक्षणास्मिन् प्रकृतवाक्ये ग्राह्याथवा अग्राह्येति वयं प्रकरणेनैव निश्चयं प्राप्नुमः।

4. ''गौतमोऽप्याह-सहचरण-स्थान-तादर्थ्य-वृत्तमान-धारण-सामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणबालकटराजसक्तुचन्दनगङ्गा-शकटान्नपुरुषेष्वतद्भावेऽपि तदुपचार:''[15] इति वैयाकरणसिद्धान्तलघुमञ्जूषायां प्रतिपादितम्। अत्र अतद्भावेऽपि इत्यस्य तच्छब्दाशक्यत्वेऽपि इत्याशय:। तदुपचार: इत्यस्य तच्छब्दव्यवहार: इत्यर्थ:, तच्छब्दशक्यत्वस्योपचार आरोपो वेति आशय:। एवं प्रतिपाद्य, गौतमाचार्येणापि लक्षणाया: शक्यतावच्छेदकारोपत्वस्वरूपत्वं स्वीकृतमिति शाब्दिका: प्रतिपादयन्ति। एवम् ''अत एव ''पुंयोगादाख्यायाम्''(4/1/48) इति सूत्रे भाष्ये गोपीत्यादौ गोपसम्बन्धिस्त्रीत्वेन लक्षणायां ''तस्येदम्'' (4/3/120) इति शास्त्रेण तादृशेऽर्थेऽणप्रत्ययान्तस्यैव तादृशवाक्यस्यैव वा साधुत्वनियमादसाधुत्वापत्तिं दूषणमभिधाय ''नावश्यमयमेवाभिसम्बन्धो भवति तस्येदमिति, किन्तु तन्मूलक: सोऽयमित्यप्यभिसम्बन्धोऽस्ति'' इत्युक्त्वा ''चतुर्भि: प्रकारैरतस्मिन् स इत्येतद्भवति तादर्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात्, मञ्चा हसन्ति, सिंहो माणवक:, गङ्गायां घोष:, यष्टी: प्रवेशय ''इत्युक्तम्''[16] (217) इत्येवं भाष्यकारवचनमपि तत्र उद्धृतम्। तद्रीत्या च लक्षणाया: शक्यतावच्छदकारोपत्वेनैव बोधो भवतीति व्याख्यातम्। परन्तु गौतमाचार्याणां भाष्यकाराणाञ्च वचनस्य शक्यसम्बन्धस्य फलं शक्यतावच्छेदकारोप इत्यर्थे एव तात्पर्यमित्यपि व्याख्यतुं शक्यते। अत: शक्यतावच्छेदकारोप एव लक्षणा, अस्या न पृथग्वृत्तित्वमिति विषये आप्तवचनमपि किञ्चित् प्रमाणत्वेन स्वीकर्तुं न शक्यते।

1. पदतदर्थयो: सम्बन्ध एव शक्ति: वृत्तिरिति वा सर्वैरेव दार्शनिकै: स्वीकृतम्। शाब्दिकदिशा लक्षणाया: शक्यतावच्छेदकारोपत्वात्मकत्व-स्वीकारे तु लक्षणाया: शक्तित्वेन व्यवहारो न सम्भवति, लक्ष्यस्थले शक्यतावच्छेदकस्य आरोपात, आरोपस्य असम्बन्धात्मकत्वात्, असम्बन्धस्य च अशक्तित्वात्। परन्तु लक्षणाया: पृथग्वृत्तित्वं प्रसिद्धम्। अत: लक्ष्यार्थप्रतीतौ शक्यतावच्छेदकारोपस्य स्वीकारे न दोष: किन्तु लक्षणाया: शक्यतावच्छेदकारोपत्वमेव स्वरूपमिति स्वीकारे लोकव्यवहारविरोध इति बोध्यम्।

2. वस्तुत: सम्बन्धे शक्तिरिति रूढि:, अतो लक्षणाया: सम्बन्धात्मकत्वं तत: पृथक् वृत्तित्वं शक्तित्वं वा – इति प्रतिपादने एव न कापि हानि:।

3. अपि च – वाच्यार्थ:, लक्ष्यार्थो व्यङ्ग्यार्थ इति भेदेऽपि अर्थ एक एव, तत्र उपाधिभेदात् वाच्यत्वादिभि: व्यवहारो भवति। एकैकस्य चार्थस्य भिन्नं वैशिष्ट्यं भवति, तन्मध्ये तत्तदर्थप्रतिपादकशक्तीनां स्वीकार:। अतो वाच्यर्थविषये यथा पृथग्वृत्ति: अभिधा, व्यङ्ग्यार्थविषये यथा व्यञ्जना पृथग्वृत्ति: तथैव लक्ष्यार्थविषयेऽपि लक्षणारूपपृथग्वृत्ते: स्वीकार एव युक्ततर इति तत्त्वममिति शम्।

## परिशीलितग्रन्थसूची


1. वैयाकरणसिद्धान्तलघुमञ्जूषा, (प्रथमो भाग:), आचार्यश्रीरामप्रसादत्रिपाठी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:, वाराणसी, 1990।
2. साहित्यदर्पण: लक्ष्मीटीकोपेता, आचार्य: कृष्णमोहनशास्त्री, चौखम्भा संस्कृत संस्थान, वाराणसी, वि.सं-2075।
3. शक्तिवाद:, आचार्य दामोदरशास्त्री, चौखम्बा संस्कृत सीरिज आफिस, वाराणसी, 1986।
4. मीमांसान्यायप्रकाश:, अभ्यंकरोपाह्ववासुदेवशास्त्री, भाण्डारकर ओरियन्टल् रिसर्च सेन्टर, पूना, 1937।
5. शब्दशक्तिप्रकाशिका, प. ढुण्ढिराजशास्त्री, चौखम्बा संस्कृत सीरिज आफिस, वाराणसी, 1991।
6. ध्वन्यालोक:, पण्डितपट्टाभिरामशास्त्री, चौखम्बा संस्कृत सीरिज आफिस, वाराणसी, 1940।
7. भूषणसारतत्त्वप्रकाशिका, आचर्य: कं. वे. रामकृष्णमाचार्य:, राष्ट्रियसंस्कृतविद्यपीठम्, तिरुपति:, 2010।
8. रसगङ्गाधर: (प्रथमो भाग:), प० केदारनाथ ओझा:, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:, वाराणसी, 1981।
9. वैयाकरणभूषणसार:, प्रो. आद्याप्रसादमिश्र:, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय:, वाराणसी, 2016।


## पादटिप्पणी

1. ''लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तित:।''(दिनकरीरामरुद्रीसहिता न्यायसिद्धान्तमुक्तावली,कारिका-82)
2. ''शक्यसम्बन्धो लक्षणा'', (रसगङ्गाधर:,पृष्ठम्-145)
3. ''सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम।'', (साहित्यदर्पण:,पृष्ठम्-36)
4. दिनकरीरामरुद्रीसहिता न्यायसिद्धान्तमुक्तावली(पृष्ठम्-285)
5. ''अर्थस्मृत्यनुकूल: पदपदार्थसम्बन्ध: शक्ति:''(तर्कसंग्रह:,शब्दखण्डम्)
6. शक्तिवाद:,पृष्ठम्-1
7. मणिप्रभाशिखामणिसहिता वेदान्तपरिभाषा,पृष्ठम्-286
8. रसगङ्गाधर:,पृष्ठम्-145
9. काव्यप्रकाश:, कारिका-9
10. वैयाकरणसिद्धान्तलघुमञ्जूषा, पृष्ठम्-199
11. ''वस्तुतस्तात्पर्यानुपपत्तिरेव तद्बीजम्'', वैयाकरणसिद्धान्तलघुमञ्जूषा, पृष्ठम्-191
12. ''परे तु आरोपितशक्यतावच्छेदकरूपेण शक्त्यैव तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे व्यक्तिविशेषबोधे वा लक्षणेति व्यवहार:'', वैयाकरणसिद्धान्तलघुमञ्जूषा, पृष्ठम्-217
13. वाक्यपदीयम्, द्वितीयकाण्डम्, कारिका-255
14. साहित्यदर्पण:, पृष्ठम्-36
15. वैयाकरणसिद्धान्तलघुमञ्जूषा (प्रथमो भाग:), पृष्ठम् - 228
16. वैयाकरमसिद्धान्तलघुमञ्जूषा (प्रथमो भाग:), पृष्ठम् - 217

ISSN 2348-7828

# वैदिकज्ञानपरम्परायाः सन्दर्भे वेदानां स्वरूपं महत्वं च

वेदप्रकाश आर्य

**मुख्य शब्दः**–ऋग्वेदः यजुर्वेदः एसामवेदः अथर्ववेदः ईश्वरः ज्ञानएकर्म, उपासना, मोक्षः मन्त्रः।

**प्रस्तावनाः**–वेदशब्दः 'विद ज्ञाने' इति ज्ञानार्थकाद् विद्धातोर्धं प्रत्यये कृते वेद इति रूपं निष्पद्यते। ज्ञानार्थको हि वेदशब्दः। वेदेषु ज्ञानराशिः इति वदन्ति विद्वान्सः। विद सत्तायाम्, विद विचारणे, विद्लृलाभे, विद चेतनाख्याननिवासेषु इति धातुभ्योऽपि घं वेदरूपं निष्पद्यते।

वेदाः चत्वारः–1. ऋग्वेद–यजुर्वेदः–सामवेदः–अथर्ववेदः। ऋग्वेदे ज्ञानं, यजुर्वेदे, कर्मकाण्डं, सामवेदे उपासना, अथर्ववेदे ज्ञानकर्मोपासनानां त्रयाणामपिविषयानां समन्वयः अस्ति।

ईश्वर ज्ञानत्वात् वेदाः स्वतः प्रमाणभूताः। शब्दप्रमाणे च प्रमाणकुशलैः गृह्यन्ते। अतः वेदेषु प्रतिपादितं यत् ज्ञानं तदपि स्वतः प्रामाण्यम्। मोक्षस्य आत्मनः परमात्मनश्च स्वरूपं पुनर्जन्मादि विषयानां ज्ञानं अस्माभिर्वेदेषु एव गृह्यते। धर्मस्य मूलाधार वेद एव। स एव साधनः तत्त्वतत्त्वानां ज्ञानं यथा मनु–

**वेदोऽखिलो धर्ममूलम्।**[1]

मनुः मानवानां कर्त्तव्यस्य ज्ञानाय वेदान् एव आधारं स्वीकरोति।

**यः कश्चित् कस्यचित् धर्मोमनुना परिकीर्तितः।**
**स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः।।**[2]

यज्ञेषु दृढ़विश्वासः, एकेश्वरवादः, निष्कामकर्मवादः, ईश्वरस्य सर्वव्यापकत्वं, ज्ञानकर्मणोसमन्वयः, भौतिकताप्राप्ति, औसादिन्यं, मानवजीवनस्य प्रधानलक्ष्यं, पुरुषार्थचतुष्टयं मोक्षश्चादीनां ज्ञानं वेदेभ्यः उपनिषद्भ्यः वा अधि गच्छावः।

**वेदस्योत्पत्तिः**–भारतीयानां विश्वासो यत् वेदः शाश्वतीकम पौरुषेयं शास्त्रम्। निरवयवेश्वरात्रेषां प्रादुभार्वात। अग्निवाय्यवादित्याङ्गिरसः तु निमित्तीभूता।

वेदप्रकाशार्थमीश्वरेण कृता इति विज्ञेयम्। वेदेषु शब्दार्थसम्बन्धाः परमेश्वरादेव प्रादुर्भूताः तस्य पूर्णविद्यावत्वात।

**''ऋषिर्दर्शनान् मन्त्रान् ददर्श।''**[3]

**''ऋषयो मन्त्रद्रष्टारः''**[4]

ऋग्वेदादिभाष्यभूमिकायां वेदोत्पत्तिविषये स्वामिदयानन्देन प्रतिपादितम् अस्ति यत्–

**तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।**
**छन्दांसि जज्ञिरे तस्मात यजुस्तस्माद जायत।।**[5]
**यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन्।**
**सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखम्।**
**स्कम्भं तं ब्रूहि कतमः स्विदेव सः।।**[6]

अर्थात् तस्मात्यज्ञात् सच्चिदानन्दादि लक्षणात् पूर्णात् पुरुषात् सर्वहुतात् सर्वपूज्यात् सर्वोपास्यात् सर्वशक्तिमतः परब्रह्मणः ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्च चत्वारो वेदाः तेनैव प्रकाशिता इति।

**''एवं वा अरेऽस्या महतो भूतस्य निःश्वासितमेतद्य–ऋग्वेदो–**
**यजुर्वेदः सामवेदोऽथर्वाङ्गिसः''**[7]

महर्षिदयानन्दः वेदेषु परमेश्वरादाभ्य तृणपर्यन्त–पदार्थेषु विज्ञानं स्वीकरोति। तत्रापि ईश्वरानुभवो मुख्योस्ति।[8]

**चत्वारो वै इमे वेदाः ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेदः।।**[9]

''ऋग्वेदस्य अर्थः–ऋच्यते स्तूयते प्रतिपाद्योऽर्थो यया सा ऋक्''। ऋग्वेदः विज्ञानविशेषस्य विश्वकोशः एव। ऋग्वेदे ज्ञानविज्ञान–अध्यात्म–समाजशास्त्र–अर्थशास्त्र–आयुर्वेद–मनोविज्ञान इत्यादिविषयाः संक्षेपतः वर्णिताः सन्ति। ऋग्वेदे चर्तुर्षु वेदेषु आधारस्तम्भः ग्रन्थः वर्त्तते। ऋग्वेदे 10552 मन्त्राः सन्ति।

ऋग्वेदस्य मुख्यो विषयः विज्ञानमस्ति। तस्य परमेश्वरादाभ्य तृणपर्यन्त पदार्थेषु साक्षाद्बोधान्नयत्वात। तत्रापीश्वरानुभवो मुख्योऽस्ति। एव हि सर्वेषां वेदानां तात्पर्यमस्ति।

ऋग्वेदस्य शाखा – महाभाष्यकारः महर्षिणा पतंजलिना लिखितम् यत्–

**''एकविंशति धा वाहवृच्यम्''**[10]

किन्तु भरण व्यूहस्य रचयिता केवलं पंचशाखाः उद्धृतम्। येषां नामानि इत्थं सन्ति। (1) शाकलशाखा (2) वाष्कलशाखा (3) आश्वलायनशाखा (4) शाङ्खायन शाखा (5) माण्डूकायन शाखा इत्यादयः।

''ऋभिः स्तुवन्ति यजुर्भिः यजन्ति।'' गद्यात्मको यजुः अर्थात् गद्ये रचिताः मन्त्राः यजुष् कथ्यते। यजुर्वेदे मुख्यतया कर्मकाण्डस्य प्रतिपादनं वर्त्तते।

यजुर्वेदे 40 अध्यायाः एवंच 1975 पंच सप्ततिः अधिक नवदशशताः मन्त्राः सन्ति। अस्मिन् वेदे कर्मकाण्डः सर्वक्रिया प्रधानोऽस्ति–स सर्वः क्रियामयोऽस्ति। अयमपि द्विविधः परमार्थ सिद्ध्यर्थम्, लौकिकव्यावहारिकसिद्ध्यर्थंच। न कर्मकाण्डस्येदं तात्पर्यं यत् यज्ञ एव कर्मकाण्डः। अपितु तस्मिन् जीवनस्य सर्वाः क्रिया संविशन्ति। याभ्यः क्रियाभ्यः सर्वेषामुपकारो भवति।

**यजुर्वेदस्य शाखा**–साम्प्रतं यजुर्वेदस्य षट्शाखा उपलभन्ते।

(1) शुक्लयजुर्वेदस्य – वाजसनेयी (माध्यन्दिन) काण्व संहिता,

(2) कृष्ण यजुर्वेदस्य – कठसंहिता, मैत्रायणी संहिता, कपिष्ठलसंहिता, तैत्तिरीयसंहिता इत्यादयः।

'गीतिषु समाख्या'' ज्ञानानि यो वेत्ति स वेद तत्त्वम। यः सामवेदस्य सामानि जानाति, स तत्त्वं विजानाति। 'वेदानां सामवेदोऽसि''[11], इयं उक्तिः अपि सामवेदस्य महत्त्वम् एव प्रकटयति।

सामवेदस्य मुख्यविषयोपासना विद्यते। अस्यां उपासनायां स्तुति प्रार्थनोपासनां त्रयाणां समावेशोऽस्ति। स्तुति-कस्यापि पदार्थस्य गुणदोषयोः वर्णनमस्ति अर्थात् वस्तुनः यथार्थस्वरूपस्याभिव्यक्तिरेव स्तुतिः। प्रार्थनायाः अर्थोऽयं भवति-स्वसामर्थ्यान्तरे ईश्वरसम्बन्धेन यद्विज्ञानं प्राप्यते तस्य पुनः पुनः याचना एव प्रार्थना भवति। उपासनाया अर्थः समीपं भवति। ''यथा परमात्मनः गुणाः कर्माणि, स्वभावाः, पवित्राः भवन्ति तथैवास्माभिः करणीयम्''[12], एवं साहित्यिक-दृष्ट्या एवं च भारतीय संगीत शास्त्रस्य दृष्ट्या च सामवेदस्य महत्वं बहुमूल्यमस्ति।

**सामवेदस्य शाखा**-''सहस्रवर्मा सामवेद'' पत्सजार्लना लिखितम् यत् सामवेदस्य 1000 सहस्रशाखाः आसन्। परं अस्मिन् काले तु सामवेदस्य तिस्राः एव शाखाः उपलब्धाः सन्ति।

(1) कौथुमीय (2) राणायनीयः (3) जैमिनीयः

सामवेदस्य द्वौ विभागौ स्तः (1) पूर्वार्चिकः (2) उत्तरार्चिकः च। सामवेदे पंचसप्तति: अधिक अष्टादशशताः मन्त्राः सन्ति।

**अर्थवाणोऽ धनवन्तः। भवतिश्चरति कर्मा। तत्प्रतिषेधः।।**[13]

आचार्य यास्कानुसारेण 'थर्व'[14], धातु गत्यर्थकः अस्ति। 'थर्वन् शब्दस्यार्थः गतिशीलताऽस्ति, अथर्वन् शब्दस्यार्थः गतिहीनता स्थिरता भवति। अथार्वाक् इत्यनेन अथर्वा शब्दः भवति'' 'अथर्वा वै प्रजापतिः'।।[15]

चरक संहितायां प्रश्नोपस्थितः कस्यात् आयुर्वेदः तस्योत्तेर आचार्य लिखति-''चिकित्सा चायुषो हितोपदिश्यते वेदच्चोपदिश्यायुर्वाच्यम्?''

पुनश्च महर्षिः समादधति- ''तत्र भिषणा पृष्ठेनैवं्चतुर्णामृक्साम-यजुरर्थववेदानां आत्मको अथर्ववेदे भक्तिरादेश्या। वेदोहयाथर्वणः स्वस्त्ययवबलिमंगल होम नियम प्रायश्चित्तोपवासमन्त्रादि परिग्रहाच्चिकित्सां प्राह'' प्रस्तुतसन्दर्भे भगवता सुश्रुतस्य वचनमिदम्

**''इह खल्वायुर्वेदो नाम यदुपाङ्गमथर्ववेदस्य''**[16]

अतः अथर्ववेदस्य मुख्यविषयः ज्ञानम् अस्ति। ज्ञानस्यार्थोऽस्ति ईश्वरात् तृणपर्यन्तैर्पदाथैः सम्यग्प्रकारेण कार्यं कर्त्तव्यम्। ज्ञानमेव विद्या।

एवं वेदो हि नाम अशेषज्ञानविज्ञानराशिः। आचार्य सायणेन प्रतिपादितं यत्-

**''प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एवं विदन्ति वेदेन तस्यात् वेदस्य वेदता।।''**[17]

**उपसंहार-**

वर्णाश्रमः धर्मः, चत्वारो आश्रमः, स्त्रीपुरुषयो समानाधिकारः वैदिकधर्मस्य स्वरूपम् वेदे मोक्षस्यानन्दः, वेदे पुनर्जन्मः, वेदेराष्ट्रभावना, वेदे मांसभक्षणनिषेधः, वेदेद्यूतनिषेधः, कृषिप्रशंसा, एवं विधाः जनकल्याणकारिणोपदेशाः, परामर्शाश्च वेदेषु निर्दिष्टाः सन्ति। तेषामनुष्येन मानवसमाजस्य नितरां कल्याणं भवति।

## सन्दर्भग्रन्थसूच्यः


1. 1989 - पाणिनीयशिक्षा - हरियाणासाहित्यसंस्थानम् गुरुकुल-झज्जरम्
2. 1989 - धातुपाठः - हरियाणासाहित्यसंस्थानम् गुरुकुल-झज्जरम्
3. 1994 - अष्टाध्यायी - महर्षिपाणिनिः , हरियाणासाहित्यसंस्थानम् गुरुकुल-झज्जरम्
4. 2010 - यजुर्वेदः भाष्यकारः - महर्षिः दयानंदः सरस्वती, सार्वदेशिकः आर्यप्रतिनिधिसभा, दिल्ली
5. 2010 - सामवेद,भाष्यकारः - महर्षिः दयानंदः सरस्वती, सार्वदेशिकः आर्यप्रतिनिधिसभा, दिल्ली
6. 2010 - अथर्ववेद, भाष्यकारः - महर्षि दयानंद सरस्वती, सार्वदेशिकः आर्यप्रतिनिधिसभा, दिल्ली
7. 2006 - विशुद्ध मनुस्मृतिः -, डॉ सुरेंद्र कुमार, आर्षसाहित्य प्रचारट्रस्टम्, खारी बावली, दिल्ली
8. 1980 - सुश्रुतसंहिता - संपादकः, हरियाणासाहित्यसंस्थानम् गुरुकुल-झज्जरम्
9. 1999 - शतपथब्राह्मणः - सम्पादकः -स्वामी सत्यप्रकाश सरस्वती, गोविन्दरामः हासानन्दः,दिल्ली-06
10. 2010 - स्वमन्तव्यामन्तव्यप्रकाशः - महर्षिः दयानंदः सरस्वती, सार्वदेशिकः आर्यप्रतिनिधिसभा, दिल्ली
11. 1999 - निरुक्तः - संपादकः, हरियाणासाहित्यसंस्थानम् गुरुकुल-झज्जरम्
12. 1995 - ऋग्वेदादिभाष्यभूमिका - महर्षिः दयानंदः सरस्वती, सार्वदेशिकः आर्यप्रतिनिधिसभा, दिल्ली
13. 1987 - गोपथब्राह्मणः - सम्पादकः -स्वामी सत्यप्रकाश सरस्वती, गोविन्दरामः हासानन्दः, दिल्ली-06
14. 1989 - व्याकरण-महाभाष्यम् -संपादकः, हरियाणासाहित्यसंस्थानम् गुरुकुल-झज्जरम्


## पादटिप्पणी

1. मनु 2/6
2. मनु 2/7
3. निरुक्त
4. निरुक्त
5. यजु. 31/7
6. अथर्व. 10/23/4/7/20
7. शं. का. 14 अ. 5
8. ऋ. भा. भू. पृ. 43
9. गोपथ ब्रा.
10. महा. पस्पशा.
11. गीता. 10. ध् 22
12. स्वमन्तव्यामन्तव्य प्रकाश
13. निरुक्त 11-18
14. धातुपाठ
15. निरुक्त
16. सुश्रुत सूत्रस्वान.1
17. कृष्ण यजुर्वेद तैत्तिरीयसंहिता

*श्री जे, जे, टी, विश्वविद्यालय ( राज. )*

ISSN 2348-7828

# प्रारब्धकर्मविचारः

विपिन कुमारः

संस्कृतवाङ्मये भारतीयदर्शनानां मूलाधारः कर्मसिद्धान्तः एव। अवश्यमनुभोक्तव्यं कृतं कर्म फलमिति स्वीकुर्वन् एव फलाभिव्यक्तेः साध्यत्वं शङ्कया पश्यन्ति विज्ञाः। अत्र विस्तृताध्ययनस्य अपेक्षा भवति। तदध्ययनमपि समीक्षात्मकपेक्षते तत्त्वज्ञानाय। किन्तु समीक्षया कार्यं न भविष्यति यतः फलकथनस्य साध्यासाध्यत्वविमर्शः मुख्यतया अपेक्षितो विद्यते।

''कर्मणा जायते जन्तुः कर्मणैव प्रलीयते।'' ''मन एव मनुष्याणां पूर्वरूपाणि शंसति।'' इति श्रीमद्भागवतपुराणस्य वाक्यद्वयं फलितज्योतिषस्य समग्रप्रयोजनस्य आधारम् अभिव्यञ्जयति। सञ्चितकर्मणः परिपाकम् एव प्रारब्धनाम्ना ज्ञायते। तस्य प्रारब्धस्याभिव्यक्तिः ग्रहस्थित्याः भवति। अर्थात् प्राणिना प्रारब्धवशात्प्राप्यमानं सर्वमपि फलं ग्रहाः सूचयन्ति। किन्तु अनादिकालात् प्रचलितस्य फलितज्योतिषस्य सा वास्तविकी स्थितिः तत्प्रयोजनं वा अधुना नानुभूयते। अधुना कथितं प्रारब्धफलं उपभुज्यमानफलाद्भिन्नं दृश्यते। तेन फलितस्य शास्त्रत्वमपि सर्वैः नाङ्गीक्रियते। समाजेपि बहवः इदं शास्त्रं अन्धविश्वासमिति वदन्ति।

वर्तमानकालिकं फलं यदि प्रारब्धवशादेव उत्पद्यते तर्हि क्रियमाणकर्माणि कर्ता स्वतन्त्रः नास्तिवेति संशयः सर्वत्र दृश्यते। कर्माणि कर्तुः अस्वातन्त्र्ये पुरुषार्थानामपि प्रयोजनं न भवति। यदि प्रयासः पूर्वकर्मफलापेक्षी भवति चेत् न कश्चन प्रयासरतो भविष्यति। यदि पुरुषार्थस्यास्तित्वं प्रतिपादयितुं रक्षयितुं वा कर्मफलनिरासो भवति चेत् वेदाङ्गनाम्ना प्रसिद्धस्य ज्योतिषस्यैव प्रवृत्तिः प्रश्नार्थको भवति। यदि प्रयासः चतुर्वर्गसंरक्षणे भवति चेत् अथवा कर्मफलसंरक्षणे भवति चेत् तादृशप्रयासः पूर्वाग्रहग्रसित एवेति वक्तव्यं प्रारब्धस्यास्तित्वनिरासे प्रमाणाभावात्। भागवतकारस्य गीतायाः वा अन्यवैदिक सम्बन्धिवाङ्मयान्तर्गतविषयाणामपि अस्तित्वं कर्मसिद्धान्तमेवाश्रयति। अतः साक्षात् कर्मफलनिरासो भवितुमर्हति। अतः पुरुषार्थानां कर्मफलस्य च सहैव स्थितिः इष्यते। तयोर्मध्ये कश्चनतादृशसम्बन्धो विद्यते यः अद्यावधि सम्मुखे केनापि नोपस्थापितः। केवलं नोपस्थापितः एवेति वक्तव्यम्, न जानन्ति विज्ञाः इति कथनं सर्वथा निरर्थकं भवति यतः बहुत्र द्वयोरपि सामञ्जस्यं आचार्यैः प्रत्यपादि। अतः वर्तमाने आवश्यकता वर्तते फलकथने युक्तिप्रदर्शनस्य, तर्कप्रदर्शनस्य तद्विरोधिवाक्यानां निर्हेतुकत्वप्रदर्शनपूर्वकं खण्डनस्य च। लोके तु प्रारब्धविषये बह्व्यः भ्रान्तयः परिदृश्यन्ते।

समाजे विश्वासानामन्धविश्वासानां च प्रसारः बहुवेगेन भवति। तर्कयुक्तविश्वासानामादरः तर्करहितानां च निरादरो भवति। किन्तु वर्तमाने फलकथनं निर्हेतुकमिति मत्वा जनाः अन्धविश्वाससंज्ञां प्रददति। वस्तुतः वैदिककालादेव फलकथनस्य विधिः प्रचलति। परञ्च शिक्षाजगति अस्य प्रचारप्रसारयोः अभावकारणात् अद्यावधि उपेक्षित एवायं विषयः। वर्तमानाध्ययनवशात् जनेषु जागरणं चेतना वा भवितुमर्हति तथा च जनाः विश्वासान्धविश्वासयोर्मध्यस्थमन्तरमपि परिचिन्वयिष्यन्ति।

वैदिकवाङ्मय प्रायः सर्वेषां शास्त्राणाम् आधारभूते विषयः विद्यते कर्मसिद्धान्तः। जननमरणयोः मूलकारणं कर्म एव वर्तते। कर्मार्जितं पूर्वभवे सदादि यत्तस्य पक्तिं समभिव्यनक्ति।1 कर्मसिद्धान्त पुराणभारतीयदर्शनज्योतिषादि शास्त्राणाम् आधारतत्त्वं वर्तते।

**उक्तं यथा पुराणे–**

**नानायोनिषु जायन्ते म्रियन्ते च पुनः पुनः।**
**कर्मणा रहितो देह संयोगो न कदाचन॥[2]**

मानवाः स्वकर्मनुसारमेव नानायोनिषु मुहुर्मुहुःऌ जन्मानि लभन्ते। तथा च निष्कर्म रहित यदा वयं भविष्यामः तदा तु अस्माकं जन्मं न भविष्यामः। जनैः सञ्चितकर्माणि फलस्याभावे तदभावरूपफलं केनापि उपायेन प्राप्तुं न शक्नुवन्ति। ''कर्म विना मानवः क्षणमपि न तिष्ठति।''[3] कर्म विना तु जगति किमपि न सम्भावयति कदापि। द्वयोः परस्परं सहायं कुर्वतः।

**अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्।[4]**

कर्मेभ्य मानवान कदापि पलायनं न कर्तव्यं यतोहि कर्मेभ्यः पलायनं करिष्यन्ति तर्हि तु सृष्टिनियमानामनादरं भविष्यति यत् दोषं वर्तते। भारतीयदर्शनानां परम्परा अस्ति यत् कर्मानुसारं मनुष्यः स्व भाग्यस्य निर्माता भवति। मानवस्य स्वकीयकर्माणि एव प्रारब्धस्य भोगस्य कारणानि भवन्ति। यान् सः पूर्वनिर्धारितजन्मसु निर्मितवान्। प्रारब्धकर्मणां फलभोगनिमित्ताय सः मुहुर्मुहः जन्मान् आप्नोति। भारतीयदर्शानानां कर्मसिद्धान्तः पुनर्जन्म चेति भागत्रयम्। अध्यात्मविद्यायाः प्राणाः वर्तन्ते। कर्मणा तु कोऽपि विमुक्तो न भवितुं शक्यते यतोहि जीवने कर्मफलस्य प्रतिफलम् अवश्यमेव मिलति एव। मानवानां सुखदुःखादि प्राप्ति तु तेषां बुद्ध्यानुसारं भवति।[5] मानवाः सुखप्राप्त्यार्थं शान्त्याप्तार्थं च सततं प्रयतन्ते। स हि अवनतिफलकादैहिकादामुश्मिकाद्वा नरकात्।[6] दुःखात् सर्वदैव दूरे स्थातुं काङ्क्षयति। अतैव ते सुखाश्रयस्वर्गं सदैव काङ्क्षयन्ति। सुखशान्त्योः सम्मिश्रणमानन्दः एव जायते। प्रतिव्यक्तेः प्रकृतिः स्वभावश्च भिन्नः वर्तन्ते। स्वास्थ्यम्, सम्पतिः, बलम्, धैर्यम्, शिक्षाभोगादि अभिलाषो मानवस्य स्वभाविकः वर्तन्ते। मानवाः यथावत् एव पशुपक्ष्यादयोऽप्यानन्दस्य काङ्क्षयन्ति। तेषां पार्श्वे अप्यानन्दानुभवसाधनानि इन्द्रियादि भवन्ति। आनन्दं प्राप्तार्थं समुपायिककर्मणां कृते मानवीय गुणानामेवास्त्यावश्यकता वर्तन्ते यथा कः कर्म कदा करणीयम्? कथं करणीयम्? किंर्थं करणीयम्? इति ज्ञानं सम्यक्तया तु मनुष्यैव ज्ञातुं शक्यते। अतः सम्यगसम्यकयोः ज्ञानमेव मनुष्यस्य विशिष्टगुणः ज्ञानात् एव वर्तते। मनुष्य सामाजिक प्राणी अस्ति। कोऽपि व्यवहारिको मनुज– समाजात्पृथकात्मानं स्थापितुं

नेच्छति अपितु समाजेन सह सम्पर्कम् उचितं हितकारकञ्च मनुते।

पुनर्जन्मनि नूतनकर्माणि कृत्वा चेतना सततं विकासमाप्नोति। कर्मणां शुभाशुभप्रतिफलानां क्षयः भोगादेव भवति। मानवाः कर्म करणार्थे तु स्वतन्त्रः परन्तु कर्मणः फलभोगे तु परतन्त्र वर्तन्ते इति गीतायां स्पष्टम क्रियते। इच्छारहित कर्म एव मुक्तेः साधनं भवति। कर्म भोगबन्धनस्य कारणं जायते। ये मानवाः कर्मफलकामनां त्यक्त्वा कर्माणि कुर्वन्ति ते अवश्यमेव पुनर्जन्मं नाप्नोति।

**यथा यथा कर्मगुणं फलार्थी करोत्ययं कर्मफले निविष्टः।**
**तथा तथायं गुणसम्प्रयुक्तः शुभाशुभं कर्मफलं भुनक्ति॥**[7]

कर्मभोगयोः मध्ये अनेकानां जातीनां कोटिश्च कल्पानामपि अन्तरं भवति। परं तदापि यादृशं फलं भवति तादृशमेव फलजाति भवति। कालानामनन्तरेणापि फलतादृशं तावच्चैव प्राप्यते। फलप्राप्ते कापि न्यूनताधिकता न भवति। तदनुरूपमेव वासनायाः प्रकाशः जीवस्य चित्तक्षेत्रे भवति। यस्मिन् जन्मनि कर्मणो भोगो भविष्यति।[8]

यज्जातीयकर्मणो यो विपाको भवति तदनुगुणमेव वासनायाः उदयो भवति। न तु विगुणवासनायाः। एवं भोगस्य सामजस्यं भवति। प्रत्येकस्मिन् मानवः देहे पृथक्पृथक् जीवात्मा वर्तते। यतोहि तेषां पृथक्पृथक् व्यवस्था दृश्यते[9]

मानवस्य कृते स्वकीयकर्मण एव फलं प्राप्यते यतोहि एकस्य आत्मनः कारणं द्वितीयः आत्मा न भवति।[10] कर्मफलाभावः तु मोक्षस्य मूलाधारः भवति गीतायां ''योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।'', ''पद्मपत्र इवाम्भसा'' इत्यादयः उपदेशाः मोक्षसाधने कर्मणः स्थानभिव्यञ्जन्ति। कर्मणः स्वरूपं अधिकांशः बहुत्र वर्णितोऽस्ति। कर्मविषयोपरि प्रतिशास्त्रस्य स्वकीया दृष्टिर्विद्यते। अवश्यं हि कृतं कर्म भोक्तव्यं तद्धिधारितम्।[11] मनुष्यं कृतं कर्मणः फलम् अवश्यमेव भोगः करणीयमेव कर्म कथमपि भवेत् शुभाशुभ वा।

**यत्स्वयं क्रियते कर्म तत्स्वयं भुज्यते पुनः।**[12]

जनाः स्वकृतं कर्मणां फलं भोगयति अन्यजनस्य न। यतोहि मनुष्यान् अन्यस्य कर्मणः कदापि फल न मिलति अपितु स्वस्येव कर्मणः प्रतिफलं मिलति। कृतं कर्मणः फलं समयानुसारं खलु मिलति।

**स्वर्गः शुभफलप्राप्तिर्निरयः पापसंभवः।**
**नैव कश्चित् प्रदाता वै नापि हर्त्ता प्रदर्श्यते॥**[13]

कर्मणः स्वरूपं सदैवावपेक्षते। परन्तु पुराणेषु, भारतीयदर्शनेषु ज्योतिषशास्त्रेषु कर्मणः गहनविचारो प्राप्यते।

**''मन एव मनुष्याणां कारणं बन्धमोक्षयोः।''**
**''जनामि धर्मं न च मे प्रवृत्तिः जानामि अधर्मं न च मे निवृत्ति।**
**केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि॥''**[14]

**''मन एव मनुष्याणां पूर्वरूपाणि शंसति।''**

इत्यादि शास्त्रवचनैः कर्मफलवैचित्र्यस्य अभिव्यक्ति भवति।

शिक्षाक्षेत्रे ज्योतिषाध्ययनस्य तथा प्रचारः नास्ति यथा अस्य शिक्षणस्य समाजे अपेक्षा विद्यते। आजीविकारूपेण, उद्योगरूपेण च बहुधा ज्योतिषमाश्रिताः जनाः परितः तु दृश्यन्ते। अतः वर्तमानाध्ययनवशात् आजीविकायाः उत्पादकरूपेण स्वतन्त्रतया धनार्जकरूपेण च फलकथनविधिं प्रदर्शयितुं अवसरो मिलिष्यति।

सृष्ट्यारम्भात् प्रलयपर्यन्तं कालस्य गतिः निश्चिता भवति। तस्य कालस्य विभाजनमपि शास्त्रे बहुधा क्रियते। बहुधा कृतेषु विभाजनेषु कल्पमहायुगयुगादीनामपि अन्यतमं विभाजनं विद्यते। एकस्मिन् महायुगे कृतत्रेताद्वापरकलिसंज्ञकानां युगानां व्यवस्था धर्मपादव्यवस्थया कृता विद्यते। अर्थात् कृतादारभ्य धर्मस्य लोके अपचयो भवति। जनेष्वपि धर्मनिष्ठायामपयचो भवतीति भावः। तस्य अपयचस्य, विभाजनस्य, सृष्टेः प्रलयस्य वा मुख्यं कारणं कर्म एव। जनाः व्यक्तिगतरूपेण स्वकर्मणः फलमनुभवन् धर्माधर्मयोः प्राबल्यवशात् सामूहिकं सुखं दुखं च अनुभवन्ति। अतः फलकथनस्य विस्तृतविचारः नूनमेव सृष्टेः उत्पत्तिकारणं, लोके दुःखादुःखानां च कारणं स्पष्टतया विमृष्टुं शक्तो भविष्यति।

## पादटिप्पणी

1. बृहज्जातकम् ,अध्याय -1, श्लोक -3
2. श्रीदेवी भागवत, स्कन्ध-4,अध्याय 2, श्लोक-5
3. श्रीमद्भगवद् गीता अध्याय 3, श्लोक-5
4. ब्र.वै.पु. कृष्णजन्मखण्ड: 85
5. सुखस्य दुःखस्य न कोऽपि दाता परो ददाति कुबुद्धिरेकषा।
   अहं करोमीति वृथाभिमानः स्वकर्मसुत्रात् ग्रथितो हि लोकः॥ कर्म का सिद्धान्त
6. नरकं न्यरकं नीचैर्गमनम् । नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा। (निरूक्त, 1.12)
7. म.भा., शा.प., अध्याय-201, श्लोक-23
8. योग दर्शन 4.8
9. सं.द. 6.45
10. वै.द. 6.1.5
11. भविष्यपुराण अध्याय -6, श्लोक-4
12. भविष्यपुराण अध्याय -6, श्लोक-75
13. वराहपुराण, अध्याय-208, श्लोक-23

*शोधच्छात्रः, ज्योतिषविभागः*
*केन्द्रीय संस्कृत विश्वविद्यालय वेदव्यास परिसरः*
*बलाहर ( कांगडा )*

ISSN 2348-7828

# प्रवासीकाव्यस्य काव्यतत्त्वसमीक्षा

डॉ. के. वरलक्ष्मी

**कीलकपदानि :** खण्डकाव्यम् दि ट्रावेलर दि डेसेर्टड् विलेज् थामस् ग्रे एलिजी गोल्ड्स्मत् वर्ड्स्वर्त् शेक्स्पिय निजामसंस्थानम्

**शोधपत्रसारः**

सागरायितसंस्कृतसाहित्यम् अन्यभाषाभिः अनूद्यते सततमिति सर्वविदितविषय एव। परम् अन्यभाषागतसाहित्यं संस्कृतेन अनूद्यते अल्पश एव। तत्र हेतुरस्ति संस्कृतज्ञानाम् अस्माकम् उपेक्षाभाव एव। संस्कृतेतरभाषागतसाहित्यज्ञानाभावादिकः हेतुरपि स्यात्। वस्तुतः अनुवादप्रक्रियया नाना भाषाः नाना देशाः नाना संस्कृतयः पारस्परिकं विप्रकृष्टत्वं विहाय निकटमानीयन्ते इति अभिप्रैति विद्वत्तल्लजः प्राचार्यः राधावल्लभत्रिपाठिवर्याः। एतेनैव अभिप्रायेण ब्रह्मश्री गुण्डेरावहकरिवर्यः अनुवादप्रक्रियया अन्यभाषागतसाहित्यं संस्कृतेन अनूदितवान्। तस्य अनुवादरचनानां परिचयः विशिष्य प्रवासीति काव्यस्य तत्त्वसमीक्षा च शोधपत्रेऽस्मिन् प्रस्तूयते।

**परिचयः**-'लोकोत्तरवर्णनानिपुणकविकर्म काव्यमि'[1]ति काव्यप्रकाशे उवाच मम्मटः। तच्च काव्यं दृश्यं श्रव्यञ्चेति द्वेधा भवति। श्रव्यं पुनः महाकाव्यं लघुकाव्यञ्चेति विभक्तं भवति। खण्डकाव्यं गीतिकाव्यं स्तोत्रकाव्यञ्चेति नैकधा विभक्तं भवति लघुकाव्यम्।

'खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च'।[2] इति खण्डकाव्यलक्षणम् उल्लिखितम्। कालिदासमेघदूतं खण्डकाव्यपरम्परायां जगत्प्रसिद्धमस्ति। मेघदूतेन प्रेरिताः नैके कवयः प्रचीनकालादारभ्य अद्यावधि नैकानि खण्डकाव्यानि व्यरचन्।

कालिदासरचनाभिः प्रेरितः ब्रह्मश्री गुण्डेरावहकरिवर्यः प्रवासीति अनुवादरूपं खण्डकाव्यं व्यरचयत्। प्रवासीति खण्डकाव्यं ''गोल्ड्स्मत्'' नामकस्य आङ्गलकवेः ''दि ट्रावेलर'' इत्यभिधस्य आङ्गलपद्यकाव्यस्य पद्यानुवादरूपम्। कवेः जीवनं कृतीः प्रवासीति काव्यस्य तत्त्वानि च नातिविस्तरेण शोधपत्रेऽस्मिन् प्रस्तूयन्ते।

1. कविः-प्रवासीति काव्यस्य रचयिता ब्रह्मश्री गुण्डेरावहकरिवर्यः निजामसंस्थाने लब्धजनिः। तस्य जीवनकालः 1887 क्रैस्तवर्षतः1979 क्रैस्तवर्षपर्यन्तम् इति ज्ञायते।

1.1 विद्याभ्यासः-निजामसंस्थानशासनानुगुणं गुण्डेरावस्य विद्याभ्यासः पर्शियाभाषया अरबिक्भाषया च सम्पन्नः। उन्नतविद्याभ्यासस्तु आङ्गलभाषामाध्यमेन अभवत्। उर्दूकन्नडतेलुगुमराठीषु भाषास्वपि निपुणः।

1.2 वृत्तिजीवनविशेषाः-वृत्तिजीवनस्य आरम्भकाले न्यायालये लिपिकः आसीत् सः। तदनु अनुवादकरूपेण स्पेषल् क्रिमिनल् न्यायालये कार्यं कुर्वाणः निजामराज्ये सर्वत्र यात्राम् अकरोत्। तदनु मुन्सिफ् पदं जनपदन्यायाधीशपदं डिप्यूटीकलेक्टेरपदं सेषन्सज्ड्ज्पदञ्च अलञ्चकार।

वृत्तिजीवनकाले एव संस्कृतसाहित्याभिमानी गुण्डेरावहकरिवर्यः संस्कृतसाहित्याध्ययनेन कालं यापयति स्म। संस्कृतेतरभाषागतसाहित्यं संस्कृतेन अनूदितवान्। तस्य संस्कृतरचनाः जगति प्रसिद्धिं गताः।

1.3 रचनाः-कविरयं नैकाः कृतीः रचयामास। काश्चन प्रमुखाः रचनाः अत्र उल्लिख्यन्ते।

1. 'गोल्ड्स्मत्' इत्याङ्गलकवेः 'दि ट्रावेलर 'दि डेसेर्टड् विलेज्' च इत्येते द्वये काव्ये संस्कृतेन अनुवादः कृतः।

2. 'थामस् ग्रे' इत्यस्य आङ्गलकवेः 'एलिजी' इत्याख्यम् आङ्गलकाव्यमपि संस्कृतेन अनूदितम्।

3. 'षेक्स्पिय' इत्याङ्गलकवेः 'दि मिड्सम्म'नैट्स् ड्रीम्' 'हाम्लेट्' इत्यस्य नाटकस्य कांश्चन अङ्कांश्च संस्कृतेन अनूदितवान्।

4. 'वर्ड्स्वर्त्' इत्याख्यातस्य आङ्गलकवेः 'यान् इण्टिमेशन् टु इम्मोर्टालिटी' इतीयं रचना संस्कृतेन अनूदिता।

5. पवित्रखुरानग्रन्थस्य पञ्च अध्यायाः संस्कृतेन अनूदिताः।

6. 'मस्नवीषरीफ्' इत्यस्य ग्रन्थस्य केचन भागाः संस्कृतेन अनूदिताः।

7. ईशकेनकठोपनिषदः कारिकारूपेण संस्कृतेन विरचिताः।

8. प्रत्ययकोशः विरचितः यश्च उस्मानियाविश्वविद्यालयस्य संस्कृतविभागेन मुद्रितः।

1.4 बिरुदाः सम्मानानि च- गुण्डेरावमहोदयस्य अनुवादरचनाः विदुषां प्रशंसापात्रतां गताः। नैकाः संस्थाः तस्य पण्डिततल्लजस्य बिरुदप्रदानेन सम्मानं चक्रुः।

क वचास्पतिबिरुदः नवद्वीपअकाडमी इति संस्थया प्रदत्तः।

क विद्याभूषणः अयोध्याविद्वद्भिः बेलगाँवप्रान्तवासिभिः विद्वद्भिश्च प्रदत्तः।

* प्रवासीति संस्कृतानुवादरचनां पुरस्कृत्य मैसूरुसर्वकारेण स्वर्णपतकं प्रदत्तम्।
* विद्याभास्कर इति बिरुदः स्वामीशिवानन्देन प्रदत्तः।
* राज्यरचयितुलसङ्घेन सम्मानितः।
* तिरुमलतिरुपतिदेवस्थानेन सम्मानितः।
* साहित्यं प्रति कवेः योगदानं पुरस्कृत्य 1966 तमे क्रैस्तवर्षे आन्ध्रप्रदेशसर्वकारेण सम्मानितः।
* द्विवारम् आन्ध्रप्रदेशस्य साहित्यअकाडमीसदस्यत्वेन चितः।
* स्वर्णपतकेन पुरस्कृत्य साहित्यअकाडमीसंस्थायाः जीवनकालसदस्यत्वेन सम्मानितः।
* नैषधीयचरितमधिकृत्य लिखितं कवेः शोधपत्रं पुरस्कृत्य श्रीकुप्पुस्वामिशास्त्रिशोधसंस्था सम्मानम् चकार।
* राष्टपतिपुरस्कारेणापि सम्मानितः।

2. प्रवासी-पद्यरचनेयं 'गोल्ड्स्मत्' नामकस्य आङ्गलकवेः अष्टादशशतके विरचितायाः 'The Traveler' इति आङ्गलभाषागतरचनायाः आधारेण संस्कतेन अनूदिताऽस्ति। विभिन्नदेशगतसुखदुःखयोः हेतून् वर्णयतीदं काव्यम्।

इदम् आङ्गलकाव्यम् अतीव सहजं सामान्यजनजीवन-प्रतिबिम्बकम् इति हेतोः काव्यरसिकहृदयावर्जकम् अभूत्। तादृशं विशिष्टं काव्यम् आश्रित्य कविकर्मनिपुणः ब्रह्मश्री गुण्डेरावहर्करेिवर्यः प्रवासीनाम्ना संस्कृतेन अनूदितुं सफलः अभूत्।

2.1 काव्यानुवादप्रक्रियायाः प्रयोजनम्- अनुवादकाव्यपरिचय-वाक्येषु स्वयं कविः अनुवादकः गुण्डेरावः स्वकाव्यानुवादप्रक्रियायाः प्रयोजनम् उल्लिखति।

''पाश्चात्यैर्गुणग्रहणनिपुणैर्गीर्वाणसारस्वतभाषान्तरीकरणेन स्वकीयानन्यसाधारणरसिकत्वं यथा प्रकटीकृतं तथाद्याप्यस्माभिर्देशा-न्तरकविसमयः तुलनात्मकदृष्ट्या विमर्शितः। एतन्न्यूनतापनुत्तय एव एषोऽल्पीयान् प्रयत्नः।

आङ्गलकविसमयपरिज्ञानायोभयदेशीयसाहित्यशारदासहचर्योर्निबिड-परिचयाय च तद्देशीयसुप्रसिद्धगोल्डस्मिथाख्य-महाकवेष्टाव्हेलराभिध-लोकप्रियखण्डकाव्यस्यानुपद्यं संस्कृतभाषया छन्दोमय एवानुवाद आरभ्यते''।[3]

* संस्कृतगिरः अभिव्यक्तिसामर्थ्यप्रदर्शनाय क्रियते अनुवादरचनेयम्।

* गीर्वाणभाषा मृतेति या अपप्रथा लोके वरीवर्ति तस्या निराकरणाय आधुनिकयुगेऽस्मिन् संस्कृतभाषोपयोगितायाः निरूपणाय च अनुवादप्रयत्नोऽयं क्रियते।

2.2 अनुवादशैली-शाब्दिकोऽनुवादः भावानुवादः व्याख्यानात्म-कोऽनुवादः सारात्मकोऽनुवादः पुनःसृष्टिपरकोऽनुवादः स्वाभिनिवेश-पूर्णोऽनुवादः नवसर्जनमूलकानुवादः अनुवादस्यानु-वादश्चेति अष्टधा अनुवादः क्रियत इति राधावल्लभत्रिपाठिवर्याणां मतम्।

अनुवादकः कविः गण्डेरावः काव्यगतभावम् अनुसृत्य वर्णनानुगुणं सुन्दरपदगुम्फनेन काव्यम् अनूदितवान् । 'The Traveler' इति आङ्गलकाव्यशीर्षकस्य 'प्रवासी'ति समुचितमनुवादं चकार कविः।

भावानुवादशैल्याः निदर्शनाय अत्र दिङ्मात्रमुदाह्रियेते श्लोकौ।

Lakes, forests, cities, plains extending wide
The pomp of kings, the shepherd's humbler pride

**देशाः सरांसि च वनानि च पट्टणानि**
**दीर्घायता बहुमनोहरभूमिभागाः।**
**गर्वोद्धताश्च नृपमन्दिरचन्द्रशालाः**
**सौधायिताल्पकुटयश्च कृषीवलानाम्।।**

Though poor the peasant's hut, his feasts tho' small,
He sees his little lot the lot of all;

यद्यप्यसौ शिथिलपर्णकुटीनिवासी
नित्यं कदन्नमपि नो लभते यथेष्टम्।
**सर्वानपि स्वसदृशान्स्वजनान् विलोक्य**
**स्वल्पेन तुष्यति सदैव कृषीवलोऽत्र।।**[4]

कवेः उभयभाषापाण्डित्यं प्रमाणीकुरुतः द्वावपि एतौ श्लोकौ। उभयोः भाषयोः समाना गतिरस्तीति कवेः इति स्पष्टीभवति।

राधावल्लभत्रिपाठिवर्येण रचिते अनुवादशास्त्रे अनुवादस्य महत्त्वं निरूपितमित्थम्-

**समृद्धिश्च द्वितीयाया भाषाया अपि जायते।**
**शब्दानां नूतनानां च प्रौढोक्तीनां तथैव च।।**
**भावानामपि संसारो नवीनश्चावतार्यते।**
**संवेदना विभिन्नाश्च जायन्ते गोचरीकृताः।।**[5]

अनुवादशास्त्रम्

प्रवासी इति अनुवादरचनया एव संस्कृतज्ञाः "lver Gold-smith"

इत्याख्यस्य विश्वविख्यातस्य कवेः 'The Traveler' इत्याख्यस्य काव्यस्य च महत्वं ज्ञातवन्तः। संस्कृतभाषायाः अभिव्यक्तिसामर्थ्यम् अपि सुनिरूपितं वर्त्तते।

2.3 रचनाशैली-'liver Gold Smith' इत्याख्यस्य विश्वविख्यातस्य आङ्गलकवेः 'The Traveller' इत्याख्यं काव्यं 'Augustan style' इत्यभिधया शैल्या विरचितम्। राजकीयसामाजिकविषयाः व्यङ्ग्यात्मकता अन्यापदेशः इत्यादयः अंशाः यत्र दरीदृश्यन्ते सा 'Augustan style' इत्युदीर्यते। 'The Traveller' इत्यस्मिन् काव्ये कविः प्रवासी सन् नैकदेशान् पर्यटित्वा तत्तद्देशगतस्थितिगतीः वर्णयति।

समग्रगुणा वैदर्भी।[6] इति वामनेन प्रोक्तम्। समग्रैः ओजः प्रसादप्रमुखैः गुणैरुपेता वैदर्भी रीतिः प्रवासीति काव्ये दरीदृश्यते।

2.4 छन्दोनिरूपणम् - लोकः विद्या प्रकीर्णञ्चेति त्रीणि काव्याङ्गानि इति वामनमतम्।

लोको विद्या प्रकीर्णञ्च काव्याङ्गानि।[7]

अत्र विद्या नाम व्याकरणं स्मृतिग्रन्थाः अभिधानकोशः छन्दोविचितीत्यादयः।

शब्दस्मृत्यभिधानकोश छन्दोविचितिकलाकामशास्त्रदण्डनीतिपूर्वा विद्याः।[8]

एतासु विद्यासु छन्दःशास्त्रं पद्यकाव्यरचनायां प्रामुख्यं भजति। वृत्तसंशयनिवारणं छन्दःशास्त्रज्ञानेन सम्भवति।

छन्दोविचितेर्वृत्तसंशयच्छेदः।[9]

'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते'।[10] इति आचारम् अनुसृत्य कविः प्रवासीति काव्यं मङ्गलाचरणेन आरभत।

आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्।।[11] इति त्रिधा मङ्गलश्लोकः कविभिः प्रस्तूयते। गुण्डेरावः काव्यप्रतिपाद्यर्थसूचकं मङ्गलं काव्यारम्भे प्रस्तौति।

**श्रीवेङ्कटो विजयते स जगत्कुटुम्बी**
**यल्लीलयानुभवति स्वकुटुम्बसौख्यम्।**

**बाह्यप्रपञ्चबहुदुःखपरम्पराभि**
**रार्तोऽपि सन्ततमनिर्वचनीयरम्यम्।।**[12]

बाह्यप्रपञ्चबहुदुःखपरम्पराभिरार्तः......इति पदप्रयोगेन कविः सङ्केतयति यत् काव्येऽस्मिन् लोकस्य दुःखपरम्परा प्रस्तूयते।

प्रवासी इति पद्यकाव्यस्य आधारभूतम् आङ्गलकाव्यं 'iambic pentameter' नामकेन वृत्तेन विरचितैः 'Heroic couplet' नामकैः पादयुगलैरुपेतं भवति। अन्त्यानुप्राससदृशमिति वक्तुं शक्यते। प्रवासीति काव्ये एकविंशत्यधिकद्विशतं संङ्ख्याकाः श्लोकाः सन्ति। एतान् सर्वान् श्लोकान् छन्दःशास्त्रनिपुणः पण्डिततल्लजः गुण्डेरावहर्कारेवर्यः वसन्ततिलकम् इति समुचितवृत्तप्रयोगेन उपनिबद्धवाम्।

वृत्तरत्नाकरः इति ग्रन्थे वसन्ततिलकवृत्तस्य लक्षणं इत्थं प्रस्तौति केदारभट्टः।

उक्ता वसन्ततिलका तभजाजगौ गः।[13]

कविः रसानुकूलं वर्णनानुगुणं वृत्तं प्रयुज्य काव्यम् उपनिबध्नातु इति क्षेमेन्द्रः सुवृत्ततिलकाख्ये ग्रन्थे प्रस्तौति।

**काव्ये रसानुसारेण वर्णनानुगुणेन च।**
**कुर्वीत सर्ववृत्तानां विनियोगं विभागवित्।।**[14]

काव्येऽस्मिन् कविः वसन्ततिलकमिति एकमेव वृत्तं प्रयुङ्क्ते। कवेः एकवृत्तादरः लक्ष्यते। अमुं विषयं क्षेमेन्द्रोऽपि समर्थयति।

**एकवृत्तादरः प्रायः पूर्वेषामपि दृश्यते।**
**तत्रैवातिचमत्कारादन्यत्रारब्धपूरणात्।।**[15]

क्षेमेन्द्रः वसन्ततिलकवृत्तस्य वैशिष्ट्यमपि प्रतिपादयति।

**वसन्ततिलकं भाति सङ्करे वीररौद्रयोः।**
**वसन्ततिलकारूढा वाग्वल्ली गाढसङ्गिनी।**
**रत्नाकरस्योत्कलिका चकास्त्याननकानने।।**[16]

नैकेषां महाकवीनाम् आदरपात्रतां गतेन वसन्ततिलकवृत्तेन ब्रह्मश्री वाचस्पतिः गुण्डेरावहकरिवर्यः काव्यम् अग्रथयत्। वेदान्तविचारान् वर्णयितुम् कविः तदनुकूलं वसन्ततिलकं वृत्तं प्रयुज्य छन्दःशास्त्र-पाण्डित्यं न्यरूपयत्।

सङ्ख्यादृष्ट्या यद्यपि लघुखण्डकाव्यत्वेन प्रतीयते तथापि अतीव क्लिष्टस्य काव्येतिवृत्तस्य अनुवाददृष्ट्या महत्त्वं भजते। सहृदयहृदयः नूनम् इदं काव्यम् आस्वादयति यतः गुण्डेरावहकरिवर्यः स्वप्रतिभया अनुवादकार्यं सकुशलम् अकरोत्। काव्यगतभावम् अनुसृत्य रसानुकूलेन सुन्दरपदगम्फनेन काव्यं ग्रथितवान् कविः।

2.5 अलङ्कारनिरूपणम्-अलङ्कारप्रयोगः अतिविरलः दृश्यते अस्मिन् काव्ये।

**गर्वोद्धताश्च नृपमन्दिरचन्द्रशालाः**
**सौधायिताल्पकुटयश्च कृषीवलानाम्।।**17 19।।

श्लोकेऽस्मिन्कृषीवलानाम् अल्पकुटयः सौधाः इव आचरन्तीति अर्थे सनाद्यन्तं प्रयोगम् अकोरत् कविः। सौधायिताल्पकुटयः इत्यत्र धर्मवाचकलोपः। धर्मवाचकलुप्तोपमालङ्कारः अत्र प्रयुक्तः इति वक्तुं शक्नुमः।

श्लेषालङ्कारप्रयोगं कृत्वा कविः स्विड्सरह्लण्डदेशं नायिकाञ्च वर्णयति।

**हेतोरतेरुपगतेऽपि वसन्त कान्ते**
**नालङ्करोति रचनांशुकमाधवीभिः।**
**एषा यतोऽमितजडप्रकृतिर्विमूढा**
**सा नग्निका मम विभात्यथ निष्कला वा।।**[18]

नायिकापक्षे - रचना-प्रसाधनम्, अंशुकम् - दुकूलम्, माधवी-पुष्पाणि,

जडप्रकृतिः-मूढा, नग्निका-अनागतिका, निष्कला-निर्गतार्तका,

स्विड्सरह्लण्डदेशपक्षे-रचना-शोभा, अंशुकम्-पत्रम्, माधवी-लता, जड़प्रकृतिः-शीतप्रकृतिः, नग्निका-नग्ना वृक्षहीना, निष्कला - कलाहीना

2.6 रसनिरूपणम्-नाट्यशास्त्रे भरतः अष्टौ रसान् प्रोवाच। अभिनवभारती इति नाट्यशास्त्रस्य व्याख्याने अभिनवगुप्तः शान्तोऽपि रसः इति उल्लिखितवान्। साहित्यशास्त्रे आनन्दवर्धनोऽपि शान्तस्य रसत्वम् उररीकृतवान्।

**शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।**
**बीभत्साद्भुतसंज्ञा चेत्यष्टौ नाट्ये रसाः स्मृताः।।**[19]
**भरतेन अष्टानां रसानाम् अष्ट स्थायिभावाः अपि प्रोक्ताः।**
**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।**
**जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्त्तिताः।।**[20]

'अथ शान्तो नाम शमस्थायिभावात्मकः मोक्षप्रवर्त्तकः-स तु तत्त्वज्ञान-वैराग्याशयशुद्ध्यादिभिः विभावैः समुत्पद्यते'।[21]

प्रवासीति काव्यं शान्तरसभरितमस्ति यतः 'The Traveller' इति आङ्गलकाव्यम् आध्यात्मिकविचारधारां प्रस्तौतीति साहित्यविमर्शका अभिप्रयन्ति।

Calm is my soul nor apt to rise in arms
Except when fast approaching danger warns:[22]

**शान्तं सदैव सदयं हृदयं मदीयमुत्पद्यते मनसि कोऽपि न मे विकारः।**
**सद्योमहाभयमुदेति यदातिघोरं सङ्क्षोभिता मम मनस्तु तदैव भूयः।।**[23]

शान्तरसनिष्पत्तये अपेक्षिताः विभावानुभावव्यभिचारभावाः अस्मिन् काव्ये वरीवर्त्तन्ते।

शान्तरसभरितं काव्यमिदं सहृदयहृदयस्य सद्यःपरनिर्वृतये कल्पते इत्युक्तौ नास्त्यतिशयोक्तिः।

2.7 कालिदासकविताप्रभावः-गुण्डेरावेण कृतं रमणीयं प्रकृतिवर्णनं कालिदासप्रकृतिवर्णनेन साम्यं भजति। ललितललितपदैः श्लोकं ग्रथयति कविः।

**अम्बोधिवीचिकणमौक्तिकराशिगर्भः**
**शीतो मनोहर सुगन्धवहस्तनोति।**
**रम्ये स्थले वितुषयन्निव धान्यमस्मिन्**
**सर्वत्र सौरभविसारि परागलक्ष्मीम्।।**[24]

While sea-born gales their gelid wings expand
To winnow fragrance round the smiling land.[25]

अस्मिन् काव्ये ये पदबन्धाः मनोहराः विद्वत्मानसमावर्जयन्ति ते कालिदासकविताकोमलपदावलिं नूनं स्मारयन्ति सहृदयहृदयान्।

उपसंहारः–'प्रयोजनम् अनुद्दिश्य मन्दोऽपि न प्रवर्तते' इति अस्ति कश्चन प्रायोवादः। अनुवादेन गृहीतृभाषायाः साहित्यस्य शब्दराशिः ज्ञानराशिश्च वर्धेतेतराम्। अनुवादरचना मूलरचनायाः मूल्याङ्कनाय मानदण्डायते। परभाषावाङ्मयस्य ज्ञानं सिद्ध्यति। प्राचार्याणां राधावल्लभत्रिपाठिनाम् अनुवादशास्त्रे अनुवादरचनाप्रयोजनानि सुष्ठु उल्लिखितानि। यथा–

**विश्वसंस्कृतिनिर्माणं संवादश्च परस्परम्।**
**नानाभाषासु काव्येषु समाजेषु जनेष्वपि।।**
**नानाराष्ट्रसमाजानां ज्ञानं सौहार्दभावना।**
**व्यक्तेर्मुक्तिः समाजस्य मुक्तिर्विश्वस्य चापि वै।।**
**विलुप्तानां क्वचिन्मूलग्रन्थानां कालभेदतः।**
**तथा च पुनरुद्धारो विशेषज्ञैः प्रयत्नतः।।**
**अनुवादेन साध्येत सर्वमेतत् प्रयोजनम्।**
**यज्ञेन तपसा कर्म चानुवादस्य स्यात् समम्।।**[26]

राधावल्लभत्रिपाठिवर्यैः प्रोक्तानि अनुवादरचनाप्रयोजनानि प्रवासीति काव्यानुवादेन ब्रह्मश्री गुण्डेरावहर्करिवर्येण सम्प्राप्तानि इति निश्चप्रचं वक्तुं शक्यते।

## सन्दर्भाः

1. काव्यप्रकाशः 1.2
2. साहित्यदर्पणम् 6.321
3. प्रवासी उपोद्घातः
4. तत्रैव 19, 94
5. अनुवादशास्त्रम् अ. 10
6. काव्यालङ्कारसूत्राणि 1.11
7. काव्यालङ्कारसूत्राणि 1.3.1
8. काव्यालङ्कारसूत्राणि 1.3.3
9. काव्यालङ्कारसूत्राणि 1.3.6
10. महाभाष्यम्1.3.1
11. काव्यादर्शः 1.14
12. तत्रैव 1
13. वृत्तरत्नाकरः 3.79.
14. सुवृत्ततिलकम् 3.19
15. सुवृत्ततिलकम् 3.28
16. सुवृत्ततिलकम् 3.32
17. तत्रैव 19
18. तत्रैव 88
19. नाट्यशास्त्रम् 6.15
20. नाट्यशास्त्रम् 6. 17
21. नाट्यशास्त्रम् पृ.सं.235
22. दि ट्रावेल' 192
23. तत्रैव 192
24. तत्रैव 63
25. दि ट्रावेल' 63
26. अनुवादशास्त्रम् 6

## आकरग्रन्थाः


1. ब्रह्मश्री वाचस्पतिः गुण्डेरावहर्करि,प्रवासीकाव्यम्, संस्कृत अकाडमी, हैदराबाद 2009
2. प्रा. राधावल्लभः त्रिपाठी, अनुवादशास्त्रम्, कविकुलगुरुकालिदाससंस्कृत–विश्वविद्यालयः महाराष्ट्रम् 2020
3. पद्मश्रीः पुल्लेलश्रीरामचन्द्रुडु, काव्यालङ्कारसूत्रवृत्तिः, तेलुगु अनुवादसहितम्, सुरभारतीसमितिः, 1979
4. पद्मश्रीः पुल्लेलश्रीरामचन्द्रुडु, नाट्यशास्त्रम्,बालानन्दिनीति आन्ध्रभाषाव्याख्यासहितम्, अमरावतीपब्लिकेशन्स्2014
5. डां. श्रीनिवासवरखेडी, सम्पादकः, क्षेमेन्द्रलघुकाव्यसङ्ग्रहः, संस्कृत अकाडमी, हैदराबाद, 2009
6. काव्यप्रकाशः, मम्मटः, भारतीयविद्याप्रकाशन, दिल्ली
7. मेघदूतम्, कालिदासः, डि.वि.साधले एण्ड को, बुक् सेल्लर्स् एण्ड् पब्लिषर्स्, मुम्बई
8. साहित्यदर्पणः, विश्वनाथः, क्षेमराजश्रीकृष्णश्रेष्ठी, मुम्बई, 1973



***डां. के. वरलक्ष्मीः***
***उपनिदेशिका, संस्कृत अकाडमी***
***उस्मानियाविश्वविद्यालयः हैदराबाद तेलङ्गाणा***

ISSN 2348-7828

# वत्सापाकरणविचारपरिशीलनम्

डॉ. आर. सुब्रह्मण्य भिडे

विद्वद्विदितमेव हि यत् कर्म-ब्रह्मणी मीमांस्यमाने शास्त्रे क्रमात् पूर्वोत्तरमीमांसे इति प्रसिद्धेति। तत्र तावत् भगवता जैमिनिना प्रणीते पूर्वमीमांसाशास्त्रे वेदबोधितकर्मसमूहस्य प्रसङ्गादागतानामितरेषां विषयाणाञ्च 'अथाऽतो धर्मजिज्ञासा' (पू.मी.1.1.1) इत्यारभ्य धर्मजिज्ञासेति नाम्ना विचार: कृत:, निर्णयो दत्तश्च।

अस्यां पूर्वमीमांसाशास्त्रपरम्परायां आयाता: जैमिन्युत्तरकालिका: विद्वांस: शास्त्रविचारान् पौन:पुन्यविचारविमर्शनेन द्रढयितुं लोकान् अनुजिघृक्षव: सन्त: भाष्य-व्याख्यान-विवरण-टीका-कारिकामाध्यमेन नैकान् ग्रन्थान् प्राणैषु:।

तत्र च वेदभाष्यनिर्मातार: सायणाचार्या: पूर्वमीमांसाशास्त्रनि-र्णीतांशान् स्वकीये जैमिनीयन्यायमालाग्रन्थे सरलया सुलभया च शैल्या श्लोकरूपेण व्यररचन्। तत्र चतुर्थाध्याये वत्सापाकरणान्तर्गत: शाखाहरणविचार:, तयैव शाखया उपवेषकरणविषयश्च चिन्तित:।

वत्सापाकरणं नाम वत्सानाम् अपाकरणं, पृथक्करणमिति यावत्। संनयत: यजमानस्य दर्शयागार्थं सायंदोह: (दध्यर्थं) प्रातर्दोह: (क्षीरं) च आवश्यकौ। तत्सिद्ध्यर्थं गवां चारणसमये तद्वत्सा: पलाशशाखया अपाक्रियन्ते।

वत्सापाकरणमन्त्रा: कृष्णयजुर्वेदीय-तैत्तिरीयसंहितायाम् आरम्भे एव श्रूयते - 'इषे त्वोर्जे त्वे'ति। तत्र वत्सापाकरणमन्त्राणामेव कथं प्राथम्यमित्यत्र इदमुच्यते यत् - दर्शयागे त्रीणि प्रधानहवींषि, पूर्णमासे च त्रीणि। आग्नेयोऽष्टाकपाल: उभयत्र समानाम्। अन्यद्द्वयं दर्शे ऐन्द्रं दधि पयश्च। पूर्णमासे तु सामान्याद्भिन्नं द्वयम् आज्येन प्राजापत्य: उपांशुयाग:, अग्नीषोमीय: एकादशकपालश्च।

तत्र प्रतिपदि यागदिने दधि होतुं दधि सम्पादनीयम्। तदर्थम् अमावास्यायां रात्रौ गावो दोग्धव्या:। तद्दोहार्थं प्रात:काले लौकिकदोहानन्तरं स्वमातृभि: सह चरन्तो वत्सा: मातृभ्य: अपाकर्तव्या भवन्ति। अतोऽस्य कर्मण: वत्सापाकरणमिति कर्मनाम, प्राथम्यञ्च।

विषयेऽस्मिन् श्रुतिमूलानि कर्मविशदक-श्रौतसूत्राणि एवं विशदयन्ति -

1. **संनयत: पलाशशाखां शमीशाखां वाऽऽहरति बहुपर्णां बहुशाखाम् अप्रतिशुष्काग्रामसुषिराम्।**
2. **यं कामयेताऽपशु: स्यादित्यपर्णां तस्मै शुष्काग्रामा हरेदपशुरेव भवति। यं कामयेत पशुमान्त्स्यादिति बहुपर्णां तस्मै शुष्काग्रामाहरेत्पशुमन्तमेवैनं करोतीति विज्ञायते।**
3. **सा या प्राच्युदीची प्रागुदीची वा भवतीषे त्वोर्जे त्वेति तामाच्छिनत्ति। अपि वेषे त्वेत्याच्छिनत्ति, ऊर्जे त्वेति संनमयत्यनु मार्ष्टि वा।**
4. **इमां प्राचीमुदीचीम्। इषमूर्जमभि स ?स्कृताम्। बहुपर्णामशुष्काग्राम्। हरामि पशुपामहम् इत्याहरति।**
5. **वायव: स्थोपायव: स्थेति तया षडवरार्ध्यान्वत्सानपाकरोति। दर्भैर्दर्भपुञ्जीलैर्वा।**
6. **देवो व: सविता प्रार्पयत्विति शाखया गोचराय गां प्रस्थापयति। प्रस्थितानामेकां शाखयोपस्पृशाति दर्भैर्दर्भपुञ्जीलैर्वा।**
7. **आ प्यायध्वमघ्निया इन्द्राय देवभागमित्येके समामनन्ति। महेन्द्रायेत्येके।**
8. **इन्द्रं निगमेषूपलक्षयेदिन्द्रयाजिनो महेन्द्रं महेन्द्रयाजिन:।**
9. **शुद्धा अप: सुप्रपाणे पिबन्ती: शतमिन्द्राय शरदो दुहाना:। रुद्रस्य हेति: परि वो वृणक्त्विति प्रस्थिता अनुमन्त्रयते।**
10. **ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरिति यजमानस्य गृहानभिपर्यावर्तते।**
11. **यजमानस्य पशून्पाहीति अग्निष्ठे अनसि अग्न्यगारे वा पुरस्तात्प्रतीचीं शाखामुपगूहति पश्चात्प्राचीं वा। (आ.श्रौ.सू.1.1.8 - 1.2.10) इति।**

अस्मिन् कर्मणि विनियुक्ता मन्त्रा: तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रश्ने प्रथमानुवाके 'इषे त्वोर्जे त्वे'त्यादिमन्त्रा:, अच्छिद्रप्रश्ने एको मन्त्र:, शाखान्तराच्च एको मन्त्रश्च दृश्यन्ते।

आहत्य एतत्कर्मार्थम् अष्टौ मन्त्रा विनियुज्यन्ते। तत्र बहुपर्ण-बहुशाखा- अप्रतिशुष्काग्र-असुषिरात्मिकां, प्राच्याम् उदीच्याम् ऐशान्यां वा दिशि भवां पलाशशाखां शमीशाखां वा 'इषे त्वोर्जे त्वे'ति मन्त्रेण आच्छिनत्ति। अच्छिद्रप्रश्ने आम्नातेन 'इमां प्राचीमुदीची'मिति मन्त्रेण आच्छिन्नशाखामाहरति। एवमाहृतया पलाशशाखया 'वायव: स्थोपायव: स्थे'ति मन्त्रेण षट्कृत्वो वत्सानपाकरोति।

तत: 'देवो व: सविता .... माऽघश ?स:' इति मन्त्रेण तयैव शाखया गोचराय गा: प्रस्थापयति। 'शुद्धा अप: सुप्रपाणे पिबन्ती: ... शतमिन्द्राय शरदो दुहाना:' इति शाखान्तरगतमन्त्रेण, 'रुद्रस्य हेति: परि वो वृणक्तु' इति च तैत्तिरीयसंहिताम्नातमन्त्रेण प्रस्थिता गा अनुमन्त्रयते। 'ध्रुवा अस्मिन् ... बह्वी'रिति यजमानस्य गृहानभ्यैति। 'यजमानस्य पशून्पाहि'ति अग्निष्ठे अनसि, अग्न्यगारे वा पुरस्तात्प्रतीचीं पश्चात्प्राचीं वा शाखामुपगूहति।

एषां मन्त्राणां विनियोग: इत्थं सङ्गृहीत: सायणै: -

**इषे शाखां छिनत्यूर्जे मार्ष्टि वायेति वत्सकान्।**
**अपाकृत्याऽथ देवो गा: प्रस्थाप्याऽऽप्येति गां स्पृशेत्॥**
**रुद्रस्येत्यभिमन्त्र्यैता ध्रुवेति गृहमाव्रजेत्।**

**यजेति शाखोपगूह इत्यष्टावनुवाकगाः॥**

इति। (तै.सं.सा.भा.1.1.1)

अत्र शखाच्छेदनप्रयुक्तमन्त्रविभागे आपस्तम्ब-बोधायनयोः किञ्चन वैविध्यं वर्तते। बोधायनेन 'तामाच्छिनत्तीषे त्वोर्जे त्वेति' (बो.श्रौ.सू.1.1) इत्युच्यते । आपस्तम्बः उक्तमेतदभिधाय मन्त्रभेदपक्षमाश्रित्य विनियोगभेदमेवमाह - 'इषे त्वोर्जे त्वेति तामाच्छिनत्ति। अपि वा इषे त्वेत्याच्छिनत्ति, ऊर्जे त्वेति संनमयत्यनुमार्ष्टि वा'। (आ.श्रौ.1.1.10-11) इति।'संनमयती'त्यत्र ऋजूकरोतीत्यर्थः। 'अनुमार्ष्टि' इत्यत्र आनुलोम्येन संलग्नधूल्यादीनाम् अपनयनमुच्यते। अयं मन्त्रभेदपक्षः जैमिनिना द्वितीयाध्याये प्रथमपादे 'अर्थैकत्वादेकं वाक्यं, साकाङ्क्षं चेद्विभागे स्यात। समेषु वाक्यभेदः स्यात्'। इति स्वीकृतः। (मी.सू.2.1.46-47)

अत्र वत्सापाकरणार्थायाः पलाशशाखायाः प्राशस्त्यं श्रुतावेवं चिन्तितम् -

तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम्। ब्रह्म वै पर्णः। यत्पर्णशाखया वत्सानपाकरोति। ब्रह्मणैवैनानपाकरोति। (तै.ब्रा.3.2.1) इति।

अर्थात् द्युलोके सोम आसीत्। तं गायत्रीछन्दः आऽहरत्। आहरणकाले अभिघातेन सोमपर्णं भूमौ पतितम्। तस्मात् पलाशवृक्षः आविर्भूतः। पतितात् पर्णात् आविर्भूतस्य पलाशवृक्षस्यापि 'पर्णम्' इति नाम सञ्जातम्। पर्णवृक्षः ब्रह्मैव। अतः पर्णशाखया वत्सापाकरणेन साक्षात् ब्रह्मणैव वत्सा अपाकृता भवन्तीति सारः। पर्णस्य ब्रह्मसम्बन्धप्रसिद्धिस्तु - देवा वै ब्रह्मन्नवदन्त। तत्पर्ण उपाशृणोत्। (तै.सं.3.5.7) इत्यादिश्रुत्यन्तरेष्वपि प्रसिद्धम्।

अत्र शाखाया आहरणे - यत्प्राचीमाहरेत्। देवलोकमभिजयेत्। यदुदीचीं मनुष्यलोकम्। प्राचीमुदीचीमाहरति। उभयोर्लोकयोरभिजित्यै। (तै.ब्रा.3.2.1) इति श्रुतिवाक्येषु प्राच्यादिदिक्शब्देन मुख्यार्थत्वात् दिग्विवक्षितेत्याक्षेपः। दिश आहर्तुमशक्यत्वात् दिक्सम्बन्धिन्याः शाखायाः उपलक्षणीयत्वात्, तत्तद्दिग्वर्तिनी शाखा आहार्येति समाधिः।

विषयोऽयम् एवं चिन्तितं जैमिनीय-न्यायमालायां -

**प्राचीमाहरतीत्यत्र दिक्शाखा वाऽस्तु दिक्श्रुतेः।**
**आहार्यत्वं दिशो नास्ति शाखा तेनोपलभ्यते।।**

(जै.न्या.4.2.3) इति।

वत्पापाकरणानन्तरं शाखाया उपगूहनं भवति। पश्चात् उपवेषकरणकाले तां शाखां द्विधा छित्वा मूलभागः उपवेषः क्रियते। उपवेषश्च अङ्गारनिरूहण-कपालोपधानादि कर्म कर्तुम् उपयुज्यते।

अत्र विचारः एवं भवति - अन्तर्वेदि शाखायाः पलाशान्यसर्वाणि प्रशात्य, मूलतः शाखां परिवास्य उपवेषं करोति ...। (आ.श्रौ.1.6.7) इति।

अत्रायमर्थः - 'इषे त्वे'ति मन्त्रेण या शाखा छिन्ना, तस्याः शाखायाः मूलभागं भङ्क्त्वा, तं (मूलभागं) उपवेषं कुर्यादिति।

अत्र एतयोः मूलाग्रयोः 'उपवेषेण कपालन्युपदधाति' 'शाखया वत्सानपाकरोति' इति पृथग्विनियोगः दृश्यते। अतः कपालोपधानं वत्सापाकरणञ्चेत्युभयं शाखाच्छेदनेन प्रयोजनं भवति। यतः अग्रमूलयोः समानत्वेन विभज्य विनियोगो भवतीति चेत् मैवम्।

उपवेषं करोति इत्ययं विधिः उपवेषस्य प्रकृतिद्रव्यमपेक्षते। सा च अपेक्षा मूलेन पूर्यते। तच्च मूलं शाखार्थम्। 'इषे त्वोर्जे त्वेति तामाच्छिनत्ति' (आ.श्रौ.1.1.10) इत्यत्र छिन्नायाः समूलायाः शाखायाः सौकर्यार्थं परिवासनवाक्येन पुनः मूलापादानकं छेदनं श्रूयते। असति मूले मूलापादानकं छेदनं न सम्भवति। तस्मात् शाखार्थमेव मूलं, न तु उपवेषार्थम्। अतः अन्यार्थमूल-अनुनिष्पन्नेन उपवेषेण क्रियमाणं कपालोपधानं न शाखाच्छेदनस्य प्रयोजकं, किन्तु वत्सापाकरणमेव तत्प्रयोजकम्। तथा सति यत्र शाखायाः प्रथमच्छेदनेनैव सौकर्यं सम्पद्यते तत्र उपवेषसिद्धये पुनः, प्रयत्नेन मूलं न सम्पादनीयम्। लौकिकेनैव केनचित् काष्ठेन कपालान्युपधेयानि इत्येषोऽशः जैमिनीयन्यायमालायां एवं विवृतं वर्तते -

**शाखां छित्वोपवेषं च मूले कुर्वीत शाखया।**
**नुदेद्वत्सान् कपालानि स्थापयेदुपवेषतः॥**
**द्वयं प्रयोजनं छित्तेर्वत्सापाकृतिरेव वा।**
**आद्योऽग्रमूलयोरत्र विभज्य विनियोगतः॥**
**उपवेषं करोतीति साकाङ्क्षोऽन्यार्थमूलतः।**
**पूर्यतेऽतोऽनुनिष्पादीस तस्माद्युज्यतेऽन्तिमः॥**

इति। (जै.न्या.4.2.4-6)

एवं मीमांसाशास्त्रे निर्णीतप्रकारेण वत्सापाकरण-उपवेषकरणविचारः, जैमिनीयन्यायमालायां सरल-सुलभशैल्या श्लोकरूपेण विचारितो वर्तते। एतद्ग्रन्थकर्तारः वेदभाष्यप्रणेतारः सायणाचार्याः स्वकीयवेदभाष्ये श्लोकानिमान् उदाहरन्तो वेदविषयान् विचारयन्ति। सर्वज्ञकल्पाः सायणाचार्याः बहुशास्त्रग्रन्थान् वेदभाष्यञ्च विरच्य अनितरसाधारण्या लोकोपकृत्या लोकाननुगृह्णन्तश्चकासत इति तान् पौनःपुन्येन प्रणम्य विरम्यत इति शम्।

**परामृष्टग्रन्थाः**


1. मीमांसादर्शनम्
2. आपस्तम्बश्रौतसूत्रम्
3. बोधायनश्रौतसूत्रम्
4. तैत्तिरीयसंहिता(सायणभाष्ययुता)
5. जैमिनीयन्यायमाला
6. तैत्तिरीयब्राह्मणम्



*सहाचार्यः, आपस्तम्बपौरोहित्यविभागः*
*श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपति*

ISSN 2348-7828

# प्राचीनभारतीयसंस्कृतव्याकरणपरम्परायां पाणिनीयव्याकरणस्य श्रेष्ठत्वम्।

लक्ष्मीकान्त मुर्मु

**कुञ्चिका (Keywords)** – संस्कृतव्याकरणस्य प्राचीनता, उत्पत्तिः, वेदाङ्गत्वेन स्थानम्, व्याकरणस्य परम्परा भेदाः च, त्रिमुनिव्याकरणम्, पाणिनीयव्याकरणस्य सर्वजनप्रसिद्धिः, कथं श्रेष्ठत्वम्।

वेदस्य अपौरुषेयत्वं प्राचीनमुनि-ऋषयः सर्वे भारतीयविद्वांसश्च अङ्गीकुर्वन्ति, श्रीभगवान् प्रत्येकं कल्पारम्भे आद्यन्तरहितं नित्यं ज्ञानं प्रयच्छति। तस्मात् वैदिकज्ञानादेव लोकं प्रचलति, तथाहि प्रोक्तं भारतीयेतिहासस्य अद्वितीयज्ञात्रा श्रीकृष्णद्वैपायनवेदव्यासेन-

**अनादिनिधना निधना नित्या वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥** इति।

सृष्टेः प्रथमावस्थायां पृथिवी आसीत् अग्निपिण्डा, क्रमशः तापस्य ह्रासे प्राणस्य प्रादुर्भावे आदौ एककोशीजीवस्य उन्मेषः, ततश्च शरीरस्य परिवर्तनेन क्रमेण अस्माकं पशुतः मनुष्ये उन्नतिः इति वैज्ञानिकी दृष्टिपरम्परा, ततश्च वाक् व्यवहारः, पदपदार्थज्ञानं, वैदिकलौकिकभाषाज्ञानं, चतुर्दशविद्याग्रहणमेवं प्रकारेण अस्माकं विकाशः। परन्तु ''वेदोऽखिलो धर्ममूलं'' इति वचनमनुसृत्य अखिलधर्ममूलं शब्दराशिः वेद एव अस्मान् प्रवर्तयति प्रवृत्तिमार्गे, तादृशस्य वेदस्य ज्ञानाय अपेक्षते वेदाङ्गानां ज्ञानम्। वेदस्य षडङ्गेषु अन्यतमं स्वीकृतमाचार्यैः ''मुखं व्याकरणं स्मृतम्'' इति। ''प्रधाने च कृतो यत्नः फलवान् भवति।'' तथाहि व्याकरणं वेदस्य सुरक्षार्थं प्रयोजनं भवति, महाभाष्ये प्रोक्तं-''रक्षोहागमलघ्वसन्देहाः प्रयोजनम्'' इति। व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेन इति व्याकरणम्, वि-आङ्-पूर्वकात् कृधातोः करणे ल्युट्-प्रत्यये व्याकरणशब्दस्य निष्पत्तिः। प्रकृतिप्रत्ययादिभिः शब्दस्य व्युत्पत्तिः साधुत्वनिष्पत्तिः येन शास्त्रेण क्रियते तच्छास्त्रं व्याकरणम्। व्याक्रियन्ते विविच्यन्ते असाधुशब्देभ्यः साधुशब्दाः पृथक् क्रीयन्ते इति वा व्याकरणम्। तदुक्तं हरिणा-

''साधुत्वज्ञानायविषया सैषा व्याकरणस्मृतिः।'' इति।

अपि च अर्थावगत्यर्थं वक्तारः शब्दप्रयोगं कुर्वन्ति। अर्थज्ञानं च वृत्तिज्ञानं विना न सम्भवति, वृत्तिग्राहकेषु अन्यतमं भवति व्याकरणं यथा भणितं प्राचीनैः-

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥ इति।**

एवं प्रकारेण लोकवेदयोः उपकारकत्वात् व्याकरणं महोपयोगि। तथा च श्रूयते लोके-

**काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्। इति।**

## व्याकरणस्य परम्परा

### व्याकरणस्य उत्पत्तिः

व्याकरणस्य उत्पत्तिविषये विदुषां महान् संशयः विद्यते, ऋग्वेदपाठे अस्य किञ्चित् निदर्शनं दृश्यते। वाल्मीकीय-रामायणे हनुमतः वाक्पटुता प्रोक्तास्ति-

**नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।**
**बहु व्याहतानेन न किञ्चिदपभाषितम्॥**[1] इति।

एतेन ज्ञायते यत् रामचन्द्रकाले व्याकरणस्य सुव्यवस्थितं पठन-पाठनमासीत्। यास्काचार्येण शाकटायणव्याकरणस्य उल्लेखः पूर्वमेव कृतः, तथापि पुराकल्प एतदासीत्-''संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते'' इति महाभाष्यवचनानुसारेण ज्ञायते यत् प्राचीनकालादेव व्याकरणस्य चर्चा आसीत्।

इतोऽपि प्रमाणं यथा मुण्डकोपनिषदि-

**''द्वे विद्ये वेदितव्ये...,**
**शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति''**[2] **इति।**

गोपथब्राह्मणे (1/14) कतिचनसंज्ञाविषये, ऐतरेयब्राह्मणे (7/7) विभक्तिविषये ज्ञानं, महाभारते उद्योगपर्वणि (43/61) इत्यादि प्राचीनग्रन्थादिषु दृश्यते।

व्याकरणस्य प्रथमः प्रवक्ता ब्रह्मा, तथाहि ऋक्तन्त्रप्रातिशाख्ये पठ्यते-

**ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय,**
**इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः,**
**तं खल्विममक्षरसमाम्नायमित्याचक्षते।** (ऋक्तन्त्र. 1/4) इति।

ततश्च प्रवक्ता बृहस्पतिः यथा भाष्ये-

**बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्त्रं**
**प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच।**[3] **इति।**

एवं भाष्यानुसारेण व्याकरणस्य आदि संस्कर्ता इन्द्रः इति मन्यते यथा तैत्तिरीयसंहितायां दृश्यते-

**वाग्वै पराच्यव्याकृतावदत्। ते देवा इन्द्रमब्रुवन्,**
**इमां नो वाचं व्याकुर्विति.....तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्।**[4] **इति।**

**व्याकरणस्य भेदाः**

व्याकरणशास्त्रस्य द्वौ सम्प्रदायौ, यथा ऐन्द्रः, महेश्वरः शैवः वा इति। कातन्त्र-व्याकरणम् ऐन्द्रसम्प्रदायस्य, पाणिनीयव्याकरणं शैवसम्प्रदायस्य। किन्तु सामान्यतः व्याकरणं त्रिधा विभक्तुं शक्यते। छान्दसमात्रम्, लौकिकम्, छान्दसलौकिकञ्चेति। तत्र छान्दसं प्रातिशाख्यादि, लौकिकं कातन्त्रादि, छान्दसलौकिकञ्च पाणिन्यादि इति।

पाणिनेः प्रागनेके वैयाकरणाः आसन् इति तु स्पष्टतया ज्ञायते, प्रायेण पञ्चाशीतिः व्याकरणप्रवक्तारः समजायन्तेति युधिष्ठिरमीमासंकानां मतम्[5]। तेषु पञ्चाशीतिः व्याकरणप्रवक्तृषु षड्विंशतिसंख्यकानामाचार्याणामुल्लेखो दरीदृश्यते। तेषु केषाञ्चन आचार्याणां नामोल्लेखः पाणिनिना कृतोऽस्ति यथा-''तृषिमृषिकृषेः काश्यपस्य'' (पा. सू. 1/2/25), ''अङ्गार्ग्यगालवयोः'' (पा. सू. 7/3/99), ''ईꣃचाक्रवर्मणस्य'' (पा. सू. 6/1/130), ''ऋतो भारद्वाजस्य'' (पा. सू. 7/2/63), ''इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च'' (पा. सू. 6/1/127), ''गिरेश्च सेनकस्य'' (पा. सू. 5/4/112), ''अवङ् स्फोटायनस्य'' (पा. सू. 6/1/123), ''त्रिप्रभृतिषु शाकटानयस्य'' (पा. सू. 8/4/50) इत्येतेषु पाणिनीयसूत्रेषु कश्यप-गार्ग्य-गालव-चाक्रवर्मण-भारद्वाज-स्फोटायन-शाकटायनप्रमुखाः शब्दविद्वराः समाद्रियन्ते। किन्तु पाणिनेः ''उदीचाम्'', ''प्राचाम्'' इत्यादिपदानां प्रयोगेन ज्ञायते यत् इतोऽपि बहवो वैयाकरणप्राचार्याः आसन् इति।

इदानीं प्रसिद्धेषु नव वा अष्टौ व्याकरणानि इति विदुषां समाजे प्रसिद्धिः। तत्रापि मतभेदाः दृश्यन्ते। तद्यथा-

श्रीतत्त्वविधिनामके वैष्णवग्रन्थे नव व्याकरणानामुल्लेखो विद्यते-

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटानयम्।**

**सारस्वतं चापिशलं शाकल्यं पाणिनीयकम्।।**[6] इति।

एवमेव रामायणेऽपि नव व्याकरणानां चर्चा विद्यते-

**सर्वासु विद्यासु तपोविधाने पस्पर्धतेऽयं हि गुरुं सुराणाम्।**

**सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि प्रसादात्।।**[7] इति।

अर्वाचीनास्तु ग्रन्थकृतः अष्टावेव शाब्दिकान् सङ्गिरन्ते।

यथा हैमबृहद्वृत्यवचूर्णिकृतः-

**ब्राह्मपैशानमैन्द्रञ्च प्राजापत्यं बृहस्पतिम्।**

**त्वाष्टमापिशलं चेति पाणिनीयमथाष्टकम्।।**[8] **इति।**

एवमेव वोपदेवोऽपि अष्टौ शाब्दिकान् स्वीकृतवान् यथा-

**इन्द्रश्चन्द्रः काशकृत्स्नाऽऽपिशली शाकटायनः।**

**पाणिन्यमरजैनेन्द्राः जयन्त्याष्टादिशाब्दिकाः।।**[9] **इति।**

दुर्गाचार्योऽपि ''व्याकरणमष्टमप्रभेदम्[10]'' इत्येवाभिधत्ते। मतान्तरे-

**यस्मिन् व्याकरणान्यष्टौ निरूप्यन्ते महान्ति च**

**तत्राद्यं ब्राह्ममुदितं द्वितीयं चान्द्रमुच्यते।।**

**तृतीयं याम्यमाख्यातं चतुर्थं रौद्रमुच्यते।**

**वायव्यं पञ्चमं प्रोक्तं षष्ठं वारुणमुच्यते।**

**सप्तमं सौम्यमाख्यातमष्टमं वैष्णवं तथा।।**[11] **इति।**

**पाणिनीयव्याकरणम्**

विश्वेऽस्मिन् सर्वासां प्राचीनानामर्वाचीनानां वा भाषाणां यावन्ति व्याकरणानि सन्ति, तानि सर्वाणि पाणिनिव्याकरणमतिशते।

तथाहि-

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।**

**सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन।। इति।**

केचिच्च अस्य व्याकणस्य अइउण-प्रभृतीनि आधारभूतानि चतुर्दश सूत्राणि महेश्वरप्रसादाल्लब्धानीति एतानि श्रुतिपदवाच्यानि भवन्ति इति अस्य व्याकरणस्य श्रुतिमूलकत्वात् वेदाङ्गत्वमित्थं स्वाभिप्रायं व्यञ्जन्ति।

तदुक्तं नागेशेन लघुशब्देन्दुशेखरे-

**''श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्।'' इति।**

पाणिनीयव्याकरणं त्रिमुनिव्याकरणमिति उच्यते, पाणिनि-कात्यायन-पतञ्जलिभिः त्रिभिः मुनिभिः कृतकत्वात्। मुनित्रयपर्यालोचनेनैव अस्य व्याकरणस्य त्रिमुनित्वं बोद्धुं शक्यते इति।

**पाणिनिः पाणिनीयपरम्परा च**

पणिनोऽपत्यमित्यर्थे पणिन् शब्दात् ''तस्यापत्यम्'' (पा. सू. 4/1/92) इति सूत्रेण अण् प्रत्यये ''तद्धितेष्वचामादेः'' (पा. सू. 7/2/117) इति सूत्रेणादिवृद्धौ पाणिन् इति जाते ततो युवापत्यमित्यर्थे ''अत इञ्'' (पा. सू. 4/1/95) इति सूत्रेणाञ्प्रत्यये पाणिनिरिति रूपं सिद्ध्यति, एतेन ज्ञायते पणिनः अपत्यमिति। अस्य महर्षेः पाणिनिः, शालातुरीयः, दाक्षीपुत्रः इति प्रसिद्धानि नामानि सन्ति। जन्म शालातुरेऽभवदिति ज्ञायते, वर्तमाने लाहोर लाहुर वा इत्यनुमीयते, कालः आनुमानिकः 2800-500 ई. पू. मध्ये कदाचित् आसीदिति, अतः 4th Century B.C. इति वक्तुं शक्यते। अयं विद्वान् आवैदिककालात् लौकिकं वैदिकं च भाषामधिकृत्य आपिशलप्रभृतिनां वैयाकरणानां शास्त्रीयमतानि पर्यालोच्य ''अष्टाध्यायी'' नामकं ग्रन्थं विरचितवान्। सूत्रनिबन्धोऽयं ग्रन्थः।

सूत्रञ्च-

**अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।**

**अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः।। इति।**

ISSN 2348-7828

''अष्टाध्यायी'' नामको ग्रन्थः अष्टसु अध्यायेषु विभक्तः, पुनः प्रत्यकं अध्यायः चतुर्षु पादेषु विभक्तः। पुनः अयं ग्रन्थः विषयमाधारीकृत्य विद्वभिः त्रिधा विभक्तः। यथा-

1. वाक्येभ्यः पदानां सङ्कलनम् प्रथमाध्याये द्वितीये च।
2. पदानां प्रकृतिप्रत्ययविभागः तृतीयचतुर्थपञ्चमाध्यायेषु।
3. प्रकृतिप्रत्ययैस्सह आगमादेशानां संयोजनेन परिनिष्ठितपदानां निर्माणञ्च षष्ठसप्तमष्टमाध्यायेषु इति[12]।

लाघवविधानार्थमत्र बहवः पन्थान आश्रिताः, यथा अच् इत्यादि प्रत्याहारचिन्तनं, टिघुइत्यादि संज्ञा कल्पना, पूर्वत्रासिद्धमित्यादि सूत्रम् इत्यादयः।

ततः पाणिनेः ''अष्टाध्यायी'' इति ग्रन्थस्य उपरि आचार्यः कात्यायनः वार्तिकानि रचितवान्। अयं विद्वान् प्रायः आनुमानिकं ई. पू. 2900 काले इत्युक्ते 3rd Century B.C. आसीत् इति विदुषां मतम्। पाणिनिकाले बहवः वृत्तिकाराः आसन् तेषु वररुचिकात्यायनयोः भिन्नत्वविषये विदुषां संशयो विद्यते।

वार्तिकं च-

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।**

**तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः॥ इति।**

पाणिनेः सूक्ष्मेक्षिकापर्यालोचनस्य साफल्याभावात् वार्तिककारः विस्तरेण वर्णितवान्, अर्थात् पाणिनिना स्वसमये अव्यवह्रियमाणतया यदनुक्तं तत् स्वसमये पूरितं दुरुक्तं च प्रत्याख्यातमिति।

ततः अन्तर्द्रष्टा शेषावतारः पतञ्जलिः सूत्रवार्तिकगतव्याकरणस्य क्लेशदूरीकरणाय आविर्भूतः। कात्यायनस्य पूरकदृष्टिं पर्यालोच्य केषाञ्चन वार्तिकानां त्यागः, लौकिकव्यवहारेणैव सिद्धे केषाञ्चन पाणिनीयसूत्राणां प्रत्याख्यानं प्रश्नोत्तररूपया अपूर्वशैल्या सूत्रवार्तिकानां व्याख्यानात्मकं महर्षिः पतञ्जलिः भाष्यं रचितवान् । तथाहि भाष्यं च-

**सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।**

**स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥ इति।**

अत्र न मन्तव्यं यत् पतञ्जलिना पाणिनेः न्यूनता दर्शिता। यतो हि स्वयमेव पतञ्जलिनोच्यते वृद्धिरादैजिति सूत्रे-

**प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचावकाशे**

**प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म।**

**तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं, किं पुनरियता सूत्रेण।इति।**

त्रिषु अपि मुनिषु एतस्य प्रामाण्यमधिकमङ्गीक्रीयते, यतो हि- यथोत्तरं मुनीनां प्रामाण्यमिति। अनेन सूत्रेषु दार्शनिकविचारः प्रस्तुतः। कलेः सप्तविंशतितमशताब्द्यां ख्रिस्ताब्दतः शतचतुष्टयवर्षपूर्वमस्य कालमासीत् इति विदुषामभिप्रायः। अन्ये च 2nd Century B.C. आसीत् इति अभिप्रायः। अस्य माता गोणिकाख्या, जन्मभूमिश्च गोनर्ददेशः। तेन अयं गोनर्दीय इत्यच्यते[13]।

इत्थं त्रिमुनिव्याकरणं लोके वेदे च प्रयुज्यमानानां शब्दानां साधुत्वासाधुत्वविवेचनम् अन्यतश्च प्रयुक्तानां शब्दानां प्रयोगकारणचिन्तनं, पदपदार्थोपस्थापनपर्यालोचनेन व्याकरणमिदं द्विधा विभक्तुं शक्यते-

1. शब्दसाधुत्वविषयकम्।
2. पदपदार्थतत्सामर्थ्यचर्चाविषयकम्। इति।

आद्यं प्रक्रियारूपेण प्रसिद्धं परं च दार्शनिकरूपेणेति। प्रथमांशे प्रक्रियाकौमुदी, काशिका, वैयाकरणसिद्धान्तकौमुदी, लघुसिद्धान्तकौमुदी इत्यादयः ग्रन्थाः। द्वितीयांशे च वाक्यपदीयम्, वैयाकरणभूषणसारः, सिद्धान्तमञ्जूषा, सिद्धान्तलघुमञ्जूषा, परमलघुमञ्जूषा इत्यादयः यत्र च विद्यते स्फोटः, ध्वनिः, लकारार्थः, नामार्थः, शब्दशक्तिः इत्यादि विषये आलोचना।

**पाणिनीयव्याकरणस्य सर्वजनप्रसिद्धिः श्रेष्ठत्वञ्च**

पाणिनीयशब्दानुशासनं न केवलं कस्मिञ्चित् प्रदेशे सीमावद्धं अपि तु आभारतस्य चित्रमुपस्थापयति। तस्य अनुशासने ग्रामीयलौकिकजनसमुदाये व्यवहतः या भाषा तासां भाषानामपि शब्दानां व्यवहारं कृतवान्, अपि च तत्रत्यानां जनानां आचार-व्यवहारविषये, क्रीडा, महोत्सवः, व्यक्तिनामादिनामुल्लेखं अभारतप्रीतिं दर्शयति। यथा अष्टाध्यायाम् - नित्यं क्रीडा-जीविकयोः (2.2.17), संज्ञायां (3.3.100), प्राचां क्रीडायाम् (6.2.74), एवं प्रकारेण धान्यं, हिरण्यं, भोजनं, फल-मुद्रादिशब्दानां व्यवहारोऽपि परिलक्ष्यते। शब्दसमाम्नाये भूतकालिक तथा समकालिकशब्दानां परिमार्जयित्वा नतुनशब्दराशेः मानदण्डं निर्माति।

पाणिनीयव्याकरणस्य सर्वप्रधानविषेशता इयं यत् संक्षेपेण कथनम्। तदेव महर्षिः पतञ्जलिः कथयति - ''लघ्वर्थं चेयं व्याकरणम्''[14] इति। वस्तुतः अयं विद्वान् पाणिनिः आसीत् संक्षेपकरणे सिद्धहस्तः, विषयानां दीर्घता, विशषतश्चान्द्रपञ्चिकाऽध्ययनमत्यन्तदीर्घसमय-श्रम-साध्यम्। तस्य प्रमाणम् ऐन्द्रव्याकरणस्य तुलनाक्रीयते चेत् स्पष्टं प्रतीयते। दर्शनिकतत्त्वमपि मोक्षप्रापकत्वेन सुस्पष्टतया प्रतिपादितं वर्तते। यथा सामान्यः, विशेषः, जातिः, व्यक्तिः, द्रव्यं, सत्वं, असत्वं, भावः, अभावः इति एतेषां शब्दानां व्यवहारेण परिदृश्यते दार्शनिकतत्त्वस्य गाम्भीर्यम्।

अन्यत् विशेषवैशिष्टं भवति लौकिकवैदिकोभयविधशब्दतत्त्व-प्रदर्शकत्वं। पाणिनीयव्याकरणस्य वस्तुतः लौकिकवैदिकोभयविध-शब्दतत्त्वात सर्वजनप्रसिद्धिः अर्थात् पाणिनिव्याकरणं यथा लौकिकशब्दस्य साधुत्वं प्रतिपादयति तथैव वैदिकशब्दमपि।

तथाहि श्रीमद्भट्टोजीदीक्षितः वैयाकरणसिद्धान्तकौमुद्यां स्वरवैदिकप्रकरणान्ते प्राहः –

**इत्थं वैदिकशब्दानां दिकमात्रमिह दर्शितम्।**

**तदस्तुप्रीतये श्रीमद्भवानीविश्वनाथयोः। इति।**

परन्तु अन्यानि यानि व्याकरणानि सन्ति तानि सर्वानि यथा कातन्त्रादि लौकिकशब्दस्य एव साधुत्वं प्रतिपादयति। आपिशालिव्याकरणं तु अक्षरतन्त्रादि प्रातिशाख्यवत्। प्रातिशाख्यं तु वैदिकशब्दस्य साधुत्वं नैव प्रतिपादयति। एकदेशसन्धिनिर्देशात् लोके प्रातिशाख्यस्य व्याकरणत्वेन प्रसिद्धिः, वस्तुतः प्रातिशाख्यं नैव व्याकरणम्[15]। एतस्मिन् विषये आचार्यः कैयटः अपि कथयति ''वैदिकशब्दाः लौकिकाः एव'' इति। वैदिकानामपि लौकिकत्वे प्राधान्यख्यापनाय पृथगुपादानम्। यथा ब्राह्मणाः आयाता वशिष्ठोऽप्यायात इति वशिष्ठस्य।

एवं उभयसिद्धत्वात् पाणिनीयव्याकरणस्य सर्वजनप्रसिद्धित्वेन भजते। एतावाति महत्वे सति वक्तुं शक्यते यत् लौकिक-वैदिकोभयविधशब्दतत्त्वप्रदर्शकं पाणिनीयव्याकरणं मूर्धन्यषिक्तं रराजते। व्याकरणमिदं सर्वाङ्गसुन्दरं सूक्ष्मचिन्तनोद्भासितम्–अद्भुतप्रतिभानिदर्शनं सूक्ष्मपदार्थप्रतिभासकं वर्तते। अपि च युगोपयोगितया परितोषितं, परिवर्धितं, संयोजितं, परिवर्तितमिति, अतः अस्य प्रचारः, प्रसारः सर्वदा महान् विद्यते। तदुक्तं पतञ्जलिना ''सर्ववेदपारिषदं हीदं शास्त्रम्[16] इति। अत एव समग्रस्य पाणिनीयव्याकरणस्योपादेयत्वं मुक्तकण्ठेन पुराणेषु प्रतिपादितम्।

## ग्रन्थसूची


1. करणः, शिवशङ्करः. बौद्धार्थवादसमीक्षणम्. बेलुड़मठम् : रामकृष्ण-मिशन–विवेकानन्द-विश्वविद्यालयः. 2016.
2. दीक्षितः, श्रीमद्भट्टोजी. वैयाकरणसिद्धान्तकौमुदी(सम्पूर्णम्). सम्पादकौ. शर्मा, महामहोपाध्यायः गिरिधरः. शर्मा, महामहोपाध्यायः परमेश्वरानन्दः. श्रीवासुदेवदीक्षितप्रणीतया बालमनोरमाख्यया व्याख्यया श्रीज्ञानेन्द्रसरस्वती-विरचितया तत्त्वबोधिन्याख्यया व्याख्यया च सनाथिता. वाराणसी-मोतिलाल-बनारसीदास. 2010.
3. मीमांसकः, आचार्यः श्रीयुधिष्ठिरः. संस्कृत व्याकरण शास्त्र का इतिहास (छात्रोपयोगी संस्करण). सम्पा. शास्त्री-त्रिपाठी, रामनाथः. वाराणसी – चौखम्बा पब्लिशर्स. 2014.
4. मीमांसकः, आचार्यः श्रीयुधिष्ठिरः. संस्कृत व्याकरण शास्त्र का इतिहास (ङ्कश्द्य. १). सम्पा. शास्त्री-त्रिपाठी, रामनाथः. वाराणसी – चौखम्बा पब्लिशर्स।
5. हालदारः, गुरुपदः. व्याकरण-दर्शने-इतिहास (बङ्गभाषया). कोलकाता-संस्कृत वुक् डिपो. 2006.
6. httpsÑ//sanskritdocuments.org/scannedbooks/


## पादटिप्पणी

1. रामायणे किष्किन्धाकाण्डे. 3/29.
2. मुण्डकोपनिषदि. 1.1. मन्त्र. 4, 5.
3. प. महा. पस्पशाह्निके. 1/1/1.
4. तै. सं. 6/4/7.
5. सं. व्या. शा. का. इति. ङ्कश्द्य.1. पृ. 67
6. श्रीतत्वविधौ. व्या. शा. पृ. 22
7. बा. रा. उत्तर. अ. 36, श्लो. 47
8. है. वृत्यवचूर्णिः– प्रारम्भे.
9. कविकल्पद्रुमस्य प्रारम्भे.
10. दुर्गनिरुक्तवृत्तिः आनन्दाश्रमसंस्करणं पृ. 74
11. सं. व्या. शा. का. इति. पृ. 21, 22
12. पाणिनीयपदव्यवस्था. पृ. 13
13. बौद्धार्थवादसमीक्षणम्. पृ. 7
14. महा. भा. 1.1. आह्निकम्.
15. पाणिनि और वैदिकव्याकरण. पृ. 2.
16. प. महा. 2/1/58


Laxmikanta Murmu,

Assistant Professor (W.B.E.S.)

Sanskrit Department, Government General Degree College at Ranibandh, Bankura, W.B.-722135

ISSN 2348-7828

# रत्नावल्यां समाहितानाम् अलङ्काराणां विवेचनम्

देवेन्द्रप्रसादः

रत्नावलीनाटिकेति एकं सहजश्रद्धाभावेन निस्सृतहार्दिकभावानां निबन्धनमस्ति। अतः अस्यां नाटिकायां प्रयत्नपूर्वकं किमपि न समावेशितम्। तथापि उत्तमं काव्यमिदम्। उत्तमकाव्यस्य सर्वाणि तत्त्वानि अत्र सहजरूपेण समाहितानि सन्ति। उत्तमकाव्यतत्त्वेषु अलङ्काराः अपि सहजतया प्रयुक्ताः स्युः न तु प्रयत्नसाध्याः। प्रयत्नसाध्यालङ्कारे तु काव्यं चित्रकाव्यं किं वा अधमकाव्यं भवति। किन्तु अस्मिन् काव्ये तु सहजतया यत्र कुत्रचित्रापि अलङ्काराः उत्तमरूपेण आगताः सन्ति। काव्ये समाहितालङ्काराणां विवेचनात् पूर्वं किञ्चित् प्रस्तावनारूपेण अलङ्कारः कः? किं च तस्य स्वरूपमिति पूर्वाचार्याणाम् अभिमतं प्रस्तूयते–

वस्तुतः साहित्येऽलङ्कारस्य प्रयोगः अतिप्राचीनोऽस्ति। प्राचीनतमे साहित्ये ऋग्वेदे उपमादीनाम् अलङ्काराणां रमणीयप्रयोगाः सन्ति। निरुक्तेऽपि उपमायाः लक्षणं भेदाः उपमावाचकाः शब्दाश्च निरूपिताः सन्ति। भरतमुनिः नाट्यशास्त्रे उपमारूपकदीपकयमकादिसञ्ज्ञकानां चतुर्णामलङ्काराणां वर्णनमकरोत्। संस्कृतजगति भामहः एव सर्वप्रथममलङ्काराणां व्यवस्थितरूपेण निरूपणं कृत्वा अलङ्काराणां काव्यत्वमुपस्थापितवान् तथा च अलङ्कारसम्प्रदायः साहित्यशास्त्रे स्थापितवान्। सः नाट्यशास्त्रकारस्य भरतमुनेः निरूपितानां रसादितत्त्वानामलङ्कारेषु अन्तर्भावं कृत्वा रसवदादीनामलङ्काराणां निरूपणं कृतवान्।

**अलङ्कारशब्दस्यार्थः–**

व्याकरणदृष्ट्या अलङ्करोतीति अलङ्कारः अथवा अलङ्क्रियते अनेनेति अलङ्कारः इति व्याख्यायते। एवम् उभयविधव्याख्यया अलङ्करणसाधनरूपेण व्यवस्थापितः। अलङ्कारः कः? काव्यशास्त्रे काव्ये वा अलङ्काराः के ? इति प्रतिपादयित्सवः अनेके आचार्याः अनेकप्रकारेण अलङ्कारस्य लक्षणं प्रतिपादितवन्तः। तत्र प्रथमं भामहमतमुपस्थाप्यते–

**वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः**[1]
**वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते।**[2]
**सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥**[3]

अत्र भामहकृत-अलङ्कारलक्षणे वक्रोक्त्या प्राधान्यलङ्कारे इति प्रतिपादितम्।

**दण्डीकृतालङ्कारलक्षणम्–**

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**[4]

**मम्मटकृतालङ्कारलक्षणम्–**

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥**[5]

**पण्डितजगन्नाथकृतम् अलङ्कारलक्षणनिरूपणम्–**

**काव्यात्मनो व्यङ्ग्यस्य रमणीयता प्रयोजका अलङ्काराः।**[6]

अलङ्काराणां विकासः वेदेभ्यः एव जातः। वेदेषु उपमोत्प्रेक्षानुप्रासादयः अलङ्काराः सन्ति। भरतमुनिना चत्वारः एवालङ्काराः स्वनाट्यशास्त्रे प्रतिपादिताः सन्ति। ततश्च अलङ्काराणां स्वरूपं व्यवस्थापयन् भामहः 39 अलङ्काराणां प्रतिपादनं कृतवान्। भामहेन प्रेरितो दण्डी अपि अलङ्काराणां प्रतिपादनं किञ्चिद् भिन्नरीत्या कुर्वन् 35 अलङ्काराणां व्याख्यानं प्रस्तुतवान्। ततश्च उद्भटाख्येनाचार्येण स्वकाव्यलङ्कारसङ्ग्रहे 41 अलङ्काराः प्रतिपादिताः। तेन भिन्नरीत्या वामनेनापि अलङ्काराणां व्याख्यानं कृत्वा 33 अलङ्काराणां प्रतिपादनं कृतम्। काव्यालङ्कारसूत्रमिति ग्रन्थश्च प्रणीतः। ततः रूद्रटेन 52 अलङ्काराणां प्रतिपादनं कृतम्। मम्मटेन स्वकाव्यप्रकाशे 68 अलङ्काराणां व्याख्यानं कृतम्। रुय्यकः स्वालङ्कारसूत्रे 78 अलङ्कारान् व्याख्यायति। ततश्च विश्वनाथकविराजकृतसाहित्यदर्पणे 82 अलङ्काराः उपवर्णिताः सर्वाधिकसङ्ख्यायां अप्पयदीक्षितप्रणीते कुवलयानन्दे 123 अलङ्काराणां प्रतिपादनं विद्यते। ततश्च पीयूषवर्षजयदेवेन एतेषामलङ्काराणां प्रतिपादनं कृतम्। अप्पयदीक्षितस्य जयदेवस्य च प्रतिपादने विशेषभेदो नास्ति। प्रायः समानता विद्यते।

**अलङ्काराणां वर्गीकरणम्–**

संस्कृतकाव्यशास्त्रीयाचार्येषु रुय्यकेन अलङ्काराणां वैज्ञानिकं विभाजनं सप्तधा विहितं तदेवात्र प्रस्तूयते। परवर्तिनः प्रायः इमामेव विभाजनरीतिं स्वीकृतवन्तः। यथा–

* सादृश्यमूलकाः अलङ्काराः–उपमारूपकोत्प्रेक्षादयः अलङ्काराः।
* विरोधमूलकाः अलङ्काराः–विरोधाभासविस्मादयः अलङ्काराः।
* शृङ्खलाबद्धमूलकाः अलङ्काराः–कारणमालामालोपमादयः अलङ्काराः।
* न्यायमूलकाः अलङ्काराः–काव्यलिङ्गादयः अलङ्काराः।
* कारणकार्यसम्बन्धकाः अलङ्काराः–अत्र विभावना–विशेषोक्त्यादीनाम् अलङ्काराणां गणना भवति।
* निषेधमूलकाः अलङ्काराः–अत्र व्यतिरेकः अपह्नुति–आदयः अलङ्काराः सन्ति।
* गूढार्थप्रतीतिमूलकाः अलङ्काराः–अस्मिन् वर्गे समासोक्तिप्रभृतयः अलङ्काराः समाविष्टाः।

अत्र किञ्चित् अलङ्कारविषयकः प्राथमिकः परिचयः निरूपितः। हर्षवर्द्धनविरचितरत्नावल्यामिति नाटिकायां समाहितानामलङ्काराणां विवेचनं प्रस्तूयते। यद्धर्षवर्द्धनो कविः अस्ति, सः कालिदासेन

प्रभावितो आसीत। कालिदासस्य प्रियोऽलङ्कारः उपमा आसीत। अनेन कविनाऽपि सर्वाधिकः प्रयुक्तः।

**उपमालङ्कारः-**

काव्यप्रकाशे उपमायाः सूक्ष्मविवेचनं प्रस्तुतं तद्यथा-

**साधर्म्यमुपमा भेदे पूर्णालुप्ता च साऽग्रिमा।**
**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा॥**
**तद्वद्धर्मस्य लोपे स्यात् न श्रौती तद्धिते पुनः।**
**उपमानानुपादाने वाक्यगाऽथ समासगा॥**
**वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि**
**कर्मकर्त्रोर्णमुलि एतद्विलोपे क्विप्समासगा॥**
**धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते।**
**क्यचि वाद्युपमेयासे त्रिलोपे च समासगा॥[7]**

अर्थात् उपमानोपमेययोः भेदे सति धर्मस्य (द्वयोः गुणस्य क्रियायाश्च) समानतायाः वर्णनमुपमालङ्कारो स्यात्। अलङ्कारोऽयं द्विधा विभज्यते पूर्णा लुप्ता च भेदेन। उपमानस्य उपमेयस्य साधारणधर्मस्य उपमावाचकस्य (इव-यथा-वादीनां) यत्र उपादानं भवति, तत्र पूर्णोपमा भवति। यत्र एतेषाम् (उपमान-उपमेय-साधारणधर्म-उपमावाचका-नाम्) एकस्यापि द्वयोस्त्रयाणां वा लोपे लुप्तोपमा भवति। पूर्णोपमा लुप्तोपमा च पुनः श्रौत्यार्थी च भेदेन द्विधा विभज्यते।

**श्रौतीपूर्णोपमा यथा-**

**श्रौती यथेव-वाशब्दा इवार्थो वा वतिर्यदि।।[8]**

यत्र यथा इव वाशब्दः तथा तत्र तस्यैव[9] इत्यनेन सूत्रेण इवार्थे विहितः वतिप्रत्ययः एतेषां प्रयोगो भवति तत्र श्रौतीपूर्णोपमा भवति।

आर्थीपूर्णोपमा यथा-

**आर्थी तुल्यसामानाद्यास्तुल्यार्थो यत्र वा वतिः।।[10]**

यत्र तुल्यसमानादयः शब्दाः तथा तेन तुल्यं क्रियाचेद्वति[11] इत्यनेन सूत्रेण तुल्यार्थको विहितो वतिप्रत्ययः, एतेषां यत्र प्रयोगो भवति तत्र आर्थीपूर्णोपमा भवति। तथा लुप्तोपमापि पूर्ववत् भवति। यथा- श्रौतीलुप्तोपमा आर्थीलुप्तोपमा च। रत्नावल्यां नाटिकायाम् उपमायाः यत्र प्रयोगः कृतः ते श्लोका उदाह्रियन्ते तत्र कथमुपमेति विवेच्यते—

**उपमायाः उदाहरणम्**

**उदयतटान्तरितमियं प्राची सूचयति दिङ्निशानाथम्।**
**परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी।।[12]**

श्लोकोऽयं रत्नावल्याः प्रथमाङ्कस्य मदनमहोत्सवप्रसङ्गे राजा उदयनस्य वासवदत्तया कृतायाः पूजायाः कालस्य अस्ति। अत्र राजा उदयनः वासवदत्तां प्रति वदति। यद्देवि पश्य विरहहेतुना पीतमुखेन हृदयप्रदेशस्थितं पतिं वेदयन्त्याः युवत्याः इव एषा पूर्वदिशा उदयदयाचलप्रदेशस्थितं दिशायाः पतिं चन्द्रं सूचयति इति। अत्र उपमायाः सर्वाण्यपि अङ्गानि विराजन्ते। यथा- यत्र उपमान-उपमेय-समानधर्म-वाचकपदेत्यादीनि चत्वारि अङ्गानि प्राप्यन्ते तत्र पूर्णोपमा भवति। प्रकृतस्थले युवतिः उपमानं वर्तते, पूर्वदिशा उपमेयोऽस्ति पतिरूपधर्मसामान्यधर्मोऽस्ति यः युवत्याः हृदयप्रदेशे तिष्ठति तथा सैव पतिरूपधर्मः पूर्व दिशायाः हृदयरूपे उदयाचले तिष्ठति, चतुर्थम् अङ्गं विद्यते उपमायाः वाचकशब्दः इवादि सोऽपि अत्र अस्ति। अतः स्थलेऽस्मिन् पूर्णोपमा विद्यते।

अपि-

**कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम्।**
**आभाति मकरकेतोः पार्श्वस्तथा चापयष्टिरिव ।।[13]**

अत्र राज्ञः उदयनस्य विदूषकं प्रति उक्तिरस्ति। राजा उदयनः वासवदत्तां दृष्ट्वा तस्याः स्वरूपस्य अवस्थायाः वर्णनं करोति। सा वासवदत्ता सुमनानामिव सुकुमारमूर्तिः व्रतोपवासादिकारणेन क्षीणमध्यभागवती, कामदेवस्य समीपस्थिता धनुर्लता इव भासते इति अत्रापि उपमायाः सर्वाण्यपि अङ्गानि वर्तन्ते। अतः अत्रापि पूर्णोपमा अलङ्कारः विद्यते।

**उत्प्रेक्षालङ्कारः-**

**उत्प्रेक्षायाः लक्षणं यथा-**

**भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना[14]**

तथा च-

**सम्भावनमथोत्प्रेक्षाप्रकृतस्य समेन यत्।[15]**

अर्थात् यत्र उपमेयस्य उपमानरूपेण सम्भावना (उत्कटकोटिक-संशयरूपो ज्ञानभेदः, वितर्कः इति भावः) भवेदिति। तत्र उत्प्रेक्षालङ्कारो भवति। तथा च 'मन्ये शङ्के ध्रुवं प्रायो नूनमिवादयः' इव आदयः उत्प्रेक्षावाचकाः शब्दाः भवन्ति। उपमालङ्कारेऽपि इव शब्दः उपमावाचकत्वात् अत्रापि इव शब्दः विवादास्पदं वर्तते। अत उत्तरयति- उपमालङ्कारे सादृश्यं सिद्धो भवति। तथा च उत्प्रेक्षालङ्कारे सादृश्यं सिद्धो न भवति। अपि तु साध्यं भवति। अतः अनयोः (उपमोत्प्रेक्षयोः) एते (सिद्धसाध्ये) भेदकमिति।

**उत्प्रेक्षालङ्कारस्य रत्नावल्यामुदाहरणम् -**

**स्पृष्टस्त्वयैष दयिते स्मरपूजाव्यापृतेन हस्तेन।**
**उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः।।[16]**

श्लोकोऽयं रत्नावल्याः प्रथमाङ्कस्य मदनमहोत्सवस्य प्रसङ्गस्य अस्ति। अत्र राजा उदयनः वासवदत्तां (स्वराज्ञीं) प्रति कथयति यत् देवि! भवत्याः मकरकेतुपूजायां हस्तेन स्पृष्टोऽयम् अशोकवृक्षः प्रकटीभूतस्य अन्यमृदुतरनूतनपल्लवस्य इव प्रतीयते। अत्र उत्कटकोटिका सम्भावना कृता वर्तते। अतः अत्र उत्प्रेक्षालङ्कारो विद्यते।

अपि च-

**अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम्।**
**यदनेन न सम्प्राप्तः पाणिस्पर्शोत्सवस्तव।।[17]**

अयमपि श्लोकः तत्रैवास्ति। अत्र पुनः राजा उदयनः स्ववासवदत्तायाः सौन्दर्यस्य वर्णनं करोति। यत् कामदेवोऽयम् अवश्यमेव स्वस्य शरीररहितावस्थां दृष्ट्वा धिक् करिष्यति इति। यत् सः (कामदेवः) भवत्याः करस्पर्शस्य आनन्दलाभं न प्राप्तवान्। अत्रापि

मकरकेतोः धिक् करणरूपक्रियायाः उत्कटकोटिका सम्भावना कृतास्ति। अत्रोऽत्र उत्प्रेक्षालङ्कारो विद्यते।

**रूपकालङ्कारस्य लक्षणं यथा-**

**तद्रूपकमभेदो य उपमानोपमेययोः।**[18]

रूपयति एकतां नयतीति रूपकमिति। यत्र काव्ये यदुपमानुपमेययोः अभेदारोपः तदेव रूपकालङ्कारो भवति। अस्य प्रयोगो रत्नावल्यां रूपकालङ्कारस्योदाहरणम् एवं प्रकारेण विद्यते यथा-

**रूपकालङ्कारः-**

**श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।**
**कुतोऽन्यथा स्त्रवत्येष स्वेदच्छद्मामृतद्रवः।।**[19]

भावार्थः- श्लोकोऽयं रत्नावल्याः द्वितीयाङ्कस्य अस्ति, अत्र राजा उदयनः विदूषकं प्रति रत्नावल्याः (सागरिकायाः) शरीरसौन्दर्यस्य वर्णनं कुर्वन् कथयति यत् हे वयस्य इयं (सागरिका =रत्नावली) लक्ष्मी अस्ति इति सत्यम्। अस्याः हस्तोऽपि पारिजातस्य किसलयोऽस्ति। यदि एतन्नास्ति, तर्हि स्वेदव्याजेन अमृतद्रवः कुतः क्षरति इति। यत्र स्पष्टरूपेण उपमानोपमेययोः उल्लेखो भवति। किन्तु यत्र उपमेयः उपमानरूपेण प्रस्तूयते तत्र रूपको भवति। अतः प्रकृतस्थले उपमेयरूपसागरिकायाः लक्ष्मीरूप-उपमानेन सह अभेदसंस्थाप्य उपमेयः उपमानरूपेण कविना प्रस्तूयते इति। अतोऽत्र रूपकालङ्कारो राजते।

अपि च-

**विरम विरम वह्ने मुञ्च धूमानुबन्धं,**
**प्रकटयसि किमुच्चैरर्चिषां चक्रवालम्।**
**विरहहुतभुजाऽहं यो न दग्धः प्रियायाः**
**प्रलयदहनभासा तस्य किं त्वं करोषि।।**[20]

श्लोकोऽयं रत्नावल्याः चतुर्थाङ्कस्य ऐन्द्रजालिकस्य मायाप्रस्तुतिप्रकरणकालस्य विद्यते। प्रसङ्गेऽस्मिन् ऐन्द्रजालिकेन स्वमायया: अग्निप्रज्वलनं क्रियते, तस्मिन् वह्नौ सागरिकां (अस्याः नाटिकायाः नायिका रत्नावली) वह्निना दग्धमानां सागरिकां (रत्नावलीं) दृष्ट्वा राजा उदयनः आत्मानं प्रज्वल्यन्त्यां वह्निज्वालायां समर्पयितुं तत्र (अग्नौ) प्रविश्य अमुं श्लोकं वदति। यत् हे वह्ने झटिति विरतो भव, धूमविस्तारं त्यजतु, उच्चैः उच्चैः अग्निज्वालानां मण्डलं किमर्थं प्रकटयति। अहं (वत्सराजोदयनस्तु) प्रियायाः प्रलयकालीनविरहेणाऽपि न ज्वलितवान् तत् किम् एतादृशेन साधारणवह्निना। अत्रापि रूपकालङ्कारो विलसति।

**स्वभावोक्तिरलङ्कारः-**

लक्षणं यथा-

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्।**[21]

अर्थात् यत्र बालकादेः स्व-स्वाभाविकक्रियायाः अथवा रूपस्य (वर्णस्य तथा अवयवसंस्थानस्य) यथावद् वर्णनं भवति तत्र स्वभावोक्तिरलङ्कारो भवति।

**स्वभावोक्तिरलङ्कारः-**

**नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-**
**मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।**
**पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं,**
**कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः।।**[22]

भावार्थ-श्लोकोऽयं रत्नावलिनाटिकायाः द्वितीयाङ्कस्य वानरागमनप्रसङ्गस्य अस्ति। अत्र सुसङ्गता वानरं दृष्ट्वा वदति। यत् मनुष्यगणनाभावात् लज्जां सन्त्यज्य नपुंसकैः पलायितं वामनोऽयं कञ्चुकिनः चोलकस्य आभ्यन्तरं प्रविशति। तथा अन्तःपुरवासिनः किराताः बहिः गच्छन्ति। तथा ये कुब्जाः सन्ति ते वानरकृतदर्शनभयात् अनुच्चतया शनैःशनैः गच्छन्ति। यत्र मनुष्यादीनां स्वभाविकक्रियायाः वर्णनं क्रियते तत्र स्वभावोक्तिरलङ्कारः भवति। अत्र वानरागमनेन पुरवासीनां क्रियाणां वर्णनेन स्वभावोक्तिरलङ्कारः अस्ति।

अपि-

**पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं,**
**क्रमात्क्रामन्नद्रिद्रुमपुरविभागास्तिरयति ।**
**उपेतः पीनत्वं तदनु भुवनस्येक्षणफलं,**
**तमःसंघातोऽयं हरति हरकण्ठद्युतिकरः।।**[23]

श्लोकोऽयं रत्नावल्याः तृतीयाङ्के राज्ञः उदयनस्य विदूषकेण सह मकरन्दोद्यानप्रवेशकालस्य प्रसङ्गे आयाति। तत्र राजा उदयनः लतोद्यानं प्रविश्य अन्धकारं दृष्ट्वा मित्रविदूषकं प्रति वदति हे मित्र भवान् सत्यमुक्तवान् यत् हरकण्ठद्युतिहरः अयं तमःसमूहः सर्वादौ पूर्वदिशां व्याप्नोति। तथा अनन्तरं सः पश्चिमादिदिशाः क्रमशः उल्लङ्घ्य पर्वत-वृक्ष-नगरादीनां पृथक्-पृथक् विभाजनं कृत्वा पश्चात् विशालकायं सम्भूय भुवनदर्शनस्य फलं नाशयति इति। अत्रापि अन्धकारस्य स्वभाविकी क्रियायाः वर्णनं क्रियते। अतः अत्रापि स्वभावोक्तिरलङ्कारो विलसति।

**अर्थान्तरन्यासालङ्कारः-**

लक्षणं यथा-

**सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।**
**यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा।।**[24]
**'भवेदार्थान्तरन्यासोऽनुषक्तार्थान्तराभिधा'**[25]

यत्र सामान्यस्य वा विशेषस्य समर्थनं तदन्येन (अर्थात् सामान्यस्य विशेषद्वारा अथवा विशेषस्य सामान्यद्वारा) यत् समर्थनं भवति, तत्रार्थान्तरन्यासोऽलङ्कारो भवति, अनेन प्रकारेण सामान्यविशेषाभ्यां समर्थनेन अलङ्कारोऽयं द्विविधो भवति। पुनः इदं समर्थनं साधर्म्यवैधर्म्यभेदेन भवति, अतोऽलङ्कारस्यास्य भेदचतुष्टयं भवतीति।

**अर्थान्तरन्यासालङ्कारस्योदाहरणम्-**

**दुर्वारां कुसुमशरव्यथां वहन्त्या**
**कामिन्या यदभिहितं पुरः सखीनाम्।**
**तद्भूयः शिशुशुकसारिकाभिरुक्तं**
**धन्यानां श्रवणपथातिथित्वमेति।।**[26]

पद्यमिदं रत्नावलिनाटिकायाः द्वितीयाङ्कस्य राज्ञः उदयनस्य विदूषकेण सह कदलीगृहप्रवेश काले विदूषकं प्रति उक्तिरस्ति। अत्र राजा उदयनो ब्रवीति दुष्परिहारां मकरकेतोः (कामदेवस्य) पीडां समुद्वहन्त्या कामिन्या स्वसखीनां समक्षे यत्किमपि कथितं तत् लघुभिः लघुभिः शुकशिशुभिः सारिकाभिश्च पुनः उच्चरितं भवति। तत् पुण्यवतां जनानामेव श्रोत्रविवरविषयो भवति। यत्र सामान्यपदार्थस्य विशेषपदार्थेन अथवा विशेषपदार्थस्य सामान्यपदार्थेन समर्थनं भवति तत्र अर्थान्तरन्यासालङ्कारो भवति। प्रकृतस्थले कामदेवस्य दुःसहवेदनीयपीडारूपस्य सामान्यार्थस्य, पुण्यवतां श्रोत्रविवरविषयरूपविशेषपदार्थेन समं कृतमस्ति। अतोऽत्र अर्थान्तरन्यासो विलसति।

**अतिशयोक्तिः–**

**सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।**[27]

यत्र काव्ये अध्यवसायस्य सिद्धौ सञ्जाते सति अतिशयोक्तिनामकोऽलङ्कारो भवति।

**अतिशयोक्तिरलङ्कारस्योदाहरणम्–**

**दृष्टिं रूषा क्षिपसि भामिनि यद्यपीमां**
**स्निग्धेयमेष्यति तथापि न रुक्षभावम्**
**त्यक्त्वा त्वरां व्रज पदस्खलितैरयं ते,**
**खेदं करिष्यति गुरूर्नितरां नितम्बः।।**[28]
**दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विष–**
**श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम्।**
**शिरांसि चलितानि विस्मयवशाद् ध्रुवं वेधसा,**
**विधाय ललनां जगत्त्रयललामभूतामिमाम्।।**[29]

पद्यमिदं राज्ञः उदयनस्य कदलीगृहप्रवेशस्य कालस्य अस्ति, राजा वत्सराजोदयनः कदलीगृहं प्रविश्य सागरिकायाः (रत्नावल्याः) रूपसौन्दर्यं दृष्ट्वा विदूषकं प्रति ब्रवीति भो वयस्य ! रत्नावलिरूपत्रिभुवनस्य अस्याः अद्वितीयसुन्दर्याः रचनां कृत्वा विधाता अपि विस्मयवशात् अवश्यमेव स्वनिवासभूतपद्मदलकान्त्याः लज्जयन्त्याः स्वचक्षुषोः विस्फारणं कुर्यात। तथा स्वचतुर्भिः मुखैः एकेन साधुवादं ध्रुवमेव कुर्यात्। तथा रत्नावल्याः प्रशंसायां शिरांसि कम्पितानि इति अवश्यमेव स्यात्।

**काव्यलिङ्गालङ्कारः–**

लक्षणं यथा–

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता।**[30]

यत्र कविः प्रस्तुतस्य अर्थस्य उपपादनाय हेतोः (लिङ्गस्य) कथनं करोति। तत्र काव्यलिङ्गालङ्कारो भवति। इदं हेतुकथनं वाक्यार्थरूपेण वा पदार्थरूपेण वा भवति। अर्थात् यत्र कस्यचित् पदार्थस्य हेतुरूपेण विशेषणानि प्रस्तूयन्ते, साभिप्रायविशेषणैः काव्यलिङ्गालङ्कारो भवति। अस्य प्रयोगो रत्नावल्यां नाटिकायां यथा–

काव्यलिङ्ग–अलङ्कारः–

**प्रसीदेति ब्रूयामिदमसति कोपे न घटते,**
**करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः।**
**न मे दोषोऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा,**
**किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे।।**[31]

अत्र पद्ये अप्रसन्नरूपकार्यस्य क्रोधरूपकारणस्य सत्वात् काव्यलिङ्गनामकोऽलङ्कारो विद्यते।

तथा च–

**विवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा–**
**दविस्पष्टां दृष्टिं तिरयतितरां बाष्पपटलैः।**
**स्खलद्वर्णां वाणीं जडयतितरां गद्गदतया,**
**जरायाः साहाय्यं मम हि परितोषोऽद्य कुरुते ।।**[32]

पद्येऽस्मिन्नपि कम्पनादिरूपकार्यस्य वृद्धत्वरूपकारणस्य कथनात् काव्यलिङ्ग–नामकोऽलङ्कारो राजते।

**समासोक्तिः–**

**समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः।**
**व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः।।**[33]

यस्मिन् काव्ये प्रस्तुताप्रस्तुतयोः समानरूपेणान्वीयमानैः कार्यलिङ्गविशेषणैः प्रस्तुते अप्रस्तुतस्य समारोपो भवति तत्र समासोक्तिरलङ्कारो भवति। तस्योदाहरणं यथा–

**यातोऽस्मि पद्मनयने समयो ममैष,**
**सुप्ता मयैव भवती प्रतिबोधनीया।**
**प्रत्यायनामयमितीव सरोरुहिण्याः,**
**सूर्योऽस्तमस्तकनिविष्टकरः करोति ।।**[34]

पद्येऽस्मिन् कमलिन्याः नायिकारूपे तथा सूर्यस्य नायकरूपे आरोपः कृतो विद्यते अतोऽत्र समासोक्तिरलङ्कारो विद्यते।

तथा च–

**आरुह्य शैलशिखरं त्वद्वदनापहृतकान्तिसर्वस्वः।**
**प्रतिकर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ।।**[35]

अत्रापि समासोक्तीराजते।

**दृष्टान्तालङ्कारः–**

**दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्।**[36]

यत्र काव्ये समानधर्मेण युक्तोपमानोपमेयभावरूपयोः द्वयोः वाक्ययोः बिम्बप्रतिबिम्बभावस्य प्रतिपादनं भवति। तत्र दृष्टान्तालङ्कारो भवति। तस्योदाहरणमधः प्रदीयते। यथा–

**तीव्रः स्मरसंतापो न तथादौ बाधते यथासन्ने।**
**तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः।।**[37]

अत्र उग्रकामसन्ताप–कालीनस्य मनसः पीडितावस्थायाः समागम–कालीनस्य वर्षाकालस्य मनसः दृष्टान्तस्य कथनात् दृष्टान्तनामकोऽलङ्कारोऽस्ति।

**प्रतीपालङ्कारः–**

**प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम्।**
**निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते।।**[38]

यत्र काव्ये प्रसिद्धस्य उपमानस्य उपमेयरूपेण कल्पना क्रियते, अथवा तं (उपमानम्) व्यर्थं कथ्यते, तत्र प्रतीपालङ्कारो भवति। तस्योदाहरणमधः प्रदीयते।

**कि पद्मस्य रुचं न हन्ति नयनानन्दं विधत्ते न किं,**
**वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।**
**वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो,**
**दर्पः स्यादमृतेन चेदिह तदप्येवास्ति बिम्बाधरे ॥**[39]

अत्र मुखरूपोपमेयस्य कमलरूपोपमानस्य रूपे कथनं विद्यते अतः प्रतीपालङ्कारो राजते।

**असङ्गतिरलङ्कारः-**

**कार्यकारणयोर्भिन्नदेशतायमसङ्गतिः।**[40]

यस्मिन् काव्ये कार्यकारणयोः देशस्य भिन्नतायाः वर्णनं भवति, तत्र असङ्गतिरलङ्कारो भवति। तस्योदाहरणं यथा-

**मम कण्ठगताः प्राणाः पाशे कण्ठगते तव।**
**अतः स्वार्थ प्रयत्नोऽयं त्यज्यतां साहसं प्रिये॥**[41]

अत्र कार्यकारणयोः भिन्नदेशतयोर्निबन्धनादसङ्गतिरलङ्कारो वर्तते।

**परिकरालङ्कारः-**

**उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः।**[42]

यत्र उक्तानि वाक्यानि विशेषणाभिप्रायविशेषेण प्रयुक्तानि भवन्ति तत्र परिकरनामकोऽलङ्कारो भवति। तद्यथा-

**प्रणमत चरणाविन्द्रस्येन्द्रजालकपिनद्धनाम्नः ।**
**तथैव शम्बरस्य मायासुप्रतिष्ठितयशसः ॥**[43]

अत्र उक्तानि वाक्यानि विशेषणाभिप्रायविशेषेण प्रयुक्तानि सन्ति अतः अत्र परिकरनामकोऽलङ्कारो विद्यते।

**विरोधाभासालङ्कारः-**

**जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः।**
**क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः।।**
**विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः।।**[44]

जात्यादिना (जातिगुणक्रियाद्रव्यादिना) सह यो परस्परं विरोधो भवति सः चतुर्विधात्मको भवति। यत्र पूर्वोक्तस्य विरोधस्य वर्णनं भवति तत्र विरोधाभासालङ्कारो भवति। यथा-

**किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः।**
**मध्याह्ने प्रदोषो दर्श्यतां दह्याज्ञसिम् ॥**[45]

अत्र पृथिव्यां चन्द्रस्य दर्शनरूपविरोधस्य कथनादत्र विरोधाभासालङ्कारो विद्यते।

**उदात्तालङ्कारः-**

**लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते।**
**यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्।।**[46]

यत्र काव्ये लोकोत्तरसम्पत्तेः वर्णनं क्रियते तत्र उदात्तनामकोऽलङ्कारो भवति। यथा-कस्यचिन्महापुरुषस्य चरित्रस्य वर्णनं कस्यचिद्वस्तुनः अङ्गं स्यात् तत्रापि उदात्तालङ्कारो भवति। तद्यथा-

**आक्षिप्तो जयकुञ्जरेण तुरगान्निर्वर्णयन्वल्लभान्,**
**सङ्गीतध्वनिना हृतः क्षितिभृतां गोष्ठीषु तिष्ठन्क्षणम्।**
**सद्यो विस्मृतसिंहलेन्द्रविभवः कक्षाप्रदेशेऽप्यहो,**
**द्वाःस्थेनैव कुतूहलेन महता ग्राम्यो यथाहं कृतः।।**[47]

श्लोकेऽस्मिन् वसुभूतिः राज्ञः उदयनस्य दिव्यनगरीं दृष्ट्वा सर्वं विस्मृतवान् अतोऽत्र लोकोत्तरसम्पत्तेः वर्णनात् उदात्तनामकोऽलङ्कारो विद्यते।

## पादटिप्पणी

1. काव्यालङ्कारः 1.36
2. काव्यालङ्कारः- 5.66
3. काव्यालङ्कारः- 2.85
4. काव्यादर्शः- 2.1
5. काव्यप्रकाशः- 8.67
6. रसगङ्गाधरः पृ. सं.-248
7. काव्यप्रकाशः- 10.87.90
8. साहित्यदर्णम् 10.16
9. अष्टाध्यायी 5.1.116
10. साहित्यदर्णम् 10.16
11. अष्टाध्यायी 5.1.115
12. रत्नावली 1.24
13. रत्नावली 1.19
14. साहित्यदर्पणः- 10/40
15. काव्यप्रकाशः- 10/92
16. रत्नावली 1.21
17. रत्नावली 1.22
18. काव्यप्रकाशः- 10.93
19. रत्नावली 2.18
20. रत्नावली 4.16
21. काव्यप्रकाशः-10/111
22. रत्नावली 2.3
23. रत्नावली 3.7
24. काव्यप्रकाशः 10-109
25. चन्द्रालोकः-5/68
26. रत्नावली 2.8
27. साहित्यदर्पणः10.46
28. रत्नावली 2.17
29. रत्नावली 2.16
30. काव्यप्रकाशः 10.114
31. रत्नावली 2.20
32. रत्नावली 4.13
33. साहित्यदर्पणः 10.56
34. रत्नावली 3.6
35. रत्नावली 3.12
36. साहित्यदर्पणः 10.50
37. रत्नावली 3.10
38. साहित्यदर्पणः 10.87
39. रत्नावली 3.13
40. साहित्यदर्पणः 10.69
41. रत्नावली 3.16
42. साहित्यदर्पणः 10.57
43. रत्नावली 4.7
44. साहित्यदर्पणः 10.68
45. रत्नावली 4.8
46. साहित्यदर्पणः 10.94
47. रत्नावली 4.12

ISSN 2348-7828

# नारायणभट्टकृतप्रक्रियासर्वस्वे तद्धितखण्डस्य विशेषता

सोनाली साहा

**शोधसार:**

शब्दसंस्काराय पाणिनि-कात्यायन-पातञ्जलिनामकैः त्रिभिः मुनिभिः यद्यद् कृतम्, तत्सर्वम् अद्यत्वे पाणिनीयव्याकरणपदेन व्यवह्रियते। तत्र भगवान् पाणिनिः अष्टाध्यायी सूत्राणि, तच्छेषतया गणपाठ-धातुपाठ-शिक्षाप्रभृतीनि च प्रणीतानि। व्याकरणशास्त्रेणैव तद्यूपायेन शब्दाः विज्ञातुं शक्याः। व्याकरणशास्त्रस्यापि मूलस्रोतः भगवान् पाणिनिकृता अष्टाध्यायी। अतो मूलं विहाय नैवापर उपायः स्वीकर्तुं शक्यः। तदर्थं मूलस्य अवबोधनाय प्राचीनकाले वामनजयादित्यौ काशिका, जिनेन्द्रबुद्धिः न्यासः, हरदत्तमिश्रः पदमञ्जरी इत्यादि ग्रन्थान् विरच्य अस्य प्रचारप्रसारश्च कृतवन्तः। तदन्तरं महर्षिपतञ्जलिकृतस्य महाभाष्यस्य व्याख्या प्रदीपोद्यतः, शब्दकौस्तुभादिक्रमेण व्याकरणाध्ययनस्य परम्पारा विस्तृता अभवत्। ततःऌप्रक्रियाग्रन्थस्य आविर्भावः सञ्जातः। प्रक्रियाग्रन्थेषु कौमुदीपरम्परायां सिद्धान्तकोमुदी, प्रौढमनोरमा, शब्दरत्नम्, तत्वबोधिनी, बालमनोरमादि ग्रन्थाः प्रचलिताः वर्तन्ते। धर्मकीर्तेः रूपावतारः, रामचन्द्रेस्य प्रक्रियाकौमुदी, नारायणभट्टस्य प्रक्रियासर्वस्वं तथा शेषकृष्णस्य प्रक्रियाकौमुदीप्रकाश इत्यादिभिः प्रक्रिया ग्रन्थैः सूत्राणां साक्षात्प्रयोगः द्रष्टुं शक्यते। एतेषां प्रक्रियाग्रन्थानां महत्त्वं शिष्टप्रयोगादिभिः ज्ञेयमिति काशिकावृत्तौ तद्धितप्रकरणे कथितम्। अष्टाध्याय्यां चतुर्थपञ्चमाध्यायपर्यन्तं तद्धितप्रत्ययानां निरूपणमस्ति। प्रक्रियाग्रन्थेषु अन्यतमेषु नारायणभट्टकृतप्रक्रियासर्वस्वनामकेग्रन्थे चतुर्थखण्डः तद्धितखण्ड इति नाम्न ख्याता। तत्र सूत्राणाम् उदाहरणानि श्लोकरूपेण रचितानि सन्ति। तेषां विशिष्टता अस्मिन् शोधलेखे प्रस्तूयते।

व्याकरणं नाम भाषायाः सुष्ठु प्रयोगाय पूर्वाचार्यैः प्रणीतं शब्दानुशासनम्। लोकभाषा वेदभाषा चेति भाषा द्विविधा। तत्र लोके मनुष्यैः स्वकीयमभिप्रायमावेदयितुं या आद्रियते सा लोकभाषेत्युच्यते। या च चतुर्मुखमुखाम्भोजादुदिता वेदचतुष्टयी कर्तव्याकर्तव्यबोधिका प्रमाणतया परिलसति सा वेदभाषेत्युच्यते। वेदस्य षडाङ्गानि सन्ति। तथाचोक्तं-

''**शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा कल्पश्चेति षडङ्गानि**''- इति।

षट्स्वङ्गेषु प्रधानं व्याकरणम्। यदाहुः-

''**मुखं व्याकरणं प्रोक्तं ज्योतिषं चक्षुषी उभे**''। इत्यादिना।

इदं च-

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥**[1]

इत्युक्तचतुर्दशविद्यास्वन्यतमम्। व्याकरणशास्त्रप्रणेतारश्चेन्द्रादयोऽष्टौ। तथा च श्रुयते-

''**इन्द्रश्चन्द्रः काशकृत्स्नापिशाली शाकटायनः।**
**पाणिन्यामरजैनेन्द्रा इत्यष्टावादिशाब्दिकाः**''॥ इति।

ऐन्द्रादिव्याकरणेषु पाणिनीयमेव ललितं सुखग्राह्यं च। अत एवास्य व्याकरणान्तरापेक्षया प्राधान्यम्।

भगवान् पाणिनिरष्टभिरध्यायैर्व्याकरणसूत्रं ततान। सूत्रेणानुक्तानां केषाञ्चित् पदानां संग्रहार्थं वररुचिर्वार्तिकं कृतवान्। ततो भगवान् पतञ्जलिः पाणिनीयसूत्राणां वार्तिकोपसंस्कृतानां भाष्यं चकार। सूत्रवार्तिकयोरनुक्तानां संग्रहार्थं स्वमपीष्टीः प्रणीतवान्। पाणिनीयसूत्रे च वाक्यार्थज्ञानं प्रति पदार्थज्ञानं हेतुः, पदार्थज्ञानं प्रति संज्ञाशास्त्रं परिभाषाशास्त्रञ्च कारणमिति प्रथमं संज्ञापरिभाषे उच्येते, ततः प्रत्ययाः, ततः प्रक्तियेति क्रमः। संज्ञापरिभाषयोर्मध्ये 'न धातुलोप आर्धधातुके'[2], 'क्ङिति च[3]' इत्यादिषु बृद्धिनिषेधसूत्राणामपि निवेशनं गुणबृद्धिपदानुवृत्तिसौकर्यार्थं प्रसङ्गादापतितम्। किञ्च,

''अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्''।

इत्याद्युक्तसूत्रलक्षणसंग्रहार्थं च। सूत्रक्रममनुसृत्यैव भाष्यं प्रवृत्तम्, यञ्च प्रदीपोद्योतादिव्याख्याभिः समलङ्कृतम्।

अत्र सूत्रक्रममनुसृत्य विरचितानां कासांचिद् व्याख्यानामपि संक्षेपतः स्वरूपं निरूप्यते। तत्र प्रथमा वामनजयादित्याभ्यां विरचिता काशिकावृत्तिर्नाम, द्वितीया व्याकरणदीपिका नाम कौण्डभट्टविरचिता, तृतीया धरणीधरविरचिता वैयाकरणसर्वस्वनाम्नी, चतुर्थी पुनः भट्टोजिदीक्षितप्रणीता शब्दकौस्तुभाभिख्या, पञ्चमी च श्रीमतान्नंभट्टेन विरचिता। सेयमन्नंभट्टीया वृत्तिमिताक्षरेति चाख्यायते। षष्टी तु पाणिनीयसूत्रलघुविवृत्तिर्नाम ग्रहीतृसौकर्याय श्लोकरूपा विरचिता।

अस्ति च निखिलतन्त्रनिष्णातेन श्रीमता माधवाचार्येण विरचिता कापि व्याख्या धातुवृत्तिर्नाम, यत्र किल धातुपाठानुसारेण क्रियारूपसाधनाय तत्र तत्र पाणिनीयसूत्राण्यादाय व्याख्यातानि।

विभिन्नप्रदेशेषु विद्यमानानां प्रक्तियोपयोगिनां सूत्राणामेकत्र निवेशनं छात्राणां ग्रहणाय समुचितं मन्यमानेन रामचन्द्राचार्येण विरचिता व्याख्या प्रक्रियाकौमुदी नाम। अपरा च तथा रूपावतारनाम्ना प्रसिद्धा धर्मकीर्ति विरचिता विराजते। उभयमपि यद्यपि रूपसिद्ध्युपयोगि सूत्रक्रमानु-

ISSN 2348-7828

सारणैव प्रवृत्तमथाप्युभयत्र प्रथितलौकिकशब्दसाधनोपयुक्तान्येव सूत्राण्यादृतानि न सर्वाणि। इदमेव च कारणं प्रक्रियासर्वस्वस्य आविर्भावे। प्रक्रियासर्वस्वं च देवनारायणधरणिपतेराज्ञया संज्ञादिविंशतिखण्डैः प्रणीतमिति।

**वृत्तौ चारु न रूपसिद्धिकथनं रूपावतारे पुनः**

**कौमुद्यादिषु चात्र सूत्रमखिलं नास्त्येव तस्मात् त्वया।**

रूपानीतिसमस्तसूत्रसहितं स्पष्टं मितं प्रक्रियासर्वस्वाभिहितं निबन्धनमिदं कार्यं मदुक्ताध्वना॥

**इह संज्ञापरिभाषासन्धिकृत्तद्धितसमासाश्च।**

**स्त्रीप्रत्ययाः सुबर्थाः सुपां विधिश्चात्मनेपदविभागः॥**

**तिङपि च लार्थविशेषाः सनन्तयङ्यङ्लुकश्च सुब्धातुः।**

**न्यायो धातुरुणादिश्छान्दसमिति सन्तु विंशतिः खण्डाः।।**[4]

इति पद्यैः स्फुटं प्रतीयते।

एतादृशस्य प्रक्रियासर्वस्वस्य संज्ञापरिभाषासन्धिकृत्खण्डाः प्रागस्यामनन्तशयनग्रन्थाबल्यां प्रकाशिता। अनन्तरं तृतीयभागः तद्धितखण्डनाम्ना प्रकाशिता। समनन्तराः समासादिछान्दसान्ताः पञ्चदशखण्डाः क्रमेण प्राकाश्यं नीयेरन्। तद्धिताख्येऽस्मिन् खण्डे प्रथमादिसप्तविभक्त्यन्तात् तिङन्ताच्च प्रत्ययाः विधीयन्ते। प्रत्ययास्तावत् केचित् धातोः केऽपि सुप्तिङन्तात् केचन प्रातिपदिकाच्च भवन्ति। तत्र धातोर्विधीयमानास्तिङ्भिन्नाः प्रत्ययाः कृत्, प्रातिपदिकाद् विधीयमानाः सुपः, सुबन्तात् तिङन्ताच्च विधीयमानास्तद्धिता इति विवेकः। अत्र 'सास्य देवता[5]' इत्यादिभिः प्रथमान्तात्, 'तद्वहति रथ-युग-प्रासङ्गम्[6]' इत्यादिभिर्द्वितीयान्तात्, 'तेन रक्तं रागाद्[7]', इत्यादिभिस्तृतीयान्तात्, 'तस्मै हितम्[8]' इत्यादिभिश्चतुर्थ्यन्तात्, 'तत आगतः[9]' इत्यादिभिः पञ्चम्यन्तात्, 'तस्यापत्यम्[10]' इत्यादिभिः षष्ठ्यन्तात्, 'तदस्मै दीयते[11]' इत्यादिभिः सप्तम्यन्तात्, 'ईषदसमाप्तौ कल्पब्-देश्य-देशीयरः[12]' इत्यादिभिस्तिङन्ताच्च प्रत्ययविधिः। विधीयमानानां प्रत्ययानामनुक्रमणी चान्ते निवेशिता। एकस्यैव प्रत्ययस्य बहुष्वर्थेषु विधानदर्शनादुदाहणानुक्रमण्या स्फुटमर्था न प्रतीयेरन्निति ग्रहीतृसौकर्याय तदर्थाः सङ्कलय्य निरूप्यन्ते-

**'अप्रत्ययो मतः साम्नः प्रागर्थेषु तु दीव्यतेः।**

**लोम्नोऽपत्येषु बहुषु त्वकारप्रत्ययो मतः'॥**

**'तथा साम्प्रतिकेऽर्थेऽपि मध्यशब्दान्मतो ह्ययम्।**

**अमावस्यापदात् तद्वत् जातार्थेऽपि स इष्यते'॥**

**'कुत्सितेऽर्थेऽनुकम्पायां स्वार्थे चाप्यकजिष्यते।**

**अव्ययानां सर्वनाम्नामकच् प्राक् टेरितीरितम्'॥**

**'अल्पे ह्रस्वे च नीतौ च तद्युक्तात् संस्मृतो ह्यसौ।**

**अजिष्ट अर्शादिभ्यस्तदस्यास्त्यर्थ एव हि'॥**

**'अञ् स्याद् गोत्रे बिदादिभ्यस्त्वपत्ये हि महाकुलात्।**

**क्षत्रियाज्जनपदादप्यपत्यार्थे विधीयते'॥**[13] **इत्यादीनि।**

एतादृशस्यास्य प्रक्रियासर्वस्वस्य कर्ता मातृदत्ततनूजो नारायणभट्टपादः केरलदेशस्थनिलानद्युत्तरवर्त्युपरिनवग्रामवास्तव्य-

'भूखण्डे केरलाख्ये सरितमिह निलामुत्तरेणैव नावाक्षेत्रे गव्यूतिमात्रे पुनरुपरिनवग्रामनाम्नि स्वश्माम्नि।

धर्मिष्ठाद् भट्टतन्त्राद्यखिलमतपटोर्मातृदत्ताद् द्विजेन्द्राज्जातो नारायणाख्यो निरबहदतुलां देवनारायणाज्ञाम्'॥[14] इति।

एवं नारायणभट्टः प्रक्रियासर्वस्वस्य तद्धितखण्डे अपत्याधिकारप्रकरणात् आरभ्य स्वार्थिकप्रकरणं यावद् निरूपितवान्। सूत्राणां व्याख्यावसरे श्लोकानां संरचना 'प्रक्रियासर्वस्वम्' इति ग्रन्थस्य विशिष्टता। श्लोकानां समावेशः सूत्रस्थितोदाहरणानां संस्मरणे उपयोगिन इति प्रतिभाति। ग्रन्थेऽस्मिन् विशालकाय तद्धितखण्डस्य संक्षेपता प्रतिपादिता। अयमेव अस्य ग्रन्थस्य महत्त्वम्। ग्रन्थकारः ग्रन्थान्ते स्वयमेव उक्तवान्-

**संक्षेपातिशयेऽपि वाह्यबहुताहेतोऽभूद् विस्तरः**

**स्पष्टत्वेऽपि कृतेः स्वभावगहना भागा मनागस्फुटाः।**

**एवं व्यक्तिमियान् पदार्थ इयता ग्रन्थेन यातोऽयमित्येवं**

**यो विमृशेत् स एव कलयेदस्मिन् निबन्धे गुणान्॥** इति।

प्रक्रियासर्वस्वं धातुकाव्यम्, अपाणिनीयप्रामाण्यसाधनमिति व्याकरणसम्बन्धिनी तिस्रः कृतयः, मानमेयोदय इति पूर्वमीमांसाग्रन्थस्य मानपरिच्छेदश्च इत्येते नारायणभट्टपादस्य शास्त्रग्रन्थाः। तत्रापि भट्टपादकृतिषु सुतरां प्राधान्यमावहन्ती कृतिरिति। पण्डितैरेककण्ठेन पुरस्क्रियमाणः शास्त्रीयग्रन्थास्तु पाणिनीयसूत्राणां सम्पूर्णव्याख्यानामकं प्रक्रियासर्वस्वमेव। वासुदेवभट्टाख्येन केनचित् पण्डितेन रचितं सर्गपञ्चकपरिमितं वासुदेवविजयकाव्यम् पाणिनीयसूत्राण्युदाहरति। धातुपाठगता धातवो नोदाहृताः, प्रक्रियासर्वस्वे अपाणिनीयाः बहवः प्रयोगाः साधुकृताः।

तद्धितखण्डे सर्वपुरुषाभ्यां णढञौ[15] इत्येतत्सूत्रसम्बन्धि पुरुषाद्धितवधविकारावयवसमुहतेन कृतेषु ढञ् वाच्यः इति वार्तिकं भट्टपादो राक्षसवर्णनपरेणैकेन पद्यैनैवमुदाहरति पूर्णरूपेण-

**नौ पौरुषेयमिच्छति, पौरुषेये**

**सक्तो वधे, पिशतमन्ति च पौरुषेयम्।**

**द्राकपौरुषेयगलभिन्न च वाचमपौरुषेयौजेय्यो,**

**विनिन्दति च वाचमपौरुषेयीम्॥[16]**

इष्टादिभ्यश्च[17] इतीष्टादिगणगतशब्देभ्यो विहितम् इनिप्रत्ययमुदाहरति भट्टपादो देवनारायणस्तुतिपराभ्यां द्वाभ्यां पद्याभ्याम्–

इष्टी सर्वमखे, श्रुती श्रुतिशते, तत्वे गृही, त्यर्चिती, गोविन्दे, पठिती तथानुपठितीशास्त्रेषु सर्वेष्वपि, शत्रौव्याकुलिनी, तथा खलजने दूरं निराकृत्यसौ मित्रेषूपकृती, विभाति नृपतिर्दीनेषु संरक्षिती॥

आम्नाती निगमे ग्रन्थेषु गणिती, धर्मेऽवधारीत्यसावाचारे परिरक्षिती, निकथिती श्रेयस्सु नित्यं नर्णिाम्। न्यायेष्वप्यकल्पिती, परिकलीत्युच्चैः कलाकौशले, वैधे सङ्कलिनी, विराजति सुधीराजेविती केशवे॥[18] इति

संस्कृतव्याकरणशास्त्रस्य प्रयोदिकपरिज्ञानमात्रे तात्पर्यं, वादग्रन्थेषु वैमुख्यं च वहतां तु प्रक्रियासर्वस्ववत्प्रयोजनप्रदः सूत्रव्याख्यानो ग्रन्थः नास्त्येव। विषयेऽस्मिन् काशिकामपि सरस्वतीकण्ठाभरणमप्यपेक्ष्य समुन्नतैव प्रक्रियासर्वस्वस्य स्थितिः, काशिकायां विषयक्रमदीक्षाभावात् शब्दनिष्पादनं क्लेशकरम्। सरस्वतीकण्ठाभरणकर्त्रा तु पाणिनीयसूत्राणां प्रत्यभिज्ञा यथा न भवेत्तथा सूत्राणि रचितानि, प्रक्रियासर्वस्वे नैतादृशं वैषम्यम्।

पाणिनीयसूत्राणि काशिकायां प्रक्रियाकौमुद्यां रूपावतारादिषु व्याख्याग्रन्थेषु यथाक्रममुद्धृतानि। पाणिनीयसूत्रेषु स्वेच्छया भेदान् विधाय व्याख्यानं कुर्वतः सरस्वतीकण्ठाभरणनाम्नः व्याकरणग्रन्थस्य तद्व्याख्याया दण्डनाथनारायणरचिताया हृदयहारिण्याख्यायाश्च केरलेषु सुप्रचार आसीत्। सरस्वतीकण्ठाभरणं नारायमभट्टपादः यद्यपि भूयिष्ठं उपजीवति। तथापि प्रक्रियासर्वस्वे तस्य ग्रन्थस्य नाम नोद्धरति।

भोजराजस्य सरस्वतीकण्ठाभरणं, क्षीरस्वामिनो निपातव्यायवृत्तिः, वर्धमानस्य गणरत्नमहोदधिरित्येतान् ग्रन्थान् प्रमाणीकृत्य नारायण-भट्टपादेन गणाः प्रपञ्चिताः प्रक्रियासर्वस्वे।

अष्टाध्यायीगतं पाठक्रममनुसृत्य सूत्राणि व्याचक्षते महाभाष्य-काशिकावृत्तिप्रभृतयो ग्रन्थाः। प्रक्रियाकौमुदी, सिद्धान्तकौमुदी इत्यादयो ग्रन्थास्तु विषयविभागमनुसृत्य अष्टाध्यायीगतानि सूत्राणि यथोचितं क्रममाश्रित्य पुनः संविधानमारचय्य व्याचक्षते। प्रक्रियासर्वस्वे सूत्राणां चयनमष्टाध्यायीक्रमं दूरतः परिहृत्य विषयक्रममात्रं तु परस्कृतकृतम्। अथापि यत्र यत्र शक्यते तत्राष्टाध्यायीसूत्रक्रमः यथास्थितं संरक्षितश्च। एवमेव प्रक्रियासर्वस्वस्य बहवः विशेषताः वर्तन्ते। अतः व्याकरणशास्त्रे प्रक्रियाग्न्थेषु प्रक्रियासर्वस्वमपि महत्त्वपूर्णम् आवहति इत्यत्र न संशयः।

## परिशीलित ग्रन्थसूची


1. प्रक्रियासर्वस्वम् (तृतीयो भागः)– नारायणभट्टः अनन्तशयने राजकीयमुद्रणयन्त्रालये तदध्यक्षेण मुद्रयित्वा प्रकाशितः, 1947।
2. अष्टाध्यायी–भगवान् पाणिनिः, सम्पादकः– प्रो. गोपालदत्तपाण्डेयः, चौखम्बा सुरभारती प्रकाशन, वाराणसी, 2011।
3. वैयाकरणसिद्धान्तकौमुदी (तद्धित प्रकरणम्)– श्रीमद्भट्टोजिदीक्षितः व्याख्याकारः– श्रीगोविन्दाचार्यः, चौखम्बा सुरभारती प्रकाशन, वाराणसी, 2017।
4. अष्टाध्यायी सहजबोध (चतुर्थ भाग)– डा.पुष्पा दीक्षित, प्रतिभा प्रकाशन, दिल्ली,2016।
5. काशिका– पाणिनीयव्याकरणसूत्रवृत्तिः– पण्डितराजवामनजयादित्य–विरचिता, काश्यां मेडिकेलहालनामके यन्त्रालये मुद्रिता, 1898।


## पादटिप्पणी

1. वि.पु.3.3.28
2. अष्टाध्यायी–1.1.4
3. अष्टाध्यायी–1.1.5
4. प्रक्रियासर्वस्वं भूमिका
5. अष्टाध्यायी–4.2.24
6. अष्टाध्यायी–4.4.76
7. अष्टाध्यायी–4.2.1
8. अष्टाध्यायी–2.1.5
9. अष्टाध्यायी–4.3.74
10. अष्टाध्यायी–4.1.92
11. अष्टाध्यायी–4.4.66
12. अष्टाध्यायी–5.3.67
13. प्रक्रियासर्वस्वं भूमिका
14. प्रक्रियासर्वस्वं भूमिका
15. अष्टा.5.1.10
16. प्रक्रियासर्वस्वम्
17. अष्टा.5.2.88
18. प्रक्रियासर्वस्वम्


National Sanskrit University

Ph.D Research Scholar

Dept.-Vyakarana

ISSN 2348-7828

# संस्कृतशिक्षणे गृहकार्यस्य स्वरूपम्

डॉ. सत्यदेवः

**शोधसारः**

आधुनिके युगे ज्ञानस्य प्रधानता अस्ति। नूतनं चिन्तनं, नूतनं विचारं, नूतनां सूचनां वा यः कोऽपि ददाति तस्य लोकप्रचारः सूचनाप्रौद्योगिकीद्वारा अनुदिनं भवति एव । अतः न केवलं विशेषज्ञाः, शिक्षाविदः वा अपितु प्रत्येकम् अपि मानवः नूतनं कर्तुं, स्रष्टुम् अन्वेष्टुं च स्पर्धाभावेन प्रवृत्तः अस्ति । अतः ज्ञानयुगं नाम सूचना-प्रधान-युगम् उत स्पर्धात्मक-युगम् उतस्वित् प्राविधिक-युगम् इत्येवं संकल्पनेन अपि अतिशयः नास्ति । एतस्मिन् प्राविधिके युगे शिक्षाक्षेत्रे विधीनां प्रविधीनां च प्रभावस्य साक्षिणः न केवलं विद्यालयेषु, महाविद्यालयेषु, विश्वविद्यालयेषु अधीयानः छात्राः सन्ति अपितु, शिक्षकाः, अभिभावकः समग्रः समाजः च अपि अस्ति। अतः समसामयिकदृशा प्रवर्तमानस्य संस्कृतशिक्षणस्य क्षेत्रविस्तृतिमुद्दिश्य छात्रेभ्यः अभ्यासदृशा उत गृहकार्यदृशा अनेके अवसराः सम्भवन्ति।

**भूमिका**

शिक्षाक्षेत्रस्य व्यापकतायाः परिचर्चनस्य सीमाङ्कनं कृत्वा विशिष्य संस्कृतक्षेत्रे अपि स्पर्धा, नूतनं सृजनम्, नूतना पद्धतिः, नूतनः विधिः, नवः प्रविधिः च इत्येते अंशाः आगच्छेयुः एतदुद्दिश्य अत्र लेखनम् आवहितम्।

किं नाम संस्कृतशिक्षणम् ?

'गृहकार्यम्' इत्यनेन कः अभिप्रायः ?

आधुनिककाले संस्कृतशिक्षणे गृहकार्यस्य स्वरूपं लक्षणानि च कानि ?

संस्कृतशिक्षणे गृहकार्यस्य स्वरूपे गुणवत्तानयनाय किं करणीयम् ?

संस्कृतं नाम भाषा । वर्णः, पदम्, वाक्यम्, सन्धिः, समासः, कारकम्, विभक्तिः, प्रत्ययादयः च भाषायाः तत्त्वानि। भाषिकतत्त्वानां शिक्षणंसंस्कृतशिक्षणम्इति।[1]

गृहकार्यंनाम अभ्यासः। पठितस्य पाठितस्य वा विषयस्य दृढीकरणोद्देश्येन विषयसम्बद्धं प्रदत्तं कार्यम् गृहकार्यम् इति।[2]

आधुनिककाले संस्कृतशिक्षणे हिमाचलप्रदेशस्य स्कूलशिक्षा-बोर्डद्वारा माध्यमिकस्तरे, उच्चमाध्यमिकस्तरे वरिष्ठमाध्यमिकस्तरे च प्रचलितेषु 'रुचिरा-शेमुषी-शाश्वती-भास्वती' इत्यादिषुसंस्कृतपाठ्य-पुस्तकेषुगृहकार्यस्यपरिशीलितंस्वरूपं लक्षणं च सारांशरूपेण यदि पश्यामः तर्हि निम्नक्रमेण साक्ष्यम् आयाति-

* स्वीयपाठ्यपुस्तकस्य प्रथमगद्यपाठात् सन्धेः दश उदाहरणानां चयनं कृत्वा सन्धिविच्छेदं कुरुत।

* रिक्तस्थानानि पूरयन्तु।

* द्वयोः श्लोकयोः तुलसीदासस्य चतुष्पद्याः एवं च कान्तकवेः पङ्क्ती: गृहात् कण्ठस्थीकृत्य आनयन्तु।

* द्वयोः श्लोकयोः अन्वयं लिखन्तु।

* अद्य पठितस्य गद्यांशस्य हिन्दीभावार्थं लिखन्तु।

* तृतीयानुच्छेदस्य हिन्द्याम् अर्थं लिखन्तु ?

* चरित्रचित्रणं कुर्वन्तु।

* श्यामपट्टे लिखितशब्दानामाधारेण संस्कृते अस्याः कथायाः वर्णनंकुर्वन्तु।

* शब्दाः-रजकः, रासभः, व्याघ्रचर्मणा, प्रतिच्छाद्यम्, यवक्षेत्रेषु, व्याघ्रं मत्वा, क्षेत्रपाला, रासभशब्दम्, लगुडैः, व्यापादितवन्तः।

**पदक्रमः**

* हिमाचलप्रदेश-स्कूल-शिक्षा-बोर्ड-द्वारा माध्यमिकस्तरे

* (रुचिरा-1, 2, 3),

**उच्चमाध्यमिकस्तरे**

* (शेमुषी-1, 2),

* (व्याकरणवीथिः-1, 2),

* (अभ्यासवान् भव-1, 2)

**वरिष्ठमाध्यमिकस्तरे**

* भास्वती-1, 2

* शाश्वती -1

इत्येतेषां संस्तुतानां संस्कृतपाठ्यपुस्तकानां गृहकार्यस्य परिशीलनम् ।

* परिशीलितकार्यस्य अनुशंसनम्।

* अनुशंसितकार्यस्य आधुनिकपरिप्रेक्ष्ये संवर्धनाय सम्प्रत्ययदृशा विमर्शनम्।

* संस्कृतभाषायां संक्षेपेण कस्यचित् अन्यस्य स्वावलम्बिनः जीवनकथां लिखन्तु ।

* उपर्युक्तानुच्छेदस्य सुन्दररीत्या गृहे प्रतिलिपिं कुर्वन्तु अर्थात् सुन्दरं हस्तलेखं पुनः लिखन्तु ।

* हिमालयः, उत्तरस्यां दिशि, वनस्पतयः, अनेकः, वन्यपशवः, तीर्थस्थानानि,तपोवनानि, औषधयः, विशालः, लभ्यन्ते, सन्ति, निवसन्ति, प्राप्यन्ते च इत्यादीनां शब्दानां साहाय्येन हिमालयस्य विषये संस्कृतेन कानिचन वाक्यानि लिखन्तु ।

* अस्य पाठस्य सारांशं गृहे लिखन्तु, श्लोकान् च कण्ठस्थीकुर्वन्तु।

ISSN 2348-7828

* निम्नलिखितानां वाक्यानां गृहे संस्कृतानुवादं कुर्वन्तु–
  * विनोद सोता है।
  * सन्तोष यहाँ ठहरता है।
  * मनुष्य क्या ले जाते हैं ?
* कतिपयच्छात्राः क्रमेण पात्रानुसारं पाठस्य वाचिकाभिनयं करिष्यन्ति (आङ्गिकं न)।
* अस्य पाठस्य सारांशं संस्कृतेन लिखन्तु।
* निम्नलिखितगद्यांशस्य हिन्द्यनुवादं कृत्वा आनयन्तु–
  * एकदा .........................अभवत्।
* एवमेव 'वसन्तर्तुः' इत्यस्मिन् विषये निबन्धं लिखन्तु।[3]
* भारतीयशास्त्रेमहर्षिणा सुश्रुतेन चरकसंहितायाःअष्टमाध्यायस्य एकोत्तरशततमे सूत्रे कार्यस्य परीक्षणं लक्षणं च उद्दिश्यवर्णितं यत् ''कार्यं धातुसाम्यम्'' अर्थात् ''धातूनां साम्यावस्थायाः संरक्षणम् उत उत्पादनम्'' इति चिकित्सायाः कार्यं वर्तते।[4] एतदाधारीकृत्य छात्रेभ्यः प्रदत्तगृहकार्येण तेषु उद्विग्नता, भीतिः, उदासीनता, व्यग्रता, सम्भ्रमः, क्लेशः, कुण्ठा च इत्यादीन्यः प्रवृत्तयः यथा न भवेयुः तथा गृहकार्यस्य स्वरूपं भवेत्। एताः प्रवृत्तयः यदि असन्तुलिताः सन्ति तर्हि गृहकार्ये परिष्कारः आनेयः इति गृहकार्यस्य लक्षणं परीक्षणं च अनुकरणीयम्।




**संस्कृतशिक्षणे गृहकार्यस्य स्वरूपम्**

* संस्कृतशिक्षणे गृहकार्यस्य बहुमुखि स्वरूपम् अस्ति –
* शिक्षाविदां मतेन गृहकार्यस्य विषये सम्मतयः --------




बहुधा परिहासेन श्रूयते यत् ''अरे ! हिन्दी का क्या पढ़ना, हिन्दी को तो राह चलता भी पढ़ लेता है'' इति। वस्तुतः एतत् कटु सत्यम् एव। यतः मार्गे, राजमार्गे, कार्यालयेषु, विद्यालयेषु , महाविद्यालयेषु, विश्वविद्यालयेषु, फलकेषु, आपणपट्टिकासु, वीथिषु प्रायेण सर्वत्र 80 प्रतिशत अथवा 90 प्रतिशत विज्ञापनानिहिन्दीभाषया, रोमनलिप्या अन्यासु वा भाषासु लिखितानि भवन्ति। यानि दृष्ट्वा प्रत्येकम् अपि मानवः गमनागमनवेलायाम् अनायासेन पठनस्य अवसरं प्राप्नोति एव। किन्तु अस्माभिः संस्कृतसन्दर्भे यदि समानदृशा विचारः क्रियते चेत् साक्षात् विपरीतं परिलक्ष्यते। प्रायेण 1 प्रतिशत अथवा 2 प्रतिशत संस्कृतस्य अभ्यासाय सार्वजनिकरूपेण अवसरः स्यात्, अत्रापि सन्देहास्पदम्। अतः संस्कृतशिक्षणे प्रत्येकम् अपि संस्कृतशिक्षकेण गभीरतया विचारणीयम्। छात्रेभ्यः बाहुल्येन अवसराः कल्पनीयाः...।

संस्कृतशिक्षणे प्रवर्तमानस्य गृहकार्यस्य स्वरूपे व्यापकताम् आनेतुम्, अग्रोक्तानाम् अंशानां समावेशं कृत्वा संस्कृतशिक्षणे गुणवत्ता आनेतुं शक्यते। ''स्वाध्यायात् मा प्रमदितव्यम्''[5] इति उपनिषद्वाक्यम् अन्वर्थयितुं संस्कृतस्य अध्ययने पुनः पुनः परिशीलनदृशा छात्रेभ्यः अवसरः दातव्यः। अतः दैनिक-गृहकार्यरूपेण–

निर्देशः–'पठितेषु पाठेषुएतेषां (सम्बद्धानाम्) विषयाणां चयनं कुर्वन्तु' इति सूचयित्वा छात्रेभ्यः अवसरः कल्पनीयः–

* क्रियापदानाम्
* कर्तृ-कर्म-भाववाच्यपदानाम्
* प्रथमाद्वितीयादीनां विभक्तिपदानाम्
* विशेष्यपदानाम्
* विशेषणपदानाम्
* संज्ञापदानाम्
* सर्वनामपदानाम्
* ल्यबन्तपदानाम्
* क्त्वान्तपदानाम्
* क्त-क्तवत्वान्तपदानाम्
* चित्-चनप्रत्ययान्तपदानाम्
* शत्रन्तपदानाम्
* पर्यायपदानाम्
* नकारात्मकपदानाम् / वाक्यानाम्
* पुंलिङ्ग-स्त्री-नपुंसकलिङ्गपदानाम्
* चित्रसम्बद्धवाक्यानाम्
* सामाजिकपदानाम्
* आध्यात्मिकपदानाम्
* नैतिकपदानाम् / सूक्तिपदानाम्
* वर्गशः प्राणीनाम्
* लकारशः पदानाम्
* प्रथम-मध्यम-उत्तम-पुरुषपदानाम्
* वचनशः प्रथम-मध्यम-उत्तम-पुरुषपदानाम्
* अका.,आका.,इकारान्तादीनां पदानाम्
* सम्बोधनात्मकपदानाम् / वाक्यानाम्
* पाठे प्रत्येकम् अनुच्छेदशीर्षकाणाम्
* पाठे प्रत्येकं पद्यानां शीर्षकाणाम्
* अभिनयात्मकपदानाम्
* स्थानवाचकपदानाम्
* पाठपाठनाय सहायकसामग्रीणाम्

* विरामचिह्नयुक्तपदानाम् / वाक्यानाम्
* परस्मै-आत्मने-उभयपदक्रियापदानाम्
* सन्धिपदानाम् * समासपदानाम्
* तुमुनान्तपदानाम् * विभिन्नप्रत्ययानाम्
* संख्यासूचकपदानाम् * समयसूचकपदानाम्
* सकर्मक-अकर्मकपदानाम् * उपसर्गपदानाम्
* ऐतिहासिकपदानाम् * रोगवाचकपदानाम्
* शाकवाचकपदानाम् * वाहनवाचकपदानाम्
* कृषिवाचकपदानाम् * विज्ञानवाचकपदानाम्
* ग्रन्थवाचकपदानाम् * अनुवर्तिपदानाम्
* प्रश्नवाचकपदानाम् / वाक्यानाम्
* ऐतिहासिकस्थानसूचकपदानाम्
* सम्बन्धवाचकपदानाम्............इत्यादीनाम्

* एतस्मिन् एव क्रमे पञ्च-दश-पञ्चदशानां च दिनानां मासस्य वा अवकाशकाले गृहकार्यस्य स्वरूपभेद: एवम्प्रकारेण भवितुम् अर्हति-

निर्देश:-'पाठ्यपुस्तकात् एतेषां विषयाणां चयनं कृत्वा आनयन्तु' इति सूचयित्वा छात्रेभ्य: अवसर: कल्पनीय:-

* ऐतिहासि * गद्यपाठानाम्
* पद्यपाठानाम् * कथापाठानाम्
* नाटकपाठानाम् * प्रहेलिकापाठानाम्
* नैतिकपाठानाम्/सूक्तीपाठानाम्
* सुभाषितपाठानाम् * संवादपाठानाम्
* उद्धरणपदानाम्
* ऐतिहासिकपाठानाम् / पुस्तकानाम्
* वन्दनापाठानाम् * आध्यात्मिकपाठानाम्
* सामाजिकपाठानाम् * रूपकपाठानाम्
* अभ्यासप्रकाराणाम् * अभ्यासानाम्
* चित्रसंख्यानाम् * कार्यालयीयपदानाम्
* रिक्तस्थानपदानाम्...............इत्यादीनाम्

अत्र उक्तस्य प्रत्येकम् अपि बिन्दो:सम्पादनाय पाठस्य पुन: पुन: पठनस्य, संस्कृतपाठ्यपुस्तकस्य पुन: पुन: परिशीलनस्य आवश्यकता अनिवार्येण अस्ति। छात्र: पुस्तकं पठितुं, विषयान् अन्वेष्टुं, ग्रन्थान् परिशीलयितुं, पत्रपत्रिका: अध्येतुं, चित्रोपयोगितां ज्ञातुं, नाटक-संवाद-कथानां महत्त्वम् अवगन्तुं, साहायकसामग्री-प्रभृतांशानाम् उपयोगिताम् अवगन्तुं समर्थ: भवेत् इति धिया संस्कृतशिक्षणे गुणवत्तासम्पादनाय प्रवर्तितम् एतत्, इति।

## परिशीलितानि पुस्तकानि


1. रुचिरा प्रथम: भाग:, एन.सी.ई.आर.टी. प्रकाशन 2019
2. रुचिरा द्वितीयो भाग:, एन.सी.ई.आर.टी. प्रकाशन 2019
3. रुचिरा तृतीयो भाग:, एन.सी.ई.आर.टी. प्रकाशन 2019
4. शेमुषी प्रथम: भाग:, एन.सी.ई.आर.टी. प्रकाशन 2020
5. शेमुषी द्वितीयो भाग:, एन.सी.ई.आर.टी. प्रकाशन 2020
6. व्याकरणवीथि:, (नवमदशमकक्ष्ययो:)एन.सी.ई.आर.टी. प्रकाशन 2019
7. अभ्यासवान् भव, (नवमदशमकक्ष्ययो:) एन.सी.ई.आर.टी. प्रकाशन 2019
8. भास्वती प्रथम: भाग:, एन.सी.ई.आर.टी. प्रकाशन 2019
9. शाश्वती प्रथम: भाग:, एन.सी.ई.आर.टी. प्रकाशन 2019
10. भास्वती द्वितीय: भाग:, एन.सी.ई.आर.टी. प्रकाशन 2019
11. मिश्र प. हरे कान्त बृहद्धातुकुसुमाकर: चौखम्बा संस्कृत प्रतिष्ठान दिल्ली पुनमुद्रित संस्करण-2007.
12. त्रिपाठी ब्रह्मानन्द, रूपचन्द्रिका, चौखम्बा सुरभारती प्रकाशन संस्करण-2012.
13. आचार्य कपिलदेव द्विवेदी, प्रौढरचनानुवाद कौमुदी विश्वविद्यालय,प्रकाशन 18 वाँ संस्करण-2009.
14. अग्निवेश, चरकसंहिता, चौखम्बा सुरभारती प्रकाशन
15. पाण्डेय रामशक्ल, शिक्षा के दार्शनिक आधार, विनोद पुस्तक भण्डार आगरा, नवीनतम संस्करण-1998.
16. पाठक पी.डी., शिक्षा मनोविज्ञान, विनोद पुस्तक मन्दिर आगरा,नवीनतम संस्करण- 2009.
17. पाठक एण्ड त्यागी, सफल शिक्षण कला, विनोद पुस्तक भण्डार आगरा, नवीनतम संस्करण-1994.
18. पाण्डेय, के.पी. नवीन शिक्षा मनोविज्ञान , विश्वविद्यालय, प्रकाशन, वाराणसी, चतुर्थ संस्करण-2013.
19. भाषा विकास, हिमाचल प्रदेश, अरिहन्त पब्लिकेशन्स मेरठ, मुद्रण-2015.


## पादटिप्पणी

1. सफल शिक्षण कला
2. सफल शिक्षण कला
3. रुचिरा-शेमुषी-शाश्वती-भास्वती
4. चरक संहिता
5. तैत्तिरीयोपनिषद्


**शिक्षाविभाग:**
**केन्द्रीयसंस्कृतविश्वविद्यालय:, वेदव्यासपरिसर:,**
**बलाहर:, काङ्गडा, हिमाचलप्रदेश: -177108**

ISSN 2348-7828

# ज्योतिषशास्त्रे प्रतिपादितानाम् अन्तरिक्षोत्पातानां प्राणिनामुपरि प्रभावः

वैजयन्ती माला

**शोधसारः-**

ॐ द्यौः शान्तिरन्तरिक्ष शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। व्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि॥ इत्यादिभिः श्रुतिवचनैः समग्रब्रह्माण्डस्य सम्पूर्णप्रकृतेश्च शान्तेः प्रार्थना अस्माकं भारतीयसंस्कृतिः वर्तते। वस्तुतः अनादिकालात् प्रकृति-प्राणिनां पारस्परिकः अन्योन्याश्रयसम्बन्धः वर्तते इत्यत्र नास्ति संशयः। तस्मादेव प्रकृतेः मातृवत् पूजनं निरूपितं भारतीयमनीषिभिः। प्रकृतिः स्वभावानुकूला यावत् भवति तावदेवप्राणिनां जीवनं सुखमयं भवितुमर्हति। परञ्च यदा प्रकृतिः स्वभावविरुद्धा भवति तदा नैकेषाम् उत्पातानाम् उद्भवः भवति। प्रकृतेः सुन्दरं स्वरूपं वरदानं च वयं सततम् अनुभवामः किन्तु यदा कदा प्रकृतेः भयावहस्वरूपमपि अस्माकं दृष्टिपथमायाति। प्रकृतिः स्वभावविरुद्धा कदा भवितुमर्हति इत्यस्मिन् विषये आचार्यैः न केवलं ग्रहनक्षत्रयोगाणामाधारेण अपितु उल्कादर्शनम्[1]-निर्घात[2]-वायु[3]-परिवेष[4]-गन्धर्वनगरम्[5]-इन्द्रधनु[6]-सन्ध्या[7]-दिग्दाह[8]-रजादिलक्षणैः[9] अपि सूचितं वर्तते। त्रीषूत्पातेषु एतानि लक्षणानि अन्तरिक्षोत्पाते अन्तरभूताः भवन्ति। अतः इदं शोधपत्रं अन्तरिक्षोत्पातानां प्राणिनामुपरि प्रभावः इत्यस्मिन् विषये प्रस्तूयते।

**शोधपत्रम्-**

उत्+पत्+घञ्-प्रत्ययेन उत्पातशब्दः निष्पद्यते। ज्योतिश्शास्त्रस्य आधारभूते संहितास्कन्धे दिव्य-अन्तरिक्ष-भौमाश्चेति त्रिविधानाम् उत्पातानां वर्णनं वर्तते। एते दिव्य-अन्तरिक्ष-भौमोत्पाताः कदा किमर्थं च भवन्ति इत्यस्मिन् विषये बृहत्संहितायामुक्तं वर्तते-

**अपचारेणनराणामुपसर्गः पापसञ्चयाद्भवति।**
**संसूचयन्ति दिव्यान्तरिक्ष भौमास्त उत्पाताः॥[10]**

एतदनुसारं मनुष्याणामविनयेन पापाः सञ्चिताः भवन्ति एवञ्च एतैरेव पापैः उपद्रवाः जायन्ते। दिव्य-अन्तरिक्ष-भौमोत्पाताः तान् उपद्रवान् संसूचयन्ति। भद्रबाहुसंहितायामपि वर्ण्यते यत् प्रकृतेः विरुद्धस्वभाव एवोत्पातः इति। एते भौमान्तरिक्षदिव्योत्पाताः क्रमशः उत्तरोत्तरपीडादायकाः भवन्ति। यथा -

**यः प्रकृतेर्विपर्यासः प्रायः संक्षेपात उत्पातः।**
**क्षिति-गगन-दिव्यजातो यथोत्तरं गुरुतरं भवति॥[11]**

अपर्वणि चन्द्रादित्यग्रासादयः दिव्योत्पाताः, उल्कापातनिर्घातादयः अन्तरिक्षोत्पाताः, स्थावर-जङ्गमादिविषये जायमानाः भौमोत्पाताश्च भवन्ति[12]।

**अन्तरिक्षोत्पाताः**-उल्काविकारयुक्तः वायुः, सूर्यचन्द्रयोः परिवेषः, गन्धर्वनगरम्, इन्द्रधनुः इत्यादिकम् अन्तरिक्षोत्पातः भवति।

**अन्तरिक्षोत्पातानां भूमौ प्राणिनामुपरि प्रभावः-**

**उल्कया अन्तरिक्षोत्पातज्ञानम्[13]-**

**1.1. उल्कापातः**-आकाशात् पतन्तः तेजपुञ्जाः उल्कापातनाम्ना ज्ञायते। उल्कोत्पाताः पञ्चविधाः भवन्ति। धिष्ण्या, उल्का, अशनि, विद्युत्, ताराश्च[14]। पञ्चविधोल्काविषयकं ज्ञानं भूमौ तेषां प्रभावश्च।

**धिष्ण्या**-धिष्ण्या दुर्बला-अल्पपुच्छा-स्वल्पलाङ्गूला, प्रज्वलिताङ्गारसदृशी, द्विहस्तप्रमाणदीर्घा, यतः उत्पन्ना ततः आरभ्य चत्वारिंशद्धस्ता स्फुटतरा दृश्यते[15]। सामसंहितायामप्युक्तम्-

**धिष्ण्या सिता द्विहस्ता धनूंषि दश याति कृशदेहा॥**



**उल्का**-उल्का शिरसि मूर्धनि विशाला विस्तीर्णा यथा यथा निपतति तथा तथा वृद्धिं याति, सूक्ष्मपुच्छा, पुरुषप्रमाणदीर्घा च उल्का भवति। अस्याः उल्काया बहवो भेदा भवन्ति[16]। सामसंहितायामप्युक्तम्-

**उल्काग्रतो विशाला बहुप्रकारा पुरुषमात्रा॥**





**अशनि**-अशनिः अत्यधिकशब्दयुक्ता निपतति। अशनिः मनुष्यः, गजः, अश्वः, मृगः, पाषाणः, गृहम्, तरुर्वृक्षः, पशुर्गवादिषु निपतति। असनिरियं भूतलं चक्रवद्भ्रमन्ती विदारयन्ती च निपतति[17]। सामसंहितायामप्युक्तम्-

**अशनिः प्राणिषु निपतति दारयति धरातलं बृहच्छब्दाः॥**

ISSN 2348-7828









**विद्युत्**-विद्युत् प्राणिनां भयम् उत्पादयन्ती, तड-तडशब्धं कुर्वती, कुटिला वक्रा विस्तीर्णा च प्राणिषु इन्धनराशिषु, काष्ठेषु ज्वलिता झटित्येव निपतति[18]। सामसंहितायामप्युक्तम्-

**विद्युत्तटतटशब्दा ज्वालामालाकुला पतति।**



**तारा**-तारा एकहस्तप्रमाणं दीर्घा, श्वेतवर्णा, लोहितवर्णा, पद्मसूत्रसदृशी, अतिसूक्ष्मा, आकाशे एव तिर्यगधश्चोर्ध्वं वा याति गच्छति[19]। सामसंहितायामप्युक्तम् -

**तारा तु हस्तमात्रा यात्यूर्ध्वमधः स्थिता सिता ताम्रा॥**



धिष्ण्य-उल्का-अशन्यः इत्येताः तिस्रः पक्षात्रये (पञ्चचत्वारिंशदिनेषु ) स्वशुभफलं ददति। परञ्च विद्युत् तारा च षड्दिनाभ्यन्तरे एव स्वफलं ददाति। पुनः तारा पूर्णफलं प्रददाति, विद्युत् मात्रमर्धफलं, उल्का-विद्युत्-अशनिश्चापि पूर्णफलं प्रददाति[20]।

**1.2. उल्कैः आहतनक्षत्राधारेण अन्तरिक्षोत्पातज्ञानम् -**

यदा पूर्वाफाल्गुनी-पुनर्वसु-धनिष्ठा-मूलादीनां योगतारा उल्कया हता भवेत् तदा युवतीनां स्त्रीणाञ्च पीडा भवति। पुष्य-स्वाति-श्रवणादीनां योगतारा उल्काहता चेत् विप्राणां क्षत्रियाणाञ्च पीडा भवति। पूर्वाफाल्गुनी-पूर्वाषाढा-पूर्वाभाद्रपदा-भरणी-मघा-आर्द्रा-श्लेषा-ज्येष्ठा-मूलादिनां योगतारा उल्कया हता चेत् चौराणां तस्कराणाञ्च पीडा भवति। अश्विनी-हस्त-अभिजित्-कृत्तिका-विशाखादीनां योगतारा उल्काहता चेत् कलाकाराणां गीतनृत्यचित्रवाद्यदक्षानां पीडा जायते[21]।

**1.3. ग्रहस्पर्शेन उल्काहतोत्पाताः -**

या उल्का शशिसूर्यौ संस्पृशन्ती अथवा चन्द्रार्काभ्यां निर्गच्छति तदा सा राजभयम्, अवृष्टिभयञ्च भवति[22]। यदा उल्का सूर्यचन्द्रयोः असव्यभागेन प्रदक्षिणं करोति तदा क्रमशः नगरेषु बहिः अन्तः वा निवसन्तः जनाः पीडां प्राप्नुवन्ति। उल्का यदा उदयास्तकाले सूर्यम् अशनिद्वारा विद्युता वा ताडयेत् तदा तस्मिन् काले राज्ञः मरणं जायते तथा च द्वितीयस्य नृपस्य प्रतिष्ठास्थितिः तत्क्षणमेव भवति[23]। ग्रहणकाले ग्रस्तचन्द्रस्योपरि उल्कापाते जाते सति यन्नक्षत्रे चन्द्रः भवति तन्नक्षत्रस्य राज्ञः मृत्युः भवति[24]। अस्मिन्नेव विषये सामसंहितायामप्युक्तम्-

**उल्काभिहतो ग्रहणे तन्नक्षत्रं नृपं हन्ति।**

**1.4. उल्कावर्णस्य आधारेण उत्पातज्ञानम् -** श्वेत-रक्त-पीत-कृष्णवर्णीया उल्का क्रमशः ब्राह्मण-क्षत्रिय-वैश्य-शुद्रवर्णजनान् हन्ति। तथा च श्याम-रक्त-नील-रुधिर-अग्नि-कृष्ण-भस्मवर्णा रुक्षा उल्का, सध्यायां दिवाकाले वा उत्पन्ना उल्का, कुटिला खण्डिता च उल्का शत्रुभ्यः भयकारकः भवति[25]।

**1. निर्घातेन अन्तरिक्षोत्पातज्ञानम् -**

निर्घातः-वायुना अभिहतः वायुः आकाशात् यदा भूमौ समापतति तदा तस्य पततः वायोः यः शब्दः स एव निर्घातः इत्युच्यते[26]।



**2.1. निर्घातस्य भूम्युपरि प्रभावः-**

सूर्योदयकाले यदि निर्घातः जायते तदा अधिकारिणः, नृपाः, धनिकाः, युद्धकुशलाः, स्त्रियः, वणिजादयश्च क्षयं प्राप्नुवन्ति। दिवसस्य प्रथमप्रहरे निर्घातः भवेत् तदा अज-अविक-शूद्र-पौराणां नाशकरः भवति। द्वितीयप्रहरे निर्घाते जाते सति राजसेवकाः विप्राश्च, तृतीयप्रहरे वैश्याः मेघाश्च, चतुर्थप्रहरे चौराः तस्कराश्च पीडां प्राप्नुवन्ति। सूर्यास्तकाले यदि निर्घातः उत्पद्यते तदा नीचान् धर्मकरान् कर्मकरान् च पीडयति। रात्रौ प्रथमप्रहरे सस्यानि, द्वितीयप्रहरे पिशाचसमूहाः, तृतीयप्रहरे अश्वाः हस्तिनश्च, चतुर्थप्रहरे यायिनः यात्रिकाश्च नाशं प्राप्नुवन्ति। यस्यां दिशि भाण्डभेदनात् उत्पन्नशब्दवत् शब्दः याति तस्यां दिशि सर्वं नाशयति[27]।

**2. परिवेषानुसारेण अन्तरिक्षोत्पातज्ञानम्[28]-**

व्याकरणशास्त्रदृष्ट्या परितो विष्यते व्याप्यतेऽनेनेति परिवेषः। ज्योतिषशास्त्रे परिवेषः इत्थं प्रतिपाद्यते-

**सम्मूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः।**
**नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः॥[29]**

अर्थात् सूर्यचन्द्रयोः रश्मयः वायुना मण्डलीभूता वृत्ताकाराश्च स्वल्पमेघे आकाशे प्रतिफलिता नानावर्णाकृतयः दृश्यन्ते। नानाप्रकारकाः विचित्राकृतयः एव परिवेषाः इत्युच्यन्ते।



**3.1. परिवेषस्य भूमौ प्रभावः-**

मयूरकण्ठतुल्ये परिवेषे प्रभूता वृष्टिः, बहुवर्णपरिवेषे नृपस्य वधः, धूम्रवर्णस्य परिवेषे भयं, इन्द्रधनुषः सदृशे परिवेषे युद्धानि, अतिलोहितपरिवेषे चापि युद्धानि भवन्ति[30]।

**3.2. परिवेषगतरेखाधारेण उत्पातज्ञानम्-**

परिवेषे रेखात्रयं दृश्यते प्रायेण। तत्र रेखाद्वये अभ्यन्तरस्थिता रेखा नागरकाणां नृपाणाञ्च शुभाशुभकारी ज्ञेया। तथा बाह्यस्था रेखा यायिनां गन्तृणां राज्ञां, परिवेषमध्यगता रेखा आक्रन्दसाराणां शुभशुभकारी विज्ञेया। येषां नागरकादीनां भागः लोहितवर्णः, श्यामवर्णः, कृष्णवर्णः, रूक्षवर्णश्च तेषां पराजयो भवति। येषां भागः निर्मलः, श्वेतः, दीप्तिमान् तेषां जयः भवति[31]।

**3.3. ग्रहाणां परिवेषाकृत्यनुसारेण उत्पातज्ञानम्-**

यदा ग्रहाणाम् आकृतयः चक्र-चाप-त्रिकोण-दण्ड-पुरः-प्रासाद-वज्राकाराः दृश्यन्ते तदा लोके सर्वत्र क्षुदुर्भिक्षमवृष्टिञ्च कुर्वन्ति तथा राज्ञां संग्रामाय च भवन्ति[32]। वृक्षाकृत्याः परिवेषः विभिन्नवर्णस्य च परिवेषः नृपस्य नाशं करोति। पुनः यदा प्रतिदिनं सूर्यचन्द्रयोपरि रक्तवर्णस्य परिवेषः भवेत् तदा प्रधानशासकस्य मृत्युर्भवति। यदा परिवेषद्वयं दृश्यते तदा सेनापतिं हन्ति। यदा परिवेषत्रयं दृश्यते तदा नृपस्य नाशः भवति[33]।

**3.4. तिथिषु दृष्टपरिवेषेण उत्पातज्ञानम्-**

यदा प्रतिपदादिषु चतुर्षु दिवसेषु परिवेषो दृष्टः तदा विप्र-क्षत्रिय-वैश्य-शूद्राणां सर्वेषामपि नाशकरः भवति। अर्थात् प्रतिपत्तिथौ दृष्टपरिवेषः विप्रान्, द्वितीयायां क्षत्रियान्, तृतीयायां वैश्यान्, चतुर्थ्यां च शूद्रान् हन्ति। पञ्चम्यां दृष्टश्चेत् स्व-स्वजातिनां, षष्ठ्यां नगरस्य, सप्तम्यां गजस्य, अष्टम्यां युवराजस्य, नवमीदशम्येकादशीषु नृपस्य कृतेऽशुभः, द्वादश्यां नगरवेष्टनम्, त्रयोदश्यां सैन्यक्षोभः, चतुर्दश्यां राजपत्न्याः पीडाः, पूर्णिमामावास्यां च परिवेषो नृपस्य पीडाकरः भवति[34]।

**3.5. परिवेषगतग्रहाणाम् अनुसारम् उत्पातज्ञानम्-**

यदा सौरः परिवेषमण्डलमध्यगतः भवेत् तदा क्षुद्रधान्यानां कृते नाशकरः भवति तथा वातसंयुक्तां वृष्टिमुत्पादयति। वृक्षादीनां कृषिकराणां च नाशञ्च करोति। भौमे परिवेषमध्यगते सति कुमाराणां तथा बलपतीनां चमूनाथानां सैन्यानां च व्याकुलता, अग्निभयं शस्त्रभयञ्च भवति। बृहस्पतौ परिवेषमध्यगते पुरोहितानाम् आचार्याणाम् अमात्यानां नृपाणां च पीडा भवति। बुधे परिविष्टे सचिवानां वृक्षादीनां लिपिकराणां च परिवृद्धिर्भवति शोभना वृष्टिश्च जायते। शुक्रे परिवेषमण्डलगते यात्रिकानां जिगमिषूणां क्षत्रियजातीनां राजमहिष्याश्च पीडा दुर्भिक्षं वा भवति। केतौ परिवेषमध्यगते दुर्भिक्षं, अग्निदाहः, मरणं, नराधिपानां च शस्त्रेभ्यः भयमुत्पद्यते। राहौ परिविष्टे सति व्याधिः नृपभयं च भवति[35]।

**3.6. ग्रहेषु परिवेषानुसारेण उत्पातज्ञानम्-**

यस्मिन् देशे सूर्यः उदयास्तकाले परिवेषयुक्तः दृश्यते अथवा सूर्यः रक्तवर्णीयो भूत्वा उदेति अस्तमेति च तस्यां स्थितौ निश्चयेन सत्तापरिवर्तनं भूत्वा अपरो राजा भवति[36]।

**3.7. परिवेषस्थितग्रहाधारेण उत्पातज्ञानम्-**

सूर्यचन्द्रयोः परिवेषाभ्यन्तरे भौमादिताराग्रहेषु द्वयोः ताराग्रहयोः स्थितिवशात् संग्रामः जायते इति वेदितव्यम्। त्रिषु ग्रहेषु परिवेषमध्यगतेषु दुर्भिक्षभयम् अवृष्टिभयञ्च भवति। चतुर्षु ताराग्रहेषु परिवेषमण्डलमध्यगतेषु मन्त्रि-आचार्यसहितः राजा मृत्युं प्राप्नोति। पञ्चसु ताराग्रहेषु परिवेषमण्डलमध्यगतेषु विश्वस्य एव संहारवत् स्थितिर्जायते[37]।

**3. गन्धर्वनगरानुसारेण अन्तरिक्षोत्पातज्ञानम् -**

**गन्धर्वनगरम् ( खपुरम् )**-गगनमण्डले उदितः इष्टानिष्टसूचकः पुरविशेषः गन्धर्वनगरनाम्ना ज्ञायते। अस्य विषये पतञ्जलिना अपि अष्टाध्यायाः चतुर्थपादस्य त्रयोदशसूत्रव्याख्यायाम् इदं निरूप्यते-

**यथा गंधर्वनगराणि दूरतो दृश्यन्ते उपसृत्य च नोपलभ्यन्ते इति।**



**4.1. गन्धर्वनगरदर्शनेन उत्पातज्ञानम्-**

बृहत्संहितायां वराहाचार्येणोक्तम् यत् यस्मिन् काले आकाशे गन्धर्वनगरं बहुवर्णचित्रसंस्थानं वा दृश्यते अथवा पताकाध्वजैः तोरणैश्च युक्तः पुरः दृश्यते तदा अवश्यमेव युद्धं जायते इति[38]। आचार्यकाश्यपेनाप्युक्तम्-

**बहुवर्णं पताकाढ्यं गन्धर्वनगरं महत्।**
**दृष्टं प्रजाक्षयकरं संग्रामे लोमहर्षणम्॥**

यदा आकाशे परुषगन्धर्वनगरः दृश्येत् तदा झञ्झावातस्य विद्युतपतनस्य च महद्भयं भवति[39]। यदा इन्द्रधनुःसदृशं, धूमयुक्ताग्निसदृशं वा गन्धर्वनगरं दृश्यते तदा जनेषु अग्निभयं भवति[40]। यदा खण्डितं, विशीर्णं, छिद्रयुक्तञ्च गन्धर्वपुरं दृश्यते तदा भुवि सर्वत्र चोरभयं भवति[41]। गन्धर्वनगरमिदं परकोटा, तोरणरहितः वा दृश्यते तदा वनवासिनां तस्कराणां च विनाशः भवति[42]। दावाग्निसदृशस्य गन्धर्वनगरस्य दर्शनेन निसन्देहं नगरस्य अवरोधः भवति[43]। यदा अरण्ये गन्धर्वः दृश्यते तदा राष्ट्रं शीघ्रमेव अरण्ये परिवर्त्यते[44]। यदा निर्मलाकाशे गन्धर्वः दृश्यते तदा वृष्टिः, अस्त्रमध्येषु गन्धर्वः दृश्यते तदा भयम्,

अग्निसम्बन्ध्युपकरणेषु गन्धर्वः दृश्यते तदा अग्निभयं भवति[45]।

**4.2. दिक्षुगन्धर्वनगरदर्शनेन उत्पातज्ञानम्–**

खपुरम् (गन्धर्वनगरम्) उत्तरस्यां दिशि दृश्यते चेत् पुरोहितस्य, पूर्वस्यां नृपस्य, दक्षिणस्यां बलपतेश्चमूनाथस्य, पश्चिमायां युवराजस्य नाशाय भवति। सितरक्तपीतकृष्णं खपुरं यथा क्रमेण ब्राह्मणादीनां नाशाय भवति अर्थात् श्वेतवर्णं ब्राह्मणानां, रक्तं क्षत्रियाणां, पीतं वैश्यानां, कृष्णं शूद्राणामिति[46]। यदा विशेषरूपेण दक्षिणभागे गन्धर्वः दृश्यते तदा परशासनेन आक्रमणं भवति[47]। दक्षिणभागे विशीर्णः गन्धर्वः दृश्यते तदा राष्ट्रेषूपद्रवः तथा सेनाक्षोभः भवति[48]। यदा ध्वजयुक्तं, पताकायुक्तञ्च गन्धर्वनगरं पूर्वदिशि दृश्यते तदा राज्ञः मृत्युः भवति[49]। यदा सर्वासु दिक्षु गन्धर्वनगरं दृश्यते तदा सर्वासु दिक्षु सर्वे वर्णाः (ब्राह्मण–क्षत्रिय–वैश्य–शुद्राः) परस्परं कलहं कुर्वन्ति[50]।

**4.3. उदयास्तकाले गन्धर्वनगरदर्शनेन उत्पातज्ञानम् –**

यदा सूर्योदयकाले पूर्वदिशि गन्धर्वनगरं दृश्यते तदा नगरजनानां नाशं भवति[51]। यदा सूर्यास्तकाले गन्धर्वनगरं दृश्यते तदा यायिनां कृते (आक्रमणकारिणां कृते) घोरं भयसूचकं भवति[52]।

**4.4. वर्णवशात् गन्धर्वनगरदर्शनेन उत्पातज्ञानम्–**

यदा रक्तवर्णीयं गन्धर्वनगरं पूर्वदिशि दृश्यते तदा शस्त्रोत्पातः भवति[53]। यदा पीतवर्णीयं गन्धर्वनगरं दृश्यते तदा प्राणिनां कृते मृत्युतुल्यं कष्टव्याधिकरं च भवति[54]। पश्चिमदिशि दृश्यमाणं कृष्णवर्णीयं गन्धर्वनगरं संग्रामजनकं तथा शुद्रजनानां कृते भयोत्पादकं भवति[55]। कपिलवर्णस्य गन्धर्वनगरं धान्यघातकं, मञ्जिष्ठवर्णस्य मृग–गवादिपशूनां कृते घातकं, अव्यक्तवर्णस्य सेनायां क्षोभोत्पादकम्[56] रक्तवर्णीयं क्षत्रियेभ्यः, पीतवर्णीयं वैश्येभ्यः, कृष्णवर्णीयं शूद्रेभ्यः श्वेतवर्णीयं कृष्णवर्णीयं गन्धर्वनगरं च ब्राह्मणानां कृते भयोत्पादकं विनाशकारकञ्च भवति[57]। यदा विविधवर्णीयं कृष्णवर्णीयं गन्धर्वनगरं दृश्यते तदा नगर–ग्राम–राष्ट्रेषु क्षोभः उत्पद्यते[58]।

**4. इन्द्रधनुषानुसारेण अन्तरिक्षोत्पातज्ञानम् –**

मेघसहिताः सूर्यस्य रश्मयः आकाशे वायुना विघट्टिता विविधवर्णीयं एकं स्वरूपं निर्मान्ति तदेव इन्द्रधनुः कथ्यते। यथोक्तं बृहत्संहितायाम्–

**सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे।**
**वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः॥**[59]




**5.1. जल–भूमि–वृक्षादिषु दृष्टेन्द्रधनुषः उत्पातज्ञानम्–**

इन्द्रधनुः जले दृश्यते चेत् अनावृष्टिः भवति। भूमौ दृश्यते तदा संस्थानां नाशः भवति। वृक्षे स्थिते इन्द्रचापे व्याधिः पीडा च भवति। वल्मीके मृत्स्तूपे वा दृष्टे शस्त्रभयं, निशि दृश्यते चेत् सचिवस्य वधः भवति[60]।

**5.2. विविधदिक्षु इन्द्रधनुषः उत्पातज्ञानम्–**

यदि इन्द्रधनुः ईशान–आग्नेय–नैर्ऋत्य–वायव्यश्च दिशिः दृश्यते तदा तासु दिक्षु ये स्वामिनः भवन्ति तेषां नाशं करोति। यदा गगने विगताभ्रः इन्द्रधनुः दृश्यते तदा महामारीं करोति। यदा कृष्ण–लोहित–पीत–नील–वर्णीयः इन्द्रधनुः दृश्यते तदा क्रमशः शस्त्रकोपः, अग्निकोपः, दुर्भिक्षञ्च भवति[61]। अवर्षणकाले पूर्वदिशि दृष्टेन्द्रधनुः वृष्टिकारकः, वृष्टिकाले दृष्टः अवृष्टिकारकः, पश्चिमदिशि च दृष्टः सर्वदा वृष्टिकारकः भवतीति[62]। रात्रिकाले पूर्वदिशि दृष्टः इन्द्रधनुः राज्ञः पीडां रोगभयञ्च करोति। दक्षिणदिशि दृष्टेन्द्रधनुः सेनापतिं, पश्चिमदिशि दृष्टेन्द्रधनुः प्रधानपुरुषान्, उत्तरदिशि दृष्टेन्द्रधनुः च सचिवं हन्यात्[63]।

**5.3. वर्णवशादिन्द्रधनुषः उत्पातज्ञानम् –**

इन्द्रधनुः श्वेतवर्णस्य भवति तदा ब्राह्मणानां, रक्तवर्णस्येन्द्रधनुः क्षत्रियाणां, पीतवर्णीयः वैश्यानां, कृष्णवर्णीयः शूद्राणां कृते भयप्रदायकः भवति। यदा इन्द्रधनुः भग्नः, कम्पितः, जलवृष्टिकरः भवेत् तदा राजा चतुर्मासानन्तरम् आघातं मृत्युं वा प्राप्नोति[64]।

**5. सन्ध्यानुसारम् अन्तरिक्षोत्पातज्ञानम् –**

सूर्योदयात् पूर्वकालः तथा सूर्यास्तादनन्तरकालः सन्ध्यानाम्ना उच्यते। यथोक्तं बृहत्संहितायाम् –

**अर्द्धास्तमितानुदितात् सूर्यादस्पष्टभं नभो यावत्।**
**तावत् सन्ध्याकालश्चिह्नैरेतैः फलं चास्मिन्**[65]**॥**

यदा सूर्यः अर्धमितम् अस्तं गच्छति तदारभ्य यावत् आकाशे अस्पष्टानि नक्षत्राणि दृश्यन्ते अर्थात् रात्र्यागमनं भवति तावता एका सन्ध्या (सायं सन्ध्या) ज्ञेया। रात्र्यवसाने अरुणोदयवेलायां यदा नक्षत्राणां कान्तिः स्वल्पा जायते तस्मात् यावत् सूर्यः अर्धोदितो भवति तावत् पर्यन्तं द्वितीया सन्ध्या (प्रातःसन्ध्या) भवति। एवम् अर्धास्तमितादनुदिनात् वा सूर्यात् अस्पष्टनक्षत्रयुक्तम् आकाशं यावत् सन्ध्याकालः भवतीति आचार्येण वर्णितम्। आचार्यगर्गेणाप्युक्तम्–

**अहोरात्रस्य यः सन्धिः सा च सन्ध्या प्रकीर्तिता।**
**द्विनाडिका भवेत् साधुर्यावदाज्योतिदर्शनम्॥**



**6.1. सन्ध्याकाले सूर्याच्छादितमेघाकृत्यानुसारेण तथा सूर्याचन्द्रवर्णानुसारेण उत्पातज्ञानम् –**

यदा सन्ध्यासमये आयुधाकृतिमेघैः सूर्यबिम्बः आच्छादितो भवति तदा सङ्ग्रामकारकं भवति। यदा सूर्यबिम्बः मृग–महिष–पक्षी–गर्दभ–उष्ट्र–हस्त्यादिमेघाकृत्या आच्छादितो भवति तदा भीतिं ददाति[66]। संध्याकाले मेघाः यदि रूक्षाः तथा विकृतरूपयुक्ताः दृश्यन्ते तदा अनावृष्टि–रोगभय–दुर्भिक्ष–राज्ञोपद्रवाश्च भवन्ति[67]। यदा उदयास्तकाले सूर्यचन्द्रौ रक्तवर्णीयौ दृश्येते तदा राज्ये संकटमागच्छति। सन्ध्यायां

सूर्यचन्द्रौ शस्त्राकारसदृशा: मेघा: आच्छादयन्ति तदा महायुद्धं भवति। गदर्भ-उष्ट्राकृतियुक्तमेघा: सन्ध्यायां सूर्यचन्द्रौ आच्छादयन्ति चेत् लोकानां भयमुत्पाद्यते[68]।

**6.2. सन्ध्याकालिकशकुनानुसारेण उत्पातज्ञानम् -**

यदि प्रात: सन्ध्यायां मृगा: पक्षिणश्च सूर्याभिमुखा: भूत्वा दीप्तदिशि स्थित्वा उच्चस्वरेण रुदन्ति तदा मृगपक्षिभि: कृतं अयं रुदनध्वनि: देशस्य विनाशं संसूचयन्ति। दक्षिणदिक्स्थै: तैरेव मृगपक्षिभि: सूर्याभिमुखैश्च कृत: रोदनध्वनि: नगरस्य पराधीनतां सूचयन्ति।[69]

**6.3. सन्ध्याकालिकवाय्वानुसारेण उत्पातज्ञानम् -**

यदि गृह-वृक्ष-पुरद्वार-तोरणादिकम्पनकर: धूलि-लोष्ट-अपशिष्टपदार्थप्रवाहक:, अतिभयंकरध्वनियुक्त: प्रबलवेगयुक्त: रुक्षश्च वायु: सन्ध्याकाले प्रवहति तदा एतादृशी सन्ध्या अशुभफलदा भवति[70]।

**6. वायोर्वशादान्तरिक्षोत्पातज्ञानम्-**

वायु: वाष्पकणानां समिश्रणं वर्तते। यस्मिन् 78 प्रतिशतं नाइट्रोजन, 21 प्रतिशतम् ऑक्सीजन, 0.9 प्रतिशतं अर्गन, 01 प्रतिशतं अन्यवाष्पकणाश्च भवन्ति। इत्थं 100 प्रतिशतं वाष्पकणै: वायु: निर्मीयते। चित्रम् -



**7.1. आषाढपूर्णिमाया: वायोर्वशाद् उत्पातज्ञानम्।**

आषाढपूर्णिमायां यदि सांयकाले प्रचण्ड-वेगयुक्त: पश्चिमदिश: वायु: वहेत् तदा राज्ञां परस्परं संग्राम: भवति। परञ्च सुवृष्टि: सुधान्योत्पत्तिरपि भवति[71]। अस्मिन् विषये वराहाचार्येण इदमुक्तं वर्तते

**यदा रेणूत्पातै: प्रविचलसटाटोपचपल:।**
**प्रवात: पश्चाच्चेद्दिनकरकरापातसमये॥**
**तदा सस्योपेता प्रवरनिकराबद्धसमरा क्षिति:**
**स्थानस्थानेष्वविरतवसामांसरुधिरा[72]॥**

**7. दिग्दाहवशादान्तरिक्षोत्पातज्ञानम्-**

स्वस्थानं परित: क्षितिजे (भूम्याकाशयो: मेलनं यत्र दृश्यते) यस्यां दिशि रक्त-पीताद्यग्नि: दृश्यते सहैव अल्पझंझा: अपि वहेत् तदेव दिग्दाह: इति नाम्ना उच्यते। चित्रम्-

**8.1. दिग्दाहस्यवर्णाधारेण दिक्क्रशाच्च उत्पातज्ञानम् -**

पीतवर्णस्य दिग्दाह: भवति चेत् नृपाणां (वर्तमाने राजनेतर्णिां सत्ताधीशानां च) भयम्, अग्निवर्णस्य दिग्दाहे देशनाश:, अरुणवर्णस्य दिग्दाहे झञ्झावात: भवति[73] धूम्रवर्णे सस्यादिहानि:, कृष्णवर्णस्य दिग्दाहे शस्त्रभयं जायते। केवलं पूर्वदिशि दिग्दाह: भवेत् चेत् क्षत्रियाणां नृपाणाञ्च कृते अशुभफलप्रद: भवति[74]। अग्निकोणस्थदिग्दाह: युवराजानां शिल्पिनां कृते अशुभफलं ददाति। दक्षिणदिग्दाह: मूर्खाणां, वैश्याणां, पाखण्डीनां कृते पीडां ददाति[75]। नैर्ऋत्यदिग्दाह: तस्कराणां, आतङ्कवादिनां नाशं करोति तथा पुनर्भुवानां (ये स्त्री-पुरूषा: स्वभार्याया: स्वपत्यु: वा मरणात्परं पुनर्विवाहं कुर्वन्ति अथवा प्रथमविवाहविच्छेदं कृत्वा पुनर्विवाहं कुर्वन्ति ते पुनर्भुव: उच्यन्ते।) कृते विनाशसूचक: भवति। पश्चिमदिग्दाह: कृषकाणां कृते तथा वायव्यदिग्दाह: पशुपालकानां कृते अशुभ: भवति[76]। उत्तरदिग्दाह: विप्राणां कृते, ईशानकोणीय दिग्दाह: पाखण्डीसाधुनां कृते अशुभप्रद: भवति। परञ्च स्वर्णवर्णीय: दिग्दाह: संसारस्य कृते कल्याणप्रद: भवति[77]।

**8. रजोवशाद् अन्तरिक्षोत्पातज्ञानम् -**

धूलियुक्त: चण्डवात: रज: नाम्नोच्यते। इदमप्येकम् उत्पातरूपमेव।

**9.1. रजस: दिक्क्रर्णवशाद् उत्पातज्ञानम् -**

यस्मिन् स्थाने रजसा दिग्ग्रामवनपर्वतादय: अच्छाद्यन्ते तस्य स्थानस्य नृपहानिर्भवति। तथा यस्मिन्-यस्मिन् दिशि झञ्झा: आगच्छेत् तस्मिन् दिशि स्थितग्रामनगरादीनां हनिर्भवति[78]। यदा कृष्णवर्णीयरज: (आँधी) यदि वहति तदा मन्त्रिणां जनपदानां कृते च रोगभयं व्याधिञ्च करोति। यदा दिनद्वयं, दिनत्रयं यावत् वा सूर्योदयकाले रज: सम्पूर्णाकाशमाच्छादयति तदा उग्रभयमुत्पद्यते[79]। यदा एकरात्रिं यावत् रजयुक्ता झञ्झा वहेत् तदा नृपस्य मृत्यु:, यदा रात्रिद्वयं यावत् वहेत् तदा परचक्रागमनं (अन्यदेशस्य सेनाद्वारा आक्रमणम् अथवा तद्द्वारा प्रायोजितातङ्ककार्यादिकम्) भवति। यदा रात्रित्रयं यावत् वहेत् तदा चौरभयं, रात्रिचतुष्टयं यावत् वहेत् तदा ईतीनां भयं दुर्भिक्षभयञ्च भवति, यदा पञ्चरात्री: यावत् वहेत् तदा महाराजस्य (केन्द्रीय सत्ताया:) नाशं भवति। एतद् फलं शिशिरर्तुं विहाय अन्यर्तुषु भवति। यत: शिशिरर्तौ या झञ्झा वहति तस्या: शुभाशुभफलं नैव भवति[80]।

**निषकर्ष:-**

भूमौ जायमानानाम् एतेषां विविधोत्पातानां पूर्वानुमानं स्पष्टतया कर्तुं सुविकसितं तन्त्रं अद्यापि न वर्तते। किन्तु भारतीय ज्योतिषाधारेण प्राचीनाचार्या: एतेषामुत्पातानां यथार्थं पूर्वानुमानं षण्मासपूर्वमेव अत्यल्पव्ययेन सरलसाधनैश्च कुर्वन्ति स्म इति विशेष:। वर्तमानकाले एतेषां लक्षणानाम् अध्ययनम् अनुसन्धानञ्च कृत्वा वयं कथं उत्पातानाम् यथार्थपूर्वानुमानं कर्तुं शक्नुम:, तदर्थं संहिताग्रन्थेषु प्रतिपादितोत्पातनां प्रायोगिकाध्ययनस्य नितान्तावश्यकता अनुभूयते वर्तते च।

## पादटिप्पणी

1. आकाशात् पतन्त: तेजपुञ्जा: उल्कापातनाम्ना ज्ञायते। उल्कोत्पाता: पञ्चविधा: भवन्ति। धिष्ण्या, उल्का, अशनि, विद्युत्, ताराश्च। भद्रबाहुसंहिता, 02.06-11
2. पवन: पवनाभिहतो गगनादवनौ यदा समापतति।
   भवति तदा निर्घात: स च पापो दीप्तविहगरुत:॥ बृहत्संहिता, 39.01/ नारदसंहिता, 36.62
3. वायु: वाष्पकणानां समिश्रणं वर्तते। यस्मिन् 78 प्रतिशतं नाइट्रोजन, 21 प्रतिशतम् ऑक्सीजन, 0.9 प्रतिशतं अर्गन, 01 प्रतिशतं अन्यवाष्पकणाश्च भवन्ति। इत्थं 100 प्रतिशतं वाष्पकणै: वायु: निर्मीयते।

4. सम्मूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः।
नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः॥ बृहत्संहिता, 34.01
5. गन्धर्वनगरम् (खपुरम्) – गगनमण्डले उदितः इष्टानिष्टसूचकः पुरविशेषः गन्धर्वनगरनाम्ना ज्ञायते। अस्य विषये पतञ्जलिना अपि अष्टाध्यायाः चतुर्थपादस्य त्रयोदशसूत्रव्याख्यायाम् इदं निरूप्यते – यथा गंधर्वनगराणि दूरतो दृश्यन्ते उपसृत्य च नोपलभ्यन्ते इति।
6. सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे।
वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः॥ बृहत्संहिता, 35.01/ नारदसंहिता, 36.40
7. अर्द्धास्तमितानुदितात् सूर्यादस्पष्टभं नभो यावत्।
तावत् सन्ध्याकालश्चिह्नैरेतैः फलं चास्मिन्॥ बृहत्संहिता, 30.01
8. स्वस्थानं परितः क्षितिजे (भूम्याकाशयोः मेलनं यत्र दृश्यते) यस्यां दिशि रक्त-पीताद्यग्निः दृश्यते सहैव अल्पझंझाः अपि वहेत् तदेव दिग्दाहः इति नाम्ना उच्यते।
9. धूलियुक्तः चण्डवातः रजः नाम्नोच्यते।
10. बृहत्संहिता, 46.02
11. भद्रबाहुसंहिता, 02.04
12. दिव्यं गृहर्क्षवैकृतमुल्कानिर्घातपवनपरिवेषाः।
गन्धर्वपुरपुरन्दरचापादि यदान्तरिक्षं तत्॥
भौमं चरस्थिरभवं तच्छान्तिभिराहतं शममुपैति।
नाभसमुपैति मृदुतां शाम्यति नो दिव्यमित्येके॥ बृहत्संहिता, 46.04-05/ बृहत्संहिता, 45.04-06
14. भद्रबाहुसंहितायां तृतीयोऽध्यायः।
भद्रबाहुसंहिता, 02.06-11
15. धिष्ण्याकृशाल्पपुच्छा धनूंषि दश दृश्यतेऽन्तराभ्यधिकम्।
ज्वलिताङ्गारनिकाशा द्वौ हस्तौ सा प्रमाणेन॥ बृहत्संहिता, 33.06/ नारदसंहिता, 36.06
16. उल्का शिरसि विशाला निपतन्ती वर्धते प्रतनुपुच्छ।
दीर्घा च भवति पुरुषं भेदा बहवो भवन्त्यस्याः॥ बृहत्संहिता, 33.08/ नारदसंहिता, 36.08-13
17. अशनिः स्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु।
18. निपतति विदारयन्ती धरातलं चक्रसंस्थाना॥ बृहत्संहिता, 33.04/ नारदसंहिता, 36.04
18. विद्युत् सत्त्वत्रासं जनयन्ती तटतटस्वना सहसा।
कुटिलविशाला निपतति जीवेन्धनराशिषु ज्वलिता॥ बृहत्संहिता, 33.05/ नारदसंहिता, 36.05
19. तारा हस्तं दीर्घा शुक्ला ताम्राब्जतन्तुरूपा वा।
तिर्यगधश्चोर्ध्वं वा याति वियत्युह्यमानेव॥ बृहत्संहिता, 33.03
20. स्वर्गाच्युतानां रूपाणि यान्युल्कास्तानि वै भुवि।
धिष्ण्योल्काविद्युदशनितारा: पञ्चविधाः स्मृताः॥
पाचयन्ति त्रिभिः पक्षैर्धिष्ण्योल्काशनिसंज्ञिताः।
विद्युत् षड्भिरहोभिश्च तारास्तद्वत् फलप्रदाः॥
फलपाककरीतारा धिष्ण्याख्यार्धा फलप्रदा।
उल्का विद्युदशनि सम्पूर्णफलदा नृणाम्॥ नारदसंहिता, 36.01-03
21. भाग्यादित्यधनिष्ठामूलेषूल्काहतेषु युवतीनाम्।
विप्रक्षत्रियपीडा पुष्यानिलविष्णुदेवेषु॥
ध्रुवसौम्येषु नृपाणामुग्रेषु सदारुणेषु चौराणाम्।
क्षिप्रेषु कलाविदुषां पीडा साधारणे च हते॥ बृहत्संहिता, 33.18-19/ नारदसंहिता, 36.18-19
22. संस्पृशती चन्द्रार्कौ तद्विसृता वा सभूप्रकम्पा च।
परचक्रागमनृपभयदुर्भिक्षावृष्टिभयजननी॥ बृहत्संहिता, 33.12
23. दिनकरमुदयास्तसंस्थितमु ल्काशनिविद्युतो यदा हन्युः।
नरपतिमरणं विन्द्यात्तदाऽन्यराजप्रतिष्ठा च॥ बृहत्संहिता, 03.33/ वसिष्ठसंहिता, 02.21/नारदसंहिता, 02.24
24. उल्कया यदा शशी ग्रस्त एव हन्यते।
हन्यते तदा नृपो यस्य जन्मनि स्थितः॥ बृहत्संहिता, 28.04
25. शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णघ्नी।
26. क्रमशश्चैतान् हन्युर्मूर्धोरःपार्श्वपुच्छस्थाः॥
श्यावारुणनीलासृग्दहनासितभस्मसन्निभा रूक्षा।
सन्ध्यादिनजा वक्रा दलिता च परागमभयाय॥ बृहत्संहिता, 33.14,16
26. पवनः पवनाभिहतो गगनादवनौ यदा समापतति।
भवति तदा निर्घातः स च पापो दीप्तविहगरुतः॥ बृहत्संहिता, 39.01/ नारदसंहिता, 36.62
27. अर्कोदयेऽधिकरणिकनृपधनियोधाङ्गनावणिग्वेश्याः।
आप्रहरांशेऽजाविकमुपहन्याच्छूद्रपौरांश्च॥
आमध्याह्नाद्राजोपसेविनो ब्राह्मणांश्च पीडयति।
वैश्यजलदांस्तृतीये चौरान् प्रहरे चतुर्थे तु॥ बृहत्संहिता, 39.02-05/ नारदसंहिता, 36.63-67
28. भद्रबाहुसंहितायां चतुर्थोऽध्यायः।
29. बृहत्संहिता, 34.01
30. शिखिगलसमेऽतिवर्षं बहुवर्णे नृपवधो भयं धूम्रे।
हरिचापनिभे युद्धान्यशोककुसुमप्रभे चापि॥ बृहत्संहिता, 34.06
31. नागरकाणामभ्यन्तरस्थिता यायिनां च बाह्यस्था।
परिवेषमध्यरेखा विज्ञेयाक्रन्दसाराणाम्॥
रक्तः श्यामो रूक्षश्च भवति येषां पराजयस्तेषाम्।
स्निग्धः श्वेतो द्युतिमान् येषां भागो जयस्तेषाम्॥ बृहत्संहिता, 34.22-23/ नारदसंहिता, 36.43-45
32. चक्रधनुः शृङ्गाटकदण्डपुरप्रासवज्रसंस्थानाः।
क्षुद्वृष्टिकरा लोके समराय च मानवेन्द्राणाम्॥ बृहत्संहिता 20.02
33. अनेकवृक्षवर्णाश्च परिवेषा नृपान्तकृत्।
अहर्निशं प्रतिदिनं चन्द्रार्कावरुणो यदा॥
परिविष्टो नृपवधं कुरुतो लोहितौ यदा।
द्विमण्डलश्चमूनाथं नृपघ्नोऽथ त्रिमण्डलम्॥ बृहत्संहिता, 36.32
34. विप्रक्षत्रियविट्शूद्रहा भवेत् प्रतिपदादिषु क्रमशः।
श्रेणीपुरकोशानां पञ्चम्यादिष्वशुभकारी॥
युवराजस्याष्टम्यां परतस्त्रिषु पार्थिवस्य दोषकरः।
पुररोधो द्वादश्यां सैन्यक्षोभस्त्रयोदश्याम्॥
नरपतिपत्नीपीडां परिवेषोऽभ्युत्थितश्चतुर्दश्याम्।
कुर्यात् तु पञ्चदश्यां पीडां मनुजाधिपस्यैव॥ बृहत्संहिता, 34.19-21/ नारदसंहिता, 36.39-42
35. परिवेषमण्डलगतो रवितनयः क्षुद्रधान्यनाशकरः।
जनयति च वातवृष्टिं स्थावरकृषिकृन्निहन्ता च॥
भौमे कुमारबलपतिसैन्यानां विद्रवोऽग्निशस्त्रभयम्।
जीवे परिवेषगते पुरोहितामात्यनृपपीडा॥
मन्त्रिस्थावरलेखकपरिवृद्धिश्चन्द्रजे सुवृष्टिश्च।
शुक्रे यायिक्षत्रियराज्ञीपीडा प्रियं चान्नम्॥
क्षुदनलमृत्युनराधिपशस्त्रेभ्यो जायते भयं केतौ।
परिविष्टे गर्भभयं राहौ व्याधिर्नृपभयं च॥ बृहत्संहिता, 34.12-15/ नारदसंहिता, 36.33-35
36. प्रतिदिवसमहिमकिरणः परिवेषी सन्ध्ययोर्द्वयोरथवा।
रक्तोऽस्तमेति रक्तोदितश्च भूपं करोत्यन्यम्॥ बृहत्संहिता, 03.34/नारदसंहिता, 02.25
37. युद्धानि विजानीयात् परिवेषाभ्यन्तरे द्वयोर्ग्रहयोः।
दिवसकृतः शशिनो वा क्षुदवृष्टिभयं त्रिषु प्रोक्तम्॥

यात चतुर्षु नरेन्द्रः सामात्यपुरोहितो वशं मृत्योः।
प्रलयमिव विद्धि जगतः पञ्चादिषु मण्डलस्थेषु॥ बृहत्संहिता, 34.16-17/नारदसंहिता, 36.37
38. अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम्।
यदा तदा नागमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा॥ बृहत्संहिता, 36.05
39. गन्धर्वनगरं व्योम्नि परुषं यदि दृश्यते।
वाताशनिनिपातांस्तु तत् करोति सुदारुणम्॥ भद्रबाहुसंहिता, 11.11
40. इन्द्रायुधसवर्णं च धूमाग्निसदृशं च यत्।
तदाग्निभयमाख्याति गन्धर्वनगरं नृणाम्॥ भद्रबाहुसंहिता, 11.12
41. खण्डं विशीर्णं सच्छिद्रं गन्धर्वनगरं यदा।
तदा तस्करसंघानां भयं सञ्जयते सदा॥ भद्रबाहुसंहिता, 11.13
42. यदा गन्धर्वनगरं सप्राकारं सतोरणम्।
दृश्यते तस्करान् हन्ति तदा चानूपवासिनः॥ भद्रबाहुसंहिता, 11.14
43. यदा गन्धर्वनगरं प्रकटं तु दवाग्निवत्।
दृश्यते पुररोधाय तद्भवेन्नात्र संशयः॥ भद्रबाहुसंहिता, 11.17
44. अरण्यानि तु सर्वाणिगन्धर्वनगरं यदा।
आरण्यं जायते सर्वं तद्राष्ट्रं नात्र संशयः॥ भद्रबाहुसंहिता, 11.28
45. अम्बरेषूदकं विन्द्याद् भयं प्रहरणेषु च।
अग्निजेषूपकरणेषु भयमग्नेः समादिशेत्॥ भद्रबाहुसंहिता, 11.29
46. उदगादिपुरोहितनृपबलपतियुवराजदोषदं खपुरम्।
सितरक्तपीतकृष्णं विप्रादीनामभावाय॥ बृहत्संहिता, 36.01
47. विशेषतापसव्यं तु गन्धर्वनगरं यदा।
परिचक्रेण महता नगरं चाभिभूयते॥ भद्रबाहुसंहिता, 11.15
48. अपसव्यं विशीर्णं तु गन्धर्वनगरं यदा।
तदा विलुप्यते राष्ट्रं बलक्षोभश्च जायते॥ भद्रबाहुसंहिता, 11.18
49. सध्वजं सपताकं वा गन्धर्वनगरं भवेत्।
दीप्तां दिशं समाश्रित्य नियतं राजमृत्युदम्॥ भद्रबाहुसंहिता, 11.22
50. सर्वास्वपि यदा दिक्षु गन्धर्वनगरं भवेत्।
सर्वे वर्णा विरुध्यन्ते सर्वदिक्षु परस्परम्॥ भद्रबाहुसंहिता, 11.08
51. पूर्वसूरे यदा घोरं गन्धर्वनगरं भवेत्।
नागराणां वधं विन्द्यात् तदा घोरमसंशयम्॥ भद्रबाहुसंहिता, 11.02
52. अस्तमायाति दीप्तांशौ गन्धर्वनगरं भवेत्।
यायिनां च तु भयं विन्द्याद् तदा घोरमुपस्थितम्॥ भद्रबाहुसंहिता, 11.03
53. रक्तं गन्धर्वनगरं दिशं दीप्तां यदा भवेत्।
शस्त्रोत्पातं तदा विन्द्याद् दारुणं समुपस्थितम्॥ भद्रबाहुसंहिता, 11.04
54. पीतं गन्धर्वनगरं दिशं दीप्तां यदा भवेत्।
व्याधिं तदा विजानीयात् प्राणिनां मृत्युसन्निभयम्॥ भद्रबाहुसंहिता, 11.05
55. कृष्णं गन्धर्वनगरमपरां दिशिमासृतम्।
वधं तदा विजानीयाद् भयं वा शुद्रयोनिजम्॥ भद्रबाहुसंहिता, 11.07
56. कपिलं सस्यघाताय मांजिष्ठं हरिणं गवाम्।
अव्यक्तवर्णं कुरुते बलक्षोभं न संशयः॥ भद्रबाहुसंहिता, 11.09
57. रक्तं गन्धर्वनगरं क्षत्रियाणां भयावहम्।
पीतं वैश्यान् निहन्त्याशु कृष्णं शूद्रान् सितं द्विजान्॥ भद्रबाहुसंहिता, 11.27
58. अनेकवर्णसंस्थानं गन्धर्वनगरं यदा।
क्षुभ्यन्ते तत्र राष्ट्राणि ग्रामाश्च नगराणि च॥ भद्रबाहुसंहिता, 11.25
59. बृहत्संहिता, 35.01/नारदसंहिता, 36.46
60. जलमध्येऽनावृष्टिर्भुवि सस्यवधस्तरौ स्थिते व्याधिः।
वाल्मीके शस्त्रभयं निशि सचिववधाय धनुरैन्द्रम्॥ बृहत्संहिता, 35.05/नारदसंहिता, 36.48-49
61. विदिगुद्भूतं दिक्स्वामिनाशनं व्यभ्रजं मकरकारि।
पाटलपीतकनीलैः शस्त्राग्निक्षुत्कृता दोषाः॥ बृहत्संहिता, 35.04/नारदसंहिता, 36.47
62. वृष्टिं करोत्यवृष्ट्यां वृष्टिं वृष्ट्यां निवारयत्यैन्द्र्याम्।
पश्चात् सदैव वृष्टिं कुलिशभृतश्चापमाचष्टे॥ बृहत्संहिता, 35.06/नारदसंहिता, 36.49-50
63. चापं मघोनः कुरुते निशायामाखण्डलायां दिशि भूपपीडाम्।
याम्यापरोदक्प्रभवं निहन्यात् सेनापतिं नायकमन्त्रिणौ च॥ बृहत्संहिता, 35.07/नारदसंहिता, 36.50-51
64. इन्द्रायुधं निशिश्वेतं विप्रान् रक्तं च क्षत्रियान्।
निहन्ति पीतकं वैश्यान् कृष्णं शूद्रभयंकरम्॥
भज्यते नश्यते तत्तु कम्पते शीर्यते जलम्।
चतुर्मासं परं राजा म्रियते भज्यते तदा॥ भद्रबाहुसंहिता, 14.58-59
65. बृहत्संहिता, 30.01
66. प्रहरणसदृशैर्जलदैः स्थगितः सन्ध्याद्वयेऽपि रणकारी।
मृगमहिषविहगखरकरभसदृशरूपैश्च भयदायी॥ बृहत्संहिता, 03.35/नरदसंहिता, 02.26
67. अनावृष्टिर्भयं रोगं दुर्भिक्षं राजविद्रवम्।
रूक्षायां विकृतायां च सन्ध्यायामभिनिर्दिशेत्॥ भद्रसंहिता, 07.23
68. उदयास्तसमये भानुराच्छिन्नः शस्त्रसन्निभैः।
घनैर्युद्धं खरोष्ट्राद्यैः पापरूपैर्भयप्रदः॥ नारदसंहिता, 02.26
69. दीप्तमृगाण्डजविरुता प्राक् सन्ध्या देशनाशमाख्याति।
दक्षिणदिक्स्थैर्विरुता ग्रहणाय पुरस्य दीप्तास्यैः॥ बृहत्संहिता, 30.05
70. गृहतरुतोरणमथने सपांशुलोष्टोत्करेऽनिले प्रबले।
भैरवरावे रूक्षे खगपातिनि चाशुभा सन्ध्या॥ बृहत्संहिता, 30.06
71. वरुणवायुरिलारजसां कणानिकरमुग्रजवो द्रुतमुत्क्षिपन्।
वहतिचेदभितो धरणीभृतो भुजबलं सकलं व्रजति क्षयम्॥ वनमाला, 01.16
72. बृहत्संहिता, 27.06
73. दिग्दाहः पीतवर्णश्चेत् क्षितीशानां भयप्रदः।
देशनाशायाग्निवर्णोऽरुणवर्णोऽनिलप्रदः॥ नारदसंहिता, 36.68
74. धूमः सस्यविनाशाय कृष्णः शस्त्रभयप्रदः।
प्राग्दाहः क्षत्रियाणां च नरेशानामनिष्टदः॥ नारदसंहिता, 36.69
75. आग्नेय्यां युवराजस्य शिल्पिनामशुभप्रदः।
पीडां व्रजन्ति याम्यायां मूकवैश्यनराधमाः॥ नारदसंहिता, 36.70
76. नैर्ऋत्यां दिशिचौराश्च पुनर्भूप्रमदां नृणाम्।
प्रतीच्यां कृषिकर्त्तारो वायव्यां पशुजातयः॥ नारदसंहिता, 36.71
77. सौम्ये विप्रादि चैशान्यां वैश्यानां खण्डिनोऽखिलाः।
दिग्दाहः स्वर्णवर्णाभो लोकानां मङ्गलप्रदः॥ नारदसंहिता, 36.72
78. सितेन रजसाछन्नादिग्ग्रामवनपर्वताः।
यथा तथा भवन्त्येते निधनं यान्ति भूमिपाः॥
रजः समुद्भवो यस्यां दिशि तस्यां विनाशनम्।
तत्र तत्रापि जनानां हानिदः शस्त्रकोपतः॥ नारदसंहिता, 36.73-74
79. मन्त्रीजनपदानाञ्च व्याधिदं चासितं रजः।
अर्कोदयेष विजृम्भन्ति गगनं स्थगयन्ति च॥ नारदसंहिता, 36.75/बृहत्संहिता, 38 अध्यायः।
80. दिनद्वयञ्च त्रिदिनमत्युग्रभयदं रजः।
रजो भवेदेकरात्रं नृपं हन्ति निरन्तरम्॥
परचक्रागमं न स्यात् द्विरात्रं सततं यदि।
क्षामडामरमातङ्कस्त्रिरात्रं सततं यदि॥
ईतिदुर्भिक्षमतुलं यदि रात्रचतुष्टयम्।
निरन्तरं पञ्चरात्रं महाराजविनाशनम्॥
ऋतावन्यत्र शिशिरात्सम्पूर्णफलदं रजः। नारदसंहिता, 36.76-79/बृहत्संहिता, 38 अध्यायः।

ISSN 2348-7828

# व्यासपरम्परा महापुराणानि च

डॉ. ललितकिशोरशर्मा

''पुराणं'' शब्दः प्राचीनधार्मिकसाहित्यस्यार्थे वैदिकयुगादेव प्रचलितः। अथर्ववेदानुसारं पुराणस्याविर्भावः ऋग्यजुस्सामच्छन्दोभिः सह अभवत्। यथा प्राप्यते 'ऋचः सामानि छन्दांसि पुराणं यजुषा सहेति।'[1] पुराणस्य विषये बृहदारण्यकोपनिषदि लिखितं यत् 'अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणम्' पुराणानि धर्मस्याङ्गं कृत्वा तेषु प्राचीनकथानां, वंशावलीनां, इतिहासभूगोलयोः तथ्यानां, सामान्यतः ज्ञानविज्ञानस्य च सर्वान् विषयान् पुराणेषु कालक्रमेण समाविवेश भगवान् व्यासः। महाभारतमिव पुराणमपि विकासशीलं साहित्यमस्ति। यस्यान्तिमं सम्पादनं श्रीकृष्णद्वैपायननामकव्यासेन कृतम् इत्याधुनिकाः वदन्ति।

अस्माकं भारतीयधार्मिकसाहित्यिकग्रन्थेषु पुराणानां गौरवमयं स्थानं वर्तते। ऋते पुराणग्रन्थाध्ययनात् न कोऽपि जनो विचक्षणो भवति। अस्माकं पूर्वजानां तु सुदृढेयं धारणाऽऽसीत्–यद् वेदवेदाङ्गाध्ययनं न तावत् फलति यावत् पुराणानामध्ययनं न भवति। पुराणाध्ययनान्तरमेव अध्येतारः वैचक्षण्यम् अधिगच्छन्ति। शास्त्रकुशला अपि त एव भवन्ति ये पुराणानाम् अध्ययनं कुर्वन्ति।

यद्यपि सनातनधर्मणः प्राचीनाः प्रामाणिकाः च ग्रन्थाः वेदाः सन्ति, नात्र कस्यापि विमतम्, किञ्च वेदानामुपबृंहणं पुराणं करोति। अतः वेदानां पूरकग्रन्थाः पुराणग्रन्थाः उच्यन्ते। यथोपलभ्यते महाभारते–

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।**
**बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति।।**[2] इति।

एतेन पुराणानां वेदपूरकत्वं सिध्यति। इत्येवं मत्वा एव वैष्णवाचार्याः पुराणानामपि वेदसादृश्यमङ्गीकुर्वन्ति।

भवतु न वा भवतु पुराणानां वेदसादृश्यम्, किञ्च एतत् तु सत्यं यत् पुराणानि वेदार्थस्य उपबृंहणम् अवश्यमेव कुर्वन्ति। आचार्यः जीवगोस्वामी तु पुराणानां महनीयतायां कारणत्रयं दर्शितवान्। वैदिकसाहित्यस्य आनन्त्यं दुरवबोधत्वं वचनविरुद्धत्वमिति कारणत्रयम्। उक्तकारणत्रयेण जायमाना दुरूहता पुराणसाहित्ये तु न कुत्रापि वर्तते। परिमितं पुराणसाहित्यम् न तस्मिन् दुरधिगमत्वम् न चार्थनिर्णये मतिभ्रमोत्पत्तिरिति। अतएव वक्तुं शक्यते यत् जने जने धर्मतत्त्वप्रकाशाय सरलभाषामाध्यमेन पुराण–साहित्यमेव सक्षमसाहित्यं वर्तते।

कथाऽऽख्यानोपख्यानमाध्यमेन धर्मस्वरूपं सरहस्यम् आकर्षक–रीत्या पुराणानि जनान् प्रापयन्ति। अतः यादृशः आकर्षणं पुराणवाक्ये न तादृश् वेदमन्त्रे स्मृतिवचने वा पश्यामः। तथ्यमिदं नारदीयपुराणस्येदं वचनं सुस्पष्टं प्रतिपादयति–

**वेदार्थादधिकं मन्ये पुराणार्थं वरानने।**
**वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः।।**[3]

इति पुराणमाहात्म्यम्।

**व्यासपरम्परा महापुराणानि च**–द्वापरे कृष्णद्वैपायनो व्यासो बभूव। तथैव तत्पूर्वमपि वाल्मीकिशक्ति–पराशरादयो बहवो व्यासा आसन्। तेषां सर्वेषां नाम्ना संक्षिप्तः परिचयोऽपि प्रकृतप्रसङ्गे प्रस्तोस्यते।

निर्विवादोऽयं विषयो यत् अनेके वेदव्यासाः बभूवुः। यथा विष्णु–स्कन्द–देवीभागवत–लिङ्गपुराणेष्वनेकेषां व्यासानाम् नाम ग्रहणपूर्वकं परिचयः प्राप्यते। उक्तपुराणग्रन्थेषु अष्टाविंशतिव्यासाः चर्चिताः सन्ति। व्यासशब्दस्य व्याख्या महाभारते–

'व्यासवेदान् यस्मात्स तस्माद् व्यास इति स्मृतः' एवमुल्लिखिता दृश्यते। विष्णुपुराणे वेदव्यासानां नामानि तेषाम् उत्पत्तिकालश्च वर्णितो विद्यते। प्रसङ्गेऽस्मिन् पराशरमैत्रेयसंवादांशो द्रष्टव्यः:–

एकत्र श्रीपराशरं सम्बोध्य मैत्रेयः कथयति–

भवदुक्तेन ज्ञातं मया यदिदं सर्वं जगद् विष्णुमयं विद्यते। अस्य स्थितिः विष्णोः, प्रभवोऽपि विष्णोरेव, लयश्चापि विष्णावेव, विष्णुमतिरिच्य न किमप्यत्रेति। कथञ्च व्यासरूपेण अवतीर्य प्रतियुगं वेदान् विभजते भगवान् इति मे महती जिज्ञासा, परिहरतु भवान् इमाम्। वेदान् तेषां शाखाः प्रशाखाश्चापि बोधयतु भवान्।

इति मैत्रेयेण पृष्टो भगवान् पराशरो वदति–महामते! सहस्रशाखिनं भगवन्तं वेदं सतत्त्वतो विस्तरेण निरूपयितुं कः समर्थः? (न कोऽपीति) तथापि संक्षेपतो वदिष्यामि।

महामुने! प्रतिद्वापरयुगं भगवान् विष्णुः व्यासरूपेण अवतरति। तथा च मानवानां सततं क्षीयमाणं बलबुद्धिविभवं समीक्ष्य तेषां हितसम्पादनाय एकमेव वेदं शाखाप्रशाखादिभिः भेदप्रभेदैः वितनोति। भगवतो विष्णोरंश–भूतो भगवान् वेदव्यासः प्रतिमन्वन्तरं मन्वन्तरेऽपि प्रतियुगं धरामिमाम् अलङ्करोति।

अस्मिन् वैवस्वतमन्वन्तरे द्वापरयुगेऽवतीर्णो भगवान् व्यासः श्रीकृष्ण–द्वैपायननाम्ना प्रथितोऽस्ति। प्रादुर्भूतेषु व्यासेषु अष्टाविंशतितमो व्यासः श्रीकृष्ण–द्वैपायनः सत्यवत्यां महर्षिपराशरेण जातः। अयमेव सत्यवती सुतः वेदान् द्वापरयुगे विभजते स्म। यथा प्राप्यते श्रीमद्विष्णुपुराणे–

**वेदव्यासा व्यतीता ये ह्यष्टाविंशतिसत्तमः।**
**चतुर्धा यैः कृतो वेदो द्वापरेषु पुनः पुनः।।**[4] इति

स्वायम्भुवमन्वन्तरे भगवान् नारायणो हि वेदोपदेष्टाऽपान्तरतमा (आचार्यः) बभूव, अतः सैव नारायणांशभूतोऽपान्तरतमा (नाम) आदिव्यास अभूत्। तदुत्तरवर्तिव्यासानां परम्परा देवीभागवतेऽपि प्राप्यते। यथा तत्र समेषां व्यासानां नामानि प्राप्यन्ते–

**द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयम्भुवा।**
**प्रजापतिर्द्वितीये तु द्वापरे व्यासकार्यकृत्।।**
**तृतीये चोशना व्यासश्चतुर्थे तु बृहस्पतिः।**

**सविता पञ्चमे व्यासो षष्ठे मृत्युस्तदापरे॥**
**मघवा सप्तमे प्राप्ते वशिष्ठस्त्वष्टमे स्तुतः।**
**सारस्वतस्तु नवमे त्रिधामा दशमे तथा।**
**एकादशे तु त्रिवृषो भरद्वाजस्ततः परम्।**
**त्रयोदशे चान्तरिक्षो धर्मश्चापि चतुर्दशे॥**
**त्रय्यारुणिः पञ्चदशे षोडशे तु धनञ्जयः।**
**मेधातिथिः सप्तदशे व्रती ह्यष्टादशे तथा।**
**अत्रिरेकोनविंशे च गौतमस्तु ततः परम्।**
**उत्तमश्चैकविंशस्य हर्यात्मा परिकीर्तितः॥**
**वेनो वाजश्रवाश्चैव सोमो मुष्यायणस्तथा।**
**तृणबिन्दुस्तथा व्यासो भार्गवस्तु ततः परम्॥**
**ततः शक्तिर्जातुकर्ण्यः कृष्णद्वैपायनस्ततः।**
**अष्टाविंशति संख्येयं कथिता च मयाश्रुता॥**[5]

**इति देवीभागवते प्र.स्क.द्वितीयेऽध्याये प्राप्यते।**

**उपयुर्क्तानां नाम्नां सूचिः यथा**-प्रथमे द्वापरे स्वयं भगवान् ब्रह्मा व्यास आसीत्, द्वितीये प्रजापतिः, तृतीये शुक्राचार्यः, चतुर्थे बृहस्पतिः, पञ्चमे सूर्यः, षष्ठे मृत्युः, सप्तमे इन्द्रः, अष्टमे वशिष्ठः, नवमे सारस्वतः, दशमे त्रिधामा, एकादशे त्रिवृषः, द्वादशे भरद्वाजः, त्रयोदशे अन्तरिक्षः, चतुर्दशे धर्मः, पञ्चदशे त्रय्यारुणिः, षोडशे धनञ्जयः, सप्तदशे मेधा-तिथिः, अष्टादशे व्रतीः, नवदशे अत्रिः, विंशतितमे गौतमः, एकविंशतितमे उत्तमः, द्वाविंशतितमे द्वापरे वाजश्रवस गोत्रीयो वेणो व्यासः त्रयोविंशतितमे च तृणबिन्दुनाम्ना प्रथितः सोमः, चतुर्विंशतितमे भार्गवः, पंचविंशतितमे तु शक्तिः, षड्विंशतितमेऽहं पराशरः सप्तविंशतितमे जतुकर्णः ततोऽष्टाविंशतितमे कृष्ण-द्वैपायनो व्यासोऽभवत्।

एवं प्राप्तायां व्यासानां परम्परायां कतमो व्यासः प्राचीनः कतम-श्चाऽर्वाचीन इति विवाद एव नोत्पद्यतेऽतो निर्विवादेयं व्यासपरम्परा। प्रामाणिकं देवीभागवतविष्णुमहापुराणादौ तत्रोक्त क्रमो दर्शितः।

**अथ पुराणानां संक्षिप्तः परिचयः**-प्रसिद्धानि (18) अष्टादशपुराणानि सन्ति। एकत्र तेषाम् अयम् अधोलिखितः क्रमो लभ्यते। आदौ तु ब्रह्मपुराणम् अभूत् द्वितीयं पद्मपुराणं तृतीयं विष्णुपुराणं चतुर्थं वायुपुराणं भागवतं पञ्चमं षष्ठं नारदपुराणं ततो मार्कण्डेयं ततोऽग्निपुराणम् ततो भविष्यत्पुराणं ततो लिङ्गं ततो वाराहं ततः स्कन्दं ततो वामनं ततः कूर्मपुराणं ततो मात्स्यं ततश्च ब्रह्मवैवर्त-महापुराणमिति। अपरत्रायमपि क्रमः आदौ वायुमत्स्यौ पुराणे लिखितेऽन्तिमं भविष्यत्पुराणमिति।

भवतु नाम कोऽपि क्रमः पुराणानामाविर्भावस्य किन्तु विषयेस्मिन् तटस्थ बुद्ध्या विचारणीयमस्ति। अत्र यथा सृष्टिक्रमः तदनुगतः क्रमः पुराणानामा-विर्भावस्यापि वक्तव्यम्। सर्गादौ केवलं ब्रह्म एवासीत्। 'ब्रह्मणः प्रजाः प्रजायन्ते' इति श्रुतेः ब्रह्मण एवेयं सृष्टिः। एव ब्रह्मपुराणस्यैवाऽऽदि-पुराणत्वकथनमुचितम्। ब्रह्मणो नाभिदेशात् पद्मस्य प्रादुर्भावो दर्शितः। एतेनोद्धृता श्रुतिः संगच्छतेऽतो ब्रह्मपुराणानन्तरं पद्मपुराणस्य स्थानं कथनमपि संगतमेव। एवं विचारे कृते पुराणानां विष्णुपुराणोक्तक्रम एव समुचितः प्रतिभाति।

पुराणानां पौर्वापर्यविषये यद्यपि विदुषां मतैक्यं नास्तीति पश्यामि किञ्च, इति तु सत्यम्, पुराणानां रचनाक्रमोऽपि अवतारक्रम इव सुनिश्चित एव। अस्तु पुराणानामेककालिकत्वं न कथमपि वक्तुं शक्यते। एषामेककालिकत्वं समका-लिकत्वम् औपचारिकमेव वेदितव्यम्। पुराणानां प्रतिपाद्य-विषयदृष्ट्या तु विद्यत ऐक्यम्, किन्तु तत्र स्तुतदेवतासम्बन्धेन विभिन्नता अपि (भेदोऽपि तेषु) स्पष्टमेव।

यद्यपि सर्वेषां पुराणानां प्रतिपाद्यो विषय एक एव तथापि तेषां येऽवान्तरविषयाः सन्ति ते प्रतिपुराणं भिन्न-भिन्नस्वरूपाः सन्ति। मूलप्रतिपाद्य-विषयस्तु-

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंशानुकीर्तनं राज्ञां पुराणं पञ्चलक्षणम्।**। इति

वस्तुतस्तु पुराणेषु भारतीयजीवनशैल्याः सर्वे पक्षाः प्रतिपादिताः विलोक्यन्ते। प्रतिपादनशैली प्रतिपुराणं किञ्चिद् भिन्नस्वरूपाऽपि समाना हि दृश्यते।

**पुराणानां रचनोद्देश्यम्-**

यद्यपि पुराणलक्षणे पुराणरचनोद्देश्यं समवेतं दृश्यते, भारतीय-धर्मक्षेत्रस्य सीमाज्ञानं, सृष्टिविषयकं तात्विकज्ञानं सृष्ट्युत्पत्तिस्थितिलयेति सृष्टेरेवावस्था-त्रयस्य मुनिजनानुभूतज्ञानं देवमानवानाम् ऐतिहासिकं ज्ञानं कयारीत्याऽस्माभिः वर्तनीयम् इत्यादि सर्वं ज्ञानं यद् वेदे लभ्यते तत् अस्मभ्यं सुलभं स्यात् इत्येतदर्थं पुराणरचना बभूव।

एवं सोद्देश्यकमिदं पुराणसाहित्यं, पुराणसाहित्येऽष्टादशमहापुराणानि सन्ति, एतावती हि संख्योपपुराणानां विद्यते। यद्यपि पुराणपरिचये समेषां पुराणोपपुराणानां परिचयोऽवश्यमेव लेखनीयो विद्यते तथापि मयाऽत्र उपपुराणादीनां नामग्रहणपूर्वकं प्रमुखपुराणानां प्रसिद्धाष्टदशपुराणानामेव संक्षेपतः परिचयः प्रस्तूयते। पुराणानां नाम्नः आद्यक्षरं संगृह्य लिखितं श्लोकमेकमत्रदर्शयामि-

**मद्वयं भद्वयं ब्रत्रयं वचतुष्ट्यम्।**
**अनापलिङ्गकूस्कानि पुराणानि प्रचक्षते।**। इति

मत्स्यमार्कण्डेयेति मद्वयम्, भविष्यत्-भागवतेति भद्वयम्, ब्रह्म-ब्रह्माण्ड-ब्रह्मवैवर्तेति ब्रत्रयम्, वराह-वामन-वायु-विष्णुपुराणेति वचतुष्ट्यम्, अकारोऽग्नि-पुराणस्य नाकारो नारदपुराणस्य पकारो पद्मपुराणस्य नाम्नः प्रारम्भिको वर्णः लिङ्गइत्यनेन लिङ्गपुराणं गकारेण गरुणपुराणं कूवर्णेन कूर्मपुराणं स्क इत्यनेन स्कन्दपुराणं गृह्यते। एवम् अष्टादशपुराणानां नामानि श्लोकेऽस्मिन् कविना निर्दिष्टानि।

उक्ताष्टदशपुराणेभ्यः भिन्नान्यपि सन्ति अष्टादशपुराणानि, तान्येवोप-पुराणानि कथ्यन्ते, उपपुराणानां नामानि गारुडे पश्यामः। गरुडपुराणोक्तानि तेषां नामानि मयात्र लिख्यन्ते ङ्क उपपुराणेषु सनतकुमार, नारसिंह, स्कन्द, शिवधर्म, आश्चर्य, नारदीय, कापिल, वामन, औशनस, ब्रह्माण्ड,

वारुण, कालिका, माहेश्वर, साम्ब, सौर, पारशर, मारीचेति सन्ति। उपपुराणेषु मतभेदोऽपि वर्तते। गरुडपुराणोक्तनामानि तूपपुराणानां लिखितानि किञ्च, देवीभागवतानुसारं स्कन्द-वामन-ब्रह्माण्ड-मारीच-भार्गवेति पञ्चानां पुराणोपपुराणानां स्थाने शिव-मानव-आदित्य-भागवत-वासिष्ठेति पञ्चनामानि प्राप्यन्ते। अतोऽत्रापि विवादः समापतितः यत् किं महापुराणं किं वोपपुराणं विद्यते।

**पुराणमहत्त्वम्-**

यद्यपि पुराणानाम् धार्मिकदृष्ट्या विशिष्टं महत्वं तु विद्यते किञ्च तदपेक्षया न कथमपि न्यूनं महत्वं विद्यते पुराणानामैतिहासिकम् इति। पुराणमेव इतिहासस्य सम्पोषणं करोति। मानवसमाजस्येतिवृत्तं सर्गारम्भात् अद्यावधि-पर्यन्तं केवलं पुराणानि एव प्रस्तुवन्ति। मानवस्य सृष्टेश्चेतिहासः आप्रलयं पुराणेष्वेव दर्शितः। अत्र राज्ञां वंशानुकीर्तनेनाधुनिकराज्ञां सत्येतिहासोऽस्माकं सम्मुखे समायाति। पुराणं तथ्यात्मकेतिहासं प्रस्तौति। पुराणेषु भौगोलिकं ज्ञानमपि यथार्थरूपेण उपस्थापितं मुनिभिः।

मानवजीवनोपयोगिज्ञानं सर्वं हि पुराणेषु प्रोतं वर्तते। अतः जीवनं सुखमयं विधातुं पुराणानि सहायकानि मार्गदर्शकानि च सन्ति। जनसामान्योऽपि पुराणैः तत्सर्वं विज्ञातुमर्हति, यद् विद्वाँसो वेदाध्ययनेन, आधुनिका विज्ञानादि-शास्त्राध्ययनेन जानन्ति। अतो विश्वज्ञानकोषः पुराणमभूत्। पुराणानां भाषाऽतीव सरला विशेषतः सामान्यजनबोधगम्या विद्यते।

**पुराणानां धर्मग्रन्थत्वम्-**

पुराणकृद्भिः वैदिको धर्मः पुराणेषु व्याख्यातः। अतो वेदपुराणयो अभेदः। वेदपुराणयोरुभयोः धर्मप्रतिपादनपरत्वात्। वैदिकधर्मे यज्ञस्य प्राधान्यमभूत् पौराणिके पूर्तकर्मणः प्राधान्यम्। सनातनविचारधारायाम् इष्टापूर्तयोः प्राधान्यम्। वेदेषु सर्वव्यापको ब्रह्मसूर्याग्निवरुणादिविविध-रूपेण स्तूयते तद्वत् पुराणेषु अपि सैव विष्णु शिवादिरूपेण रामकृष्णादिरूपेण वा स्तूयते। चेतनाचेतनजगतः साङ्गोपाङ्गधर्मो वेदैः निरूप्यते, तथैव पुराणैरपि निरूप्यतेऽतः पुराणानां धर्मग्रन्थत्वं ज्ञेयम्।

सर्वेषां पुराणानां प्राचीनेतिहासस्य प्रस्तुतिः ब्रह्माण्डोदया-दारभ्याऽऽप्रलयात् सृष्टिनिरूपणं, प्रधानराजवंशानां तत्रोद्भूतानां प्रमुखानाम् अनुकरणीय-चरित्राणां राज्ञां जीवनवृत्तवर्णनम् एव कर्तव्यमस्ति। अतः परं पुराणेषु भक्तिज्ञानवैराग्यब्रह्मज्ञानादीनां निरूपणं विद्यते।

सीतोपनिषदि 'इतिहासपुराणाख्यमुपाङ्गञ्च प्रकीर्तितम्' इति प्राप्यतेऽतः वास्तविको वेदार्थः इतिहासपुराणाभ्यां विज्ञायते ताभ्यामेव च समर्थनीयः। पुराणानामस्मिन् जगति प्रादुर्भावः सूतशौनकादिभिः महर्षिभिः विहितपारस्परिकसंवादैरभूत्।

यद्यपि ब्रह्मपुराणमादिङ्कृत्वाऽष्टादशपुराणानि प्रादुरभवन् किञ्चाऽत्राहम् अकारादिक्रमानुरोधेनाग्नेः (अग्निपुराणस्य) परिचयं प्रस्तौमि। सर्वेषां पुराणानां परिचयोऽत्र संक्षिप्यैव द्वित्रैः शब्दैरेव प्रस्तोस्यते विस्तारभयात्।

1. अग्निपुराणम्-अष्टादशपुराणेषु महत्वपूर्णं स्थानम् अग्निपुराणस्य। 'अग्निर्वै सर्वाः देवताः'[6] इति श्रुत्या अग्नेरेव ब्रह्मरूपत्वम् अस्माकं महर्षिभिः अङ्गीकृतम्, तस्माद् अग्निपुराणस्यापि प्राथम्यं मुख्यत्वञ्च, पुराणमिदं पुराणलक्षण-समन्वितं पञ्चदशसहस्रश्लोकमयं विद्यते। यद्यपि श्लोकसंख्या परिमाणमिदं विसंवादि वर्तते। द्वादशसहस्रश्लोका सन्ति अग्निपुराणे इति बहूनां विदुषां मतमस्ति, किन्तु मयाऽत्र नारदपुराणानुसारमग्नि-पुराणस्थश्लोकानां संख्या लिखिता। विषयसन्निवेशदृष्ट्याऽग्निपुराणे लक्षणोक्ताः पञ्चविषयास्तु सन्ति किञ्च तेभ्योऽपि व्यतिरिक्ताः शास्त्रीयविषया निवेशिताः सन्ति।

2. कूर्मपुराणम्-'कश्यपो वै कूर्मः एषः आदित्य एव कश्यपः' इति शतपथब्राह्मणश्रुतिः, कश्यप सूर्यः स च कूर्माकृतिः तस्माद् सतत स्त्रवितरसत एव जीवजगदुत्पत्तिरिति। पुराणलक्षणगतविषय-प्रतिपादनेन सह पुराणेऽस्मिन् निरूपितमस्ति विशेषेण। सप्तदशसहस्र-परिमिता श्लोकसंख्या कूर्मपुराणस्य[7]। किञ्च कूर्मे तु-

**इयं तु संहिता ब्राह्मी चतुर्वेदैस्तु सम्मिता।**
**भवन्ति षट्सहस्राणि श्लोकानामत्र संख्यया॥**[8]

इति प्राप्यते।

एतेन षट्सहस्रश्लोकात्मकमिदं महापुराणमिति सामान्यतो विज्ञायते।

3. गरुडपुराणम्-प्राणिमात्रेऽनुप्रविष्टो जीवः तस्य संसरणं भवति, संसरण-प्रकारबोधनाय हि गरुडपुराणम् उक्तम्। भगवान् गरुडः सुपर्णानां पक्षिणां राजा कथितः। जीवस्यापि भगवती श्रुतिः सुपर्णत्वं दिशति। यथा प्रसिद्धोऽयं मन्त्रः-'द्वा सुपर्णा सयुजा सखाया'[9] पतनं जीवस्य शीलः स्वभावः अयं सर्वलोकेषु सञ्चरन्ति। गरुडोऽपि स्वभावतः स्थानात् स्थानं व्रजति। नभसि गच्छति, नभसश्चाधोगच्छति। एवं गुणसाम्यात् क्रियासाम्यात् गरुडो जीवस्थानीयः, पुराणलक्षणोक्तविषयप्रतिपादनेन सह तत्र (प्रेतकल्पः) और्ध्व-कर्माणि निरूपितानि सन्ति।

4. नारदपुराणम्-'आपो नारा इति प्रोक्ता'[10] इति, अत्र नारा शब्दाद् अणि नारः नारांश्च यो ददाति, इति नारदः। अस्मिन्नारदाख्ये पुराणेऽपि पुराण-लक्षणान्तर्गतविषयास्तु निरूपिताः सन्त्येव, सहैव ऋषीणाम् आर्षविद्याश्च प्रतिनिधिभूतो भगवान् नारदः सृष्टिचित्रे प्रतिष्ठापितः इति। पुराणमिदं पञ्चविंशतिसहस्रश्लोकात्मकं स्वीक्रियते।

5. पद्मपुराणम्-ब्रह्माण्डस्य प्रफुल्लपद्माकृतिरिति वर्तुलाऽण्डा-कृतित्वाद् एवाण्डेति कल्प्यते। पद्मपुराणे निखिलब्रह्माण्डस्यैव व्याख्यानदर्शनाद्। अस्माकमाधारभूताण्डाकृतिः भूमिः तदुपरिसृष्टिः जीवाजीवयोः यो बृंहति वर्धयति सः ब्रह्मा, तदाधारभूतधरामण्डलमेव पद्मम् इति। इदं पद्मेव पद्मपुराणे व्याख्यातम्-

**एतदेव महापद्ममुद्भूतं यन्मयं जगत्।**
**तद्वृत्तान्ताऽऽश्रयं यस्मात् पाद्ममित्युच्यते बुधैः॥**

इति पुराणेऽस्मिन् 55000 सहस्रश्लोका: सन्ति, तत्रापि सर्गप्रति-सर्गादीनां यथावत् वर्णनं लभामहे।

6. ब्रह्मपुराणम्–इदं दृश्यमानं जगत् केन निर्मितम् इति जिज्ञासा समाधानाय हि प्रथमं ब्रह्मपुराणं लिखितम्। चतुर्मुखो ब्रह्मा जगत्-सृष्टिकर्ता तस्यैव व्याख्यानमत्र ब्रह्मपुराणे विद्यते। सर्वेषु पुराणेषु सृष्टिप्रक्रिया मुख्यताय प्रतिपाद्या विद्यतेऽथ च प्रतिसर्ग:-प्रलय: सृष्ट्युप्संहृति: चेति द्वयम्, इत्यपि प्रतिपाद्यम्, पञ्चविधं वंशानुचरितं ऋषि-देव-सूर्य-चन्द्राग्निभेदेन, कल्पभेदाद्या अनेकविषया: मन्वन्तर-प्रकरणे संगृह्यन्ते, इत्येतत्सर्वम् सर्वपुराणसामान्यं वर्ण्यमस्तीति। ब्रह्मपुराणमिदं दशसहस्रश्लोकपरिमाणं विद्यते।

7. ब्रह्मवैवर्तपुराणम्–अस्मिन् पुराणे विशेषेण ब्रह्म एव सर्वेषां चराचर-पदार्थानां मूलतत्त्वम्, ब्रह्मण एव सर्वोऽयं विवर्त: (अतत्त्वतो अन्यथा प्रथा) श्रुतिरपि कथयति-'सर्वं खल्विदं ब्रह्म'[11] 'नेह नानास्ति किञ्चन'[12] इत्येतेनाऽखिलं जगद्ब्रह्मणो विवर्त एवेति ब्रह्मवैवर्ते निरूपितम्। पुराणमिदम् अष्टादश-सहस्रश्लोकमयं विद्यते। पुराणलक्षणोक्त-विषयास्तु सन्त्येव।

8. ब्रह्माण्डपुराणम्-'सर्वादौ ब्रह्म सर्वान्ते च ब्रह्म एव' यथाह श्रुति:-

**सहस्रशीर्षा पुरुष: सहस्राक्ष: सहस्रपात्।**
**स भूमिँसर्वत: स्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम्॥**[13] इति

स: ब्रह्म सर्वमभिव्याप्य व्याप्याद् दशाङ्गुलमधिकं तिष्ठति। अर्थात् जगदादौ तदन्ते चाऽपि तत्तिष्ठत्येव। अस्मिन् पुराणे विशेषेण व्याख्याता:। चराचरादिपदार्था: यत्रावस्थिता: सन्ति तद् ब्रह्माण्डमुच्यते। इदं ब्रह्माण्डमेव विशेषेणास्मिन् पुराणे व्याख्यातम् इति।

9. भविष्यत्पुराणम्-इत्यस्मिन् पुराणे पुराणपञ्चलक्षणानुगमा: विषयास्तु सामान्यरूपेण यथावद् व्याख्याता एव। तत्र भगवत: सूर्यस्य सर्वमूलत्वं सुव्याख्यातम्। विशेषतोऽस्मिन् पुराणे कलौ सम्भूतानां राज्ञां चरितेन साकं पारसीकग्रीकादिदेशोद्भूतानां बर्बरा(बाबर)दीनां चरितान्यपि लभ्यन्ते। अतएवाधुनिका: पुराणकालनिर्णये प्राचीनं परम्परागतं मतं न सहन्ते। किञ्च भविष्यत्पुराणे नारदपुराणानुसारं चतुर्दशसहस्रश्लोका: सन्ति।

10. भागवतपुराणम् -पुराणलक्षणगतविषयै: सह सर्वैश्वर्यसम्पन्नो भगवान् समुद्रशायी लक्ष्मीनारायणो हि उपास्यतत्त्वत्वेन प्रतिपादितो विद्यते। परब्रह्म-स्वरूप: सशक्तिको विष्णु: कंसादिदुरात्मभि: कृतपापाचरणै: संपीडितया धरण्या प्रार्थितो: वसुदेवसुतत्वेनावतीर्णोऽभूत् तस्यैव वासुदेवस्य श्रीकृष्णस्य सुचरितमयमिदं पुराणम्। पद्मपुराणोक्तमाहात्म्ये तु पुराणमिदं भगवत: शब्दमयीमूर्तिरिति प्रतिपादितम्। (18) अष्टादशसहस्रश्लोकमयं विद्यते पुराणम् इदम्। मुक्तिदानाय भगवता शुकेन पुराणमिदं परीक्षिताय श्रावितमिति।

11. मत्स्यपुराणम्-सर्गारम्भे दिव्यर्षयो मत्स्याऽगस्त्यवशिष्ठा: सम्बभूवु:। एषु भगवत्स्वरूपेषु मत्स्य: सर्वत्र प्रचरति सर्वं जगद् आपोमयं यदा आसीत् तदा। अस्यैव भगवदवतारस्य मत्स्यस्य विशेषतोऽस्मिन् सत्वात् (वर्ण्यत्वेन) पुराणस्य नाम मत्स्यपुराणं कृतम्। मत्स्यपुराणेऽपि पञ्चदशसहस्रश्लोका: सन्ति।

12. मार्कण्डेयपुराणम्-पुराणलक्षणोक्तविषयानुपपाद्य सहैव पुराणेऽस्मिन् सर्वस्य जगद्रूपकार्यस्य किं मूलं तत्त्वमस्ति? प्रश्नोऽयं प्रकृतिरेवास्य मूलतत्त्वम्, इत्येकं मतमुपस्थाप्य समाहित:। अयमेव विशेषोऽत्र पुराणे दृश्यते। नवसहस्र-श्लोकात्मकमिदं पुराणम्।

13. लिङ्गपुराणम्-पुराणेषु वर्ण्यविषयसर्गप्रतिसर्गाद्यतिरिक्तं वाङ्मनसा-तीतस्य परसूक्ष्मस्य ब्रह्मण: कथं स्थूलजगद्रूपतेति विशेषरूपेण प्रतिपाद्यं विषयं प्रतिपादयितुमेव लिङ्गपुराणमाचरितम्। लीनम् अन्तर्निहितम् अर्थं (ब्रह्म) गमयतीति लिङ्गम्। प्रकृतिर्हि लिङ्गपदेन दर्शनेषूक्त: प्रकृते: प्रथम: परिणामो महत्तत्वं तदेवात्र लिङ्गशब्दार्थ:। अयमेव प्रथमोऽवतार: एतदेवात्र विशेषत: प्रतिपादितम् एकादशसहस्रश्लोकमयञ्चेदं पुराणम्।

14. वराहपुराणम्-पुराणलक्षणोक्तविषयान् निरूप्य, उत्पन्नस्थूलतत्त्वानां परस्परं संयोजनं विधाय पिण्डनिर्माणं भगवान् वराह: कृतवान् एतदेव विशेषेण पुराणेऽस्मिन् प्रतिपादितम्। भगवतो वराहावतारस्य चित्रे दन्तलग्नं धरापिण्डमेतदेव सङ्केतयति। अत्र भूगोलस्य यथार्थवर्णनं पश्याम:। पुराणमिदं चतुर्विंशतिसहस्रश्लोकमयं विद्यते।

15. वामनपुराणम्-दशसहस्रश्लोकात्मकेऽस्मिन् पुराणे सर्वे पुराणविषयास्तु प्रतिपादिता: सन्त्येव विशेषेणात्र भगवतो वामनावतारोद्देश्यं तस्य भूर्भुव: स्वरिति त्रिविक्रमणस्य च निरूपणं प्राप्नोति।

16. विष्णुपुराणम्-त्रयोविंशसहस्रश्लोकात्मकमिदं महापुराणम्। अस्मिन्नपि सर्वे पुराणविषया: प्रतिपादिता: सन्ति। किञ्चिद् विशेषेण विष्णो: वर्णनमत्र प्राप्यते। अस्मिन् महापुराणे भारतवर्षस्य धर्मक्षेत्रस्य राजनैतिकक्षेत्रस्य सीमाज्ञानं निरूपितं पश्याम:।

17. शिवपुराणम्-चतुर्विंशसहस्रश्लोकमयमिदं महापुराणं वायुपुराणाऽपर-नाम्नापि श्रूयते। अस्मिन् विशेषेण शिवतत्त्वस्योपपादनं पश्याम:।

18. स्कन्दपुराणम्-एकाशीतिसहस्रश्लोकात्मकमिदं महापुराणं विद्यते। स्कन्दो देवसेनानी शिवात्मज: तमधिकृत्येदं पुराणं प्रवर्तते। अत्र सर्वे भूगोलादयो जीवनोपयोगिनो विषया: निरूपिता: सन्ति। अस्य पुराणस्य विषयेऽपि-'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचिद्'[14] इति वक्तुं शक्यते।

अष्टादशभेदैर्विभक्तेषु पुराणेषु श्रीमता व्यासेन विष्णुपुराणे पुराणानां नामक्रमश्चैवंविध: प्रोक्तोऽस्ति-

**ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा।**
**तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम्॥**
**आग्नेयमष्टमं चैव भविष्यन्नवमं तथा।**

**दशमं ब्रह्मवैवर्तलिङ्गमेकादशं स्मृतम्।।**
**वाराहं द्वादशं चैव स्कन्दं चात्र त्रयोदशम्।**
**चतुर्दशं वामनकं कौर्म पञ्चदशं तथा।।**
**मात्स्यं च गारुडं चैव ब्रह्माण्डश्च ततः परम्।**
**महापुराणान्येतानि ह्यष्टादशमहामुने[15]।।**

संस्कृतवाङ्मये अष्टादशसंख्या महत्वपूर्णा महती व्यापिका गौरवशालिनी चाभिमताऽस्ति। अतो भगवता व्यासेन स्वकीयानां कृतीनां सम्बन्धो येन केनचिद्रूपेणाष्टादशसंख्यया सह कृतोऽस्ति। यथा 18 पुराणानि, 18 उपपुराणानि, 18 औपपुराणानि, 18 स्मृतयो महाभारतस्य मुख्यानि पर्वाणि गीतायाश्चाष्टादशाध्यायाः श्रीमद् भागवतस्य श्लोका अपि 18 सहस्राणि सन्ति।

सत्त्वरजस्तमो गुणाः। गुणाधारेणापि पुराणानां विभाजनं दृश्यते। पुराणेषु सात्विकपुराणानि तु-

**वैष्णवं नारदीयं च तथा भागवतं शुभम्।**
**गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने।।**
**सात्विकानि पुराणानि विज्ञेयानि शुभानि वै।।[16]**

राजसपुराणानि यथा-

**ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च।**
**भविष्यं वामनं ब्रह्मं राजसानि निबोधत।।**

तामसपुराणानि-

**मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कन्दं तथैव च।**
**आग्नेयं च षडेतानि तामसानि निबोधत।।[17]**

## सन्दर्भग्रन्थसूचिः


1. पुराणविमर्श, आचार्य बलदेव उपाध्याय, चौखम्भा विद्याभवन, वाराणसी, 1978
2. बृहदारण्यक, सुरेश्वरा आचार्य आनन्दाश्रम ग्रन्थावली, 16, पूना 1937
3. धर्मशास्त्र का इतिहास, पाण्डुरंग वामनकाणे, उत्तर प्रदेश हिन्दी संस्थान, लखनऊ, 1950
4. वाचस्पत्यम्, तारानाथ तर्कवाचस्पति, चौखम्भा संस्कृत सीरीज, वाराणसी, 1966-70
5. विष्णुपुराण, गीताप्रेस गोरखपुर, वि0सं0 1999
6. मनुस्मृतिः, पण्डित रामेश्वरभट्टः, निर्णयसागरयन्त्रालयः मुम्बई, 1929
7. महाभारत, गीताप्रेस गोरखपुर
8. वेदभाष्य भूमिका संग्रह, आचार्य बलदेव उपाध्याय, चौखम्भा संस्कृत संस्थान, वाराणसी, वि.सं.2042
9. वैदिक वाङ्मय का इतिहास, भगवददत्त, श्रीरामलाल कपूर ट्रस्ट, अमृतसर,
10. वैदिक साहित्य और संस्कृति, बलदेव उपाध्याय, वाराणसी, 1958
11. श्रीमद्भगवद्गीता, महन्त हरिहर कृपाल द्विवेदी, कलकत्ता


## पादटिप्पणी

1. अथर्ववेद-11/1/24
2. पद्मपुराणम्-1/2/52
3. नारदपुराणे-उत्तर. 24/17
4. विष्णुपुराणम्-3/10
5. देवीभागवते प्र.स्क.द्वितीयाध्याये।
6. शतपथब्राह्मणम् -1/6/2/8, महाभारतम् -14/25/10
7. पुराणविद्यायां पृ.सं.- 134, म.म.पं. गिरिधरशर्मचतुर्वेदः राज.सं.अ. जयपुरम्, सं. 2051
8. कूर्मपुराणम् - प्रथमोऽध्यायः-1/23
9. श्वेताश्वेतरोपनिषद्-4/6, मुण्डकोपनिषद् - 3/1/1
10. मनुस्मृतिः-1/10
11. छान्दोग्योपनिषद् - 3/4/1
12. बृहदारण्यकोपनिषद् - 4/4/19
13. पुरुषसूक्तम् - मन्त्र संख्या - 1
14. महाभारतम् - 1/62/53
15. विष्णुपुराणे।
16. पद्मपुराणम् - 6/236/19-20
17. पाञ्चरात्रागम - 1/4/34

ISSN 2348-7828

# भार्गवराघवीये महाकविरामभद्राचार्यस्य स्वाभिनवभाष्यनैपुण्यम्

डॉ.लक्ष्मीकान्त षडङ्गी

**उपक्रमः -**

**सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।**
**स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ।।**[1]

इत्युक्त्यनुसारं सूत्रानुसारिभिः वाक्यैः सूत्रार्थः यत्र वर्ण्यते यथा सन्दर्भं स्वपदानि च यत्र वर्ण्यते तं ग्रन्थं विद्वज्जनाः भाष्यं नाम्ना व्यपदिशन्ति ।'भाष् प्रवचने इति धातोः 'ण्यत्' इति प्रत्यये 'भाष्यम्' इति पदस्योत्पत्तिर्जायते । भारतीयसाहित्येतिहासे यद्यपि सर्वशास्त्रोपकारकः यथावदर्थबोधकश्च स हि महाभाष्यनाम्ना तत्र भवता भगवता पतञ्जलिना ग्रथितः यद्यप्ययं ग्रन्थः अष्टाध्यायाः शब्दानुशासनत्वेन परिपूर्णतासंपादकः अद्य विश्वस्मिन् विश्वे महतीं प्रतिष्ठां धत्ते, तथापि भाष्यपरम्परेयं तु सर्वेषु शास्त्रेषु महदुपकारकत्वेन प्राचीनकालादेव प्रचलिताऽस्ति । यतो हि संस्कृतवाङ्मये बहूनि महाकाव्यानि दृश्यन्ते । तत्रापि काव्येषु काव्यान्तरेषु आकरग्रन्थेषु वा काठिन्यं संलक्ष्यन्ते, यदि टीकाकाराः भाष्यकाराः वा सागरमन्थनमिव काव्यसागरस्यानेकधा अनुध्यानं कुर्वन्ति, तर्हि प्रत्येकवारं नवं नवमुत्पादनमाविष्कुर्वन्ति ।यथा स एव वृक्षः मधुमासे संप्राप्ते सर्वथैव नवत्वमायाति तथा स एवार्थो नूतनतया विलसति भङ्ग्यन्तरसमाश्रयेण। ध्वनिकारेण यथार्थेणोक्तम्-

**दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् ।**
**सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ।।**[2]

टीकाकारेणाभिनवगुप्तपादेनापि अस्यानुरूपमुक्तम् - 'सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते।'[3]

**कविपरिचयः-**

इदानीमेव सङ्कलय्य प्रकाशिते स्वोपज्ञे विंशशताब्दीसंस्कृतग्रन्थसूचीपत्रे (Catalogue of the 20th Century Sanskrit Creative Works) मया संस्कृतमहाकाव्यानां 1901तः 2000 तमावधि प्रणीतानां काऽपि बृहती विस्मयकारिणी च सूची सम्प्रस्तुता सहृदयानां परितोषाय। तत्र विंशशताब्द्याश्चरममहाकाव्य-कृतिर्वर्तते महाकविश्रीरामभद्राचार्यप्रणीता श्रीभार्गवराघवीयाभिधाना । बाल्यादन्धोऽपि कविरयं स्वीयनैसर्गिकाद्भुतप्रतिभया सर्वमेव शास्त्रजातं श्रावं श्रावं कण्ठस्थं कृत्वा सर्वत्र लोकसमक्षं शास्त्ररहस्यव्याख्याने तत्परो दृश्यते । महाकविः वैयाकरणश्चासौ श्रीरामभद्राचार्यः स्वाभिनवकौशलेन प्रस्थानत्रयी-श्रीरामचरितमानसाष्टाध्यायी-श्रीभार्गवराघवीयादीनां नैकेषां ग्रन्थानां प्रणेता प्राबन्धिकश्चासीत् । तद्रचितभाष्येषु श्रीभार्गवराघवीयमहाकाव्यस्य कृपाभाष्यम् अन्यत्तमम्। एकविंशसर्गात्मकस्यास्य महाकाव्यस्य भाष्यमिदं महाकविरामभद्राचार्यस्य स्वाभिनवभाष्यनैपुण्यं महत् प्रकाशयतीति तदीयग्रन्थान्वेषणेन ज्ञायते। अत्रैव महाकविः रामभद्राचार्यः स्ववैशिष्ट्यं बहुधा प्रतिपादयितुं कामः नैकेषु स्थानेषु स्वाभिनवकाव्यकौशलं व्यवहरति ।एतस्य महाकाव्यस्य भावः कदाचित् अन्यथा केनचित् व्याख्यायेत इति धिया महाकविः स्वयमेव एतस्य कृपा हिन्दी टीकामपि स्वयं कृतवान् ।एतदर्थमुच्यते महाकविना -

**स्वनिर्मिते भार्गवराघवीये सामान्यलोकस्य सुखावबुद्ध्यै।**
**व्याख्यां कृपायां कविरामभद्राचार्यस्तु हिन्द्यां कुतुकात्तनोति।।**[4]

**काव्ये कवेः स्वाभिनवभाष्यनैपुण्यम् -**

महाकविरामभद्राचार्यस्य स्वाभिनवकाव्यकौशलेषु ज्योतिष-शास्त्रीयसंख्यागणनारीतिः, एकाक्षरीश्लोकचरनारीतिः, चतुरर्थकश्लोक-प्रयोगनैपुण्यं स्वाभाविकश्लोकरचनारीतिश्च प्रमुखाः भवन्ति ।महाकवेः स्वरचिते कृपाभाष्येऽस्मिन् स्वाभिनवकाव्यकौशलस्य निदर्शनं नैपुण्यञ्च उदाहरणमुखेन दिङ्मात्रमत्र प्रस्तुयते ।

**कवेः स्वरूपं भट्टनौतेन प्रतिपादयनाह -**

**प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।**
**तदनुप्राणनो जीवेद् वर्णनानिपुणः कविः ।।**[5]

अर्थात् नवनवोन्मेषशालिन्या प्रतिभया अनुप्राणितः सजीववर्णनायां यो हि निपुणः स एव कविः।लोचनकारस्य मते अपूर्ववस्तुनिर्माणकुशल एव जनः कविः ।निरुक्ते मेधाविनामसु पठितः कविशब्दः क्रान्तदर्शी भवति ।न तु हठादाकृष्टानां कतिपयपदानां रचयिता कविः ।अस्मादुच्यते प्रचलितवृत्तस्य संस्कृतभाषया परिणमनमात्रमेव न भवति महाकाव्यम्। महाकाव्यं भवति ध्वनिवक्रोक्तिवैशिष्ट्यमण्डितं नूतनाभिप्रायप्रचुर-पदगुम्फसंबलितं रसच्छन्दोऽलङ्काररीतिवृत्त्यादिप्रयोगरुचिरं किमपि विलक्षणमेव सारस्वतं कविकर्म ।इत्येवं वचनं मनसि निधाय प्रस्तुतोऽयं महकाविः स्वकीयं काव्यमपि कालिदास-भारवि-माघादिनामिव विलक्षणरीत्या वर्णयितुं कामः विविधेषु स्थलेषु स्वाभिनवकाव्यकौशलं प्रतिपादयति।

**सर्गसंख्याप्रतिपादनरीतिः -**

तस्याभिनवकाव्यकौशलेषु अन्यत्तमोऽस्ति सर्गसंख्याप्रति-पादनरीतिः। यतो हि सर्गाणामन्तिमे श्लोके सर्गसंख्याप्रतिपादने महाकविः 'पञ्चमः.'एकादशः''द्वादशः' चेत्यादिषु स्थलेषु साक्षादङ्कान् न प्रयुज्य क्रमानुसारं वाणः शिवः अर्कश्चेतिपदान् व्यवहरति ।तद्यथा पञ्चमसर्गस्यान्तिमे श्लोके -

**इत्थं शुभे भार्गवराघवीये भव्ये महाकव्य उदारवृत्ते ।**
**बाणोऽस्तु सर्गः कवि रामभद्राचार्यप्रणीते जगतां श्रियै नः।।**[6]

श्लोकेऽस्मिन् पञ्चमसर्गस्यान्तिमं प्रकाशयितुं कामः महकविः 'बाण' इति शब्दं तृतीये पादे व्यवहरति ।अस्मात् बाण इति शब्देन

पञ्चबाणस्य प्रसिद्धित्वात् पञ्चमसर्गन्तस्य संसूचनं जातम् । एवमेकादशसर्गस्यान्तिमे श्लोकेऽपि एकादश इति पदमवबोधयितुं महाकविना 'शिव' इति शब्दस्य व्यवहारं कृतम् । अनेन शिव इति पदेन एकादशरुद्रस्य प्रसिद्धित्वात् एकादशसर्गस्यावबोध: जायते । एवमपि द्वादशसर्गस्यान्तिमे पद्ये 'अर्क' इति पदस्य व्यवहारेण द्वादशादित्यस्य प्रसिद्धित्वात् द्वादशसर्गस्यावबोध: 'सर्गाऽर्कसंज्ञ:' इत्यंशात् ज्ञायते । न केवलमेतत् अपितु महाकाव्यस्यास्य त्रयोदशसर्गादारभ्य एकविंशसर्गं यावत् महाकविरसौ सर्गसंख्याप्रतिपादने विलक्षणरीत्या ज्योतिषीं गणितविद्यामाश्रयति । तेष्वेकस्योदाहरणं यथैव एकविंशसर्गस्यान्तिमे श्लोके –

**इत्थं शुभे भार्गवराघवीये भव्ये महाकव्य उदारवृत्ते ।**
**ब्रह्माक्षिसर्ग: कवि रामभद्राचार्यप्रणीतेऽस्तु सतां श्रियै न: ।।**[7]

श्लोकेऽस्मिन् महाकवि: एकविंशसर्गान्तं संसूचयितुं काम: तृतीये पादे 'ब्रह्माक्षिसर्ग:' इति पदं प्रतिपादयति । अस्मात् 'ब्रह्माक्षिसर्ग:' इत्यंशात् 'ब्रह्म' इति पदेन ब्रह्मण: ऐक्यत्वं प्रसिद्धित्वात् एक (1) इति संख्याया: पुनश्चाक्षि इति पदेन अक्षिद्वयस्य प्रसिद्धत्वात् द्वि: (2) इति संख्याया: बोध: भवति । एवमेतस्य संख्याद्वयस्य एकत्रीकरणेन यद्यपि द्वादश इति संख्यामवबुध्यते, परन्तु 'अङ्कानां वामतो गति:' इति ज्योतिषशास्त्रस्य गाणितिकधारानुसारेण द्वादश इति संख्याया: वामत: परिगणनेन एकविंशति इति संख्याया: बोध: जायते । अस्मात् 'ब्रह्माक्षिसर्ग:' इत्यस्मादंशात् एकविंशसर्गस्य बोध: जायते न तु द्वादशसर्गस्य इति । एवमनुरूपभावेन त्रयोदशसर्गस्यान्तिमे श्लोके 'लोकेशसर्ग:' इत्यंशात् लोकपदेन त्रिलोकस्यार्थात् त्रयस्य ईशपदेन परमेश्वरस्यार्थात् एकस्य च एवं संख्याद्वयस्यास्य सम्मिश्रणेन यद्यपि एकत्रिंशत् इति संख्या आगच्छति तथापि महाकवे: ज्योतिषशास्त्रीयगणित–विद्यारीत्यनुसरणेन त्रयोदश इति सर्गस्यावबोध: जायते । चतुर्दशसर्गेऽपि श्रुतीश: इति पदेन श्रुति इत्यनेन चतु: ईश इत्यनेन एकस्य च सम्मिश्रणेन एकचत्वारिंशत् इति जायते, परन्तु उपर्युक्तरीत्या समीक्षणेन चतुर्दशसर्गस्यावबोध: भवति । एवं पञ्चदशसर्गस्यान्तिमे 'बाणैकसर्ग:' इत्यनेन एकपञ्चाशत् इति स्थले पञ्चदशस्य ज्ञानं जायते । षोडशे सर्गेऽपि 'सर्ग: कलाख्य:' इत्यंशात् (षोडशकलाया:) प्रसिद्धित्वात् षोडशसर्गस्यावबोध जायते । एवं क्रमेण सप्तदशसर्गस्यान्तिमे श्लोके दशसप्तमोऽयम् इत्यस्य अष्टादशसर्गस्यान्तिमे 'सर्गाऽष्टकेश:' इत्यस्य ऊनविंशतिसर्गे अस्तूनविंश: इत्यस्य विंशसर्गे विंश इत्यस्य च व्यवहार: कृत: महाकविना ।

**एकाक्षरीश्लोकप्रयोगरीति:–**

महाकविरामभद्रचार्यस्य कृपाटीकायाम् एकाक्षरीश्लोकप्रयोगरीते: वैलक्षण्यं प्रदर्शितम् । संस्कृतसाहित्ये इत: पूर्वं किरातार्जुनीये भारविना एक एव एकाक्षरी श्लोक: प्रयुक्त:, तत्रापि भारवि: असफल: एवाभूत् । यतो हि तत्र एकाक्षरीश्लोकान्ते तकारस्य प्रयोगोऽभूत् । तद्यथा –

**ननो न नुन्नो नुन्नो नो नाना नाना ना ना ननु ।**
**नुन्नेऽनुन्नो ननुन्नेनो नानेना नन्ननुन्नत् ।।**[8]

परन्तु भार्गवराघवीये त्रय: श्लोका: प्रसङ्गसापेक्षा: रसपोषिताश्च प्रयुक्ता: । तेषु आद्यस्योदाहरणं यथा –

**क: कौ के केककेकाक: काककाकाकक: कक: ।**
**काक: काक: कक: काक: कुकाक: काकक: कुक: ।।**[9]

अस्यैव श्लोकस्यान्वय: यथा – केककेकाक: काककाकाकक: कक: काक: काक: कक: काक: कुकाक: काकक: कुक: क: कौ के । इत्यन्वय: ।

श्लोकार्थ: – के ब्रह्मणि ब्रह्माण्डे वा कं सुखं यस्मात्स केक: संज्ञात्वात्सप्तम्या अलुक्स एव केक: ब्रह्माण्डसुखदाता केकाक: केका मयूरवाणी तस्यां कं सुखं यस्य स केकाक: ब्रह्माण्डसुखदातापि मयूरवाण्यां सुखमनुभवतीति भाव: । स एव भगवान् रामो बाल्यकाले काककाकाकक: काकस्य भुशुण्डिन: काका वाणी तस्या यत्कं सुखं तदेव कम् आनन्दो यस्य स काककाकाकक: भुशुण्डिनो वाणीसुखमेवानन्दं मन्यत इति भाव: । स एव कक: केषु लोकेषु कं सुखं यस्मात्तादृश: 'जो आनन्द सिन्धु सुखरासी' (श्रीरामचरितमानसे 1.197.5) इत्यादिषु स्पष्टम् । स च काक: कं सुखम् अकं दु:खं वनवासात्मकं यस्य स काक: अर्थाद्वनवासदु:खमपि सुखं मन्यते । एवंविध: काक: काक: प्रशस्त: काकभुशुण्डिरस्त्यस्य स काक: प्रशस्तकाकवानिति भाव: । कक: क: ब्रह्मा तस्यापि कं सुखं यस्मात्स च काक: कायति भक्तानाह्वयति स काक: काकपक्षधरो वा भगवान् राम: । कु: पृथ्वी तस्यां कं सुखं जन्मभूमितया यस्या: सा कुका सीता तस्यां कम् आनन्दो यस्य स कुकाक: सीतारामो भगवान् । काकक: काकं भुशुण्डिनं कायति । कुक: कु: भोगं कं मोक्षसुखं यस्मात् एवंविध: क: परब्रह्म परमात्मा भगवान् श्रीराम: कौ पृथिव्यां के साकेतलोकेऽयोध्यायां विराजते । इति श्लोकार्थ: ।

**द्वितीयस्योदाहरणं यथा –**

**काककाक ककाकाक कुकाकाक ककाक क ।**
**कुककाकाक काकाक कौकाकाक कुकाकक ।।**[10]

अस्यैव श्लोकस्यान्वय: यथा – काककाक कक आक आक कुकाक आक कक क आक कुकक आक आक काक आक कौक आक कुकाकक आक । इत्यन्वय:।

श्लोकार्थ: – काक: जयन्तस्तस्य के शिरसि अकं दु:खं दण्डदानेन यस्मात्स काककाक: जयन्तदण्डदाता तत्सम्बुद्धौ के काककाक जयन्तनिग्रहकारिन् प्रभो । कक आक आक इति पदच्छेद: । केषु जीवेषु कम् आनन्दो यस्मात्स कक: तत्सम्बुद्धौ हे कक जीवनानन्ददायिन् । आक आक आगच्छ आगच्छ । कुकाकाक कुकाक: सीतासुखदाता (पश्यन्तु 20–91) तत्सम्बुद्धौ हे कुकाक । आक आगच्छ । कक ब्रह्माण्डसुखहेतो (पश्यन्तु 20–92) । क परमात्मन् । आक आगच्छ । कौ पृथिव्यां भोगे कम् आनन्दो येषां ते कुका: तान्

ISSN 2348-7828

कायति अभिमुखीकरोति इति कुकक: तत्सम्बुद्धौ हे कुकक । आक आक आगच्छ आगच्छ । काद्याच्छाक क: ब्रह्मा अ: विष्णुस्तयो: कम् आनन्दो यस्मात्स काक: तत्सम्बुद्धौ काक । आक आगच्छ । कौकाकाक कौ पृथिव्यां कम् आनन्द: यस्मात्स कौक: तत्सम्बुद्धौ के कौक । आक आगच्छ । कुत्सितं काकं जयन्तं परित्राणाय कायति अथवा कुकाकेन जयन्तेन कीयते सम्बोध्यते रक्ष रक्षेति स: कुकाकक: तत्सम्बुद्धौ हे कुकाकक । आक आगच्छ । इति श्लोकार्थ: । विशेष: – आङ्उपसर्गपूर्वस्य गमनार्थकस्य 'अक'धातोर्लोटि लकारे मध्यमपुरुष एकवचन 'आक' इति रूपम् ।

**तृतीयस्योदाहरणं यथा –**

**लोलालालीललालोल लीलालालाललालल ।**
**लेलेलेल ललालील लाल लौलील लालल ।।**[11]

अस्यैव श्लोकस्यान्वय: यथा – लोलालालीललालोल लीलालालाललालल लेलेलेल ललालील लाल लोलील लालल इत्यन्वय: । श्लोकार्थ: – लोलाश्चञ्चला: अला: अलका: तेषाम् आलि: समूह: तै: लल: विलसित: स च अलोल: अचञ्चल: इति लोलालालीललालोल: तत्सम्बुद्धौ लोलालालीललालोल । अलाम् अक्षणाणां समूह: आलं तं लाति वक्ति इति आललं मुखं लीलायां शिशुकेलौ लालया तृष्णाजलेन ललं क्रीडावत् आललं मुखं यस्य स: लीलालालाललालल: तत्सम्बुद्धौ लीलालालाललालल । पुन: लेला शिशुक्रीडा धनुर्भङ्गरूप तथा इलाया: पृथिव्या: ई लक्ष्मीं सीतारूपां लाति स्वीकरोति स लेलेलेल: सीतापति: तत्सम्बुद्धौ लेलेलेल । स एव ललानां विलासिनाम् अलीं लुनाति इति ललालील: तत्सम्बुद्धौ हे ललालील । हे लाल राघव । लोलीं जीवचञ्चलतां लुनाति नाशयति लोलील: तत्सम्बुद्धौ हे लोलील । लालल अतिशयेन विलस इति श्लोकार्थ: ।

अत्र भगवता परशुरामेण त्रिभि: एकाक्षरीश्लोकै: भगवन्तं श्रीरामं स्तौति । अत्र श्रीभार्गवराघवीयस्य रचयितु: श्रीरामभद्राचार्यस्य भगवन्निष्ठा शास्त्रगतपाण्डित्यं काव्यकलाया: लोकोत्तरचातुर्यं च परिलक्ष्यते । महाकवि: कालिदास: श्रीहर्ष: तथा च माघस्तु एतदर्थं प्रयतितवन्त: एवं नहि । अत्र अतिकठिनाम् एकाक्षरी श्लोकरचनां संविधाय महाकवि: भार्गवराघवीयं काव्येषु शिखरारूढं करोति । अत: यथार्थेण केनचित् समीक्षकेन उच्यते –

**नैषधे च किराते च माघे काव्यगुणा: यथा ।**
**ततोऽधिकास्तु विद्यन्ते काव्ये भार्गवराघवे ।।**[12]

**चतुरर्थकपद्यरचनारीति:-**

संस्कृतवाङ्मये इत: पूर्वं महाकविश्रीहर्ष: द्व्यर्थकपद्यरचनां त्र्यर्थकपद्यरचनां विधाय काव्यरचनापरम्परायाम् एकं नवीनं मानकं स्थापितवान् । परन्तु महाकविरामभद्राचार्य: चतुरर्थकां रचनाधर्मितां पद्यं प्रयुज्य स्वकीयाम् अप्रतिमां प्रतिभां प्रादर्शयत् । तद्यथा–

**ललाममाधुर्यसुधाभिरामकं ललाममाधुर्यसुधाभिरामकम् ।**
**ललाममाधुर्यसुधाभिरामकं ललाममाधुर्यसुधाभिरामकम् ।।**[13]

उपर्युक्तश्लोके एकस्या एव पंक्ते: चतुर्वारम् आवृत्ति: कृता किन्तु तासाम् अर्थ: पृथक् । श्लोकस्यास्य प्रथमपंक्ते: अयमेवाशय: यत् य: त्रिपुण्ड्रमाधुर्या युक्त: तथा यस्य अभीष्टदेव: श्रीराम: आसीत् । द्वितीयपंक्ते: तु अयमेवाशय: यत् य: बालचन्द्ररूपाभूषणस्य शोभां धारयति तथा अस्योत्सवे रमणीय: आसीत् । एवं तृतीयपंक्ते: आशयस्तु य: खलु प्रधानताया: शक्त्या धर्मविचक्षणस्य रमणीयतां सुरक्षितुं यतते । एवं चतुर्थपंक्ते: आशयस्तावत् य: धर्मस्वरूपस्य वृषध्वजस्य सौन्दर्येण मधुरताया: तेजसा श्रीरामचन्द्रस्य शरणागत्या च संयुक्त: आसीत् इति । अनेन न केवलं कवि: आत्मन: प्रातिभकौशलं प्रकटयति अपितु स्वाभिनवकाव्यकौशलेन बृहत्त्रयीकारान्नपि अतिक्रामति ।

**स्वाभिनवश्लोकरचनारीति:-**

भार्गवराघवीये महाकवे अभिनवकौशलस्यापरा या एका विशेषता वर्त्तते स्वाभाविकश्लोकरचना-सम्बन्धिनी, यद्यथा –

**त्रिजगदवन हतहरिजननिधुवन निजवनरुचिजितशतशतविधुवन ।**
**तरुवरविभवविनतसुरवरवन जयति विरतिघन इव रघुवरवन ।।**
**मदनमथनसुखसदन विधुवदन गदितविमलवरविरुद कलिकदन ।**
**शमदमनियममहित मुनिजनधन लससि विबुधमणिरिव हरिपरिजिन ।।**
**जनकदुहितरमहिपमपि सुखयसि सुखमुखमपि शुचिसुमु सुमुखयसि ।**
**विबुधविपिनमपि हरिसख सखयसि यतिजनमखमपि सुमख सुमखयसि ।।**
**मनसिजजवमपि सुजव विफलयसि खलकुलरवमपि सुरव विकलयसि ।**
**कलिमलबलमपि सबलमबलयसि गुणिगणकुलमपि कुशल कुशलयसि ।।**
**विटपनिविडनिगडितमनसिजजव शिखरिशकलशकलित-भवपरिभव ।**
**मुनिजनभजन महितखगकलरव रघुवरवन मयि सकरुण इह भव ।।**
**रघुपतिगृहिणीनयनसुखनवदल हरिपदजलजरसितसितज-लकल ।**
**सुरनरमुनिगणगुणित सुजनबल विफलय मम भवरुजमपि फलफल ।।**
**सुकृतसुभगसुरवतरुफल जय फणिपतिरघुपतिचरणविमल जय ।**
**कलिमलखलकुलकदनकुशल जय गिरिधर सुखवन नयन-सुफल जय ।।**[14]

उपर्युक्तश्लोकानामपरमेकं महत्त्वपूर्णं वैशिष्ट्यमस्ति ह्रस्वमात्रिकम् । महाकविभारवि-माघ-श्रीहर्ष-कालिदासादय: विख्याता: महाकवय:

ह्रस्वमात्रिकश्लोकानां प्रयोगं काव्येषु नैव कुर्वन्ति । परन्तु महाकविरसौ प्रस्तुतमहाकाव्यस्य सप्तमसर्गस्य एकादशश्लोकादारभ्य सप्तदशं श्लोकं यावत् ह्रस्वमात्रिकच्छन्दसः सुव्यवहारं करोति[15] । एवं श्रीभार्गवराघवीयस्याद्यन्तामवलोकनेन प्रतीयते यत् स्वामीरामभद्राचार्यः अन्येभ्यः कविवरेभ्योऽप्यधिकं काव्यशास्त्रीयव्याकरणस्त्रीयमानदण्डं सुरक्षितुं कृतसंकल्पः ।

**स्वाभिनवव्याख्याननैपुण्यम्-**

न केवलमसौ महाकविः देशभक्तोऽपि, साम्प्रातिकसमाजे भारतवर्षस्य धर्मविहीनस्वरूपमवलोक्य दुःखाभिभूतः सन् देशस्यास्य वास्तविकादर्शरामराज्य-स्वरूपमवलोकयितुमसौ चेष्टते । यतो हि तस्य प्रवचनस्य मूलवक्तव्यमस्ति रामो हि राष्ट्र, राष्ट्रो हि रामः । महाकाव्यस्यास्य दशमे सर्गे 'राम' इति शब्दस्य स्वरूप प्रतिपादयन् कविः कथयति –

**रामः स्वरूपं हि मनुष्यताया राष्ट्रस्य वै मङ्गलनामधेयम् । स एव हत्वा दशकण्ठमाजौ लोकान्समस्तानसुखिनो विदध्यात् ।।[16]**

अर्थात् राम इति शब्दस्तु मनुष्यतायाः द्योतकोऽस्ति । रामशब्दस्य 'रा' इत्यनेन राष्ट्रं 'म' इत्यनेन मङ्गलनामधेयं चावबुध्यते। अदूरे अतीते 'श्रीरामजन्मभूमि' इति बहुचर्चिते विवादे भारतवर्षस्य उच्चतमे न्यायालये महाकविश्रीरामभद्राचार्य स्ववैदिकयुक्तिभिः अयोध्यानगरी एवं श्रीरामचन्द्रस्य साक्षात् जन्मभूमि इति प्रमाणयन् भारतवर्षस्य गौरवोज्ज्वलमितिहासं संरचयामास । तन्मतानुसारं भगवान् भारतवर्षस्य सूक्ष्मरूपो भवति । भारतवर्षमिदं भगवतः स्वरूपं भवति । अतः समग्रमिदं जगत् तु भारतवर्षस्य साम्यं न भवति । एवं स्वानुभूतिं महाकविः स्वरचिते चन्द्रशेखरचरितम् इति ग्रन्थे सुरीत्या प्रकाशयति तद्यथा –

**दृष्टं विधात्रा न बिभर्ति साम्यम्, जगत्समग्रं किल भारतस्य । तद् भारतान्न्युनमनेन चक्रे नेमाक्षरं नूनममुष्य नाम ।।[17]**

अर्थात् यदैव विधाता दृष्टवान्, यत् समग्रमिदं जगत् भारतस्य साम्यं न भवति, तदा भारतात् अर्धाक्षरं न्यूनं संसारस्य नाम जगत् कृतवान् ।

**उपसंहारः-**

एवं चतुरस्रं परिलक्ष्यते श्रीमद्रामभद्रचार्यपादानां सारस्वतं क्षेत्रम्। क्व वेदवदाङ्गानां रहस्यमयं स्वरूपम्। क्व पुनर्विविधशास्त्राणां नारिकेलकठिनकलेवराश्चूडान्तसिद्धान्ताः। क्व चाप्यबोधविकलग्राह्या भक्तिरसरसायनमाधुरी श्रीरामकृष्णचरितनिस्यन्दिनी। हन्त। सर्वत्राप्यकुण्ठा गतिर्भार्गवराघवीय-काराणाम्। रामकथप्रसङ्गान् प्रस्फुटीकुर्वन् कविर्यथा श्रोतृन् साधारणीकरणापहृत-कथेतरसंसृतिभावान् रोदयति तथैव तदधिकं स्वयमपि रोदतीति चित्रम्। सर्वाण्यपि शास्त्राणि श्रीरामभद्राचार्यवशंवदानीत्यत्र न काऽपि संशीतिः। अकिञ्चित्करकिङ्करकल्पाः शास्त्रपंक्तयः स्मरणसमकालमेव तद्बुद्धौ समवभासन्ते। एवं हि सर्वविद्यामयं प्रतिभाति श्रीमत्तुलसीपीठाधीश्वर-व्यक्तित्वम्। हिन्दीकाव्यप्रचलिताः सपादिकाः (सवैया इति) घनाक्षरिकाश्च (घनाक्षरीति) यथायथं प्रयुज्य प्रस्तोति यथा छन्दोविचितिप्रागल्भ्यं कविस्तथैव रामकथाया नूतनाभिप्रायानपि समुपन्यस्यति। मन्ये एभिरेवाभिप्रायैः प्रकरणवक्रतासौख्यं संसृजती भार्गवराघवीया रामकथा सहृदयानां मनांस्यावर्जयिष्यति। एवमन्यत्रापि स्वरचिते भार्गवराघवीये रसरीत्यलङ्कारच्छन्दौचित्यादिभिः महाकवेः भाष्यगतनैपुण्ये स्वाभिनवप्रयासः यथार्थेण सहृदयाह्लादः भवति इति शम् ।

## पादटीका

1. पराशरपुराणे – पृ. 35
2. ध्वन्यालोके – 4.4, पृ. 256
3. लोचनटीकायाम् – 1.1, पृ. 1
4. भार्गवराघवीये, प्रथमसर्गे – पृ. 2
5. काव्यकौतुकम् – पृ. 21
6. भार्गवराघवीये – 5.101, पृ. 118
7. भार्गवराघवीये – 21.101, पृ. 511
8. किरातार्जुनीये – 15.14, पृ. 55
9. भार्गवराघवीये – 20.92, पृ. 481
10. भार्गवराघवीये – 20.93, पृ. 482
11. भार्गवराघवीये – 20.94, पृ. 484
12. भार्गवराघवीये – प्रकाशकीये
13. भार्गवराघवीये – 3.26, पृ. 56
14. भार्गवराघवीये – 7.17, पृ. 145
15. भार्गवराघवीये – 7(11.17), पृ. 143-145
16. भार्गवराघवीये – 10.23, पृ. 213
17. मेरी स्वर्णयात्रा – पृ. 85

## सहायकग्रन्थसूचीः


1. अलङ्कारशास्त्रस्येतिहासः – केतकीनायकः, सांविदीप्रकाशनम्, पुरी, ओडिशा
2. किरातार्जुनीयम् – यदुपतित्रिपाठी, वि.एन्.पब्लिशर्स, कोलकाता।
3. ध्वन्यालोकः – सुबोधचन्द्र सेनगुप्तः, संस्कृतबुक्डिपो, कोलकाता ।
4. मेरी स्वर्णयात्रा – रामभद्राचार्य विकलाङ्ग विश्वविद्यालयः, उत्तरप्रदेशः ।
5. श्रीभार्गवराघवीयम् – रामभद्राचार्यः, रामभद्राचार्य-विकालङ्ग-विश्वविद्यालयः, उत्तरप्रदेशः
6. श्रीभार्गवीयराघवीयम् मीमांसा – वागीशदिनकरः, देवभारतीप्रकाशनम्, दिल्ली ।
7. समानुभूतिः – रामभद्राचार्य विकलाङ्ग विश्वविद्यालयः, उत्तरप्रदेशः ।
8. संस्कृतसाहित्यर इतिहास – हरेकृष्णशतपथी, किताबमहल, कटक, ओडिशा।
9. संस्कृतसाहित्यशास्त्रे साम्प्रतिकी धारा – प्रशान्तकुमारपण्डा, ज्ञानेन्द्रकल्याणीपब्लिशर्स, बालेश्वरः, ओडिशा ।


*संस्कृतविभागाध्यक्षः*
*योगदा-सत्सङ्ग-पालपाडा-महाविद्यालयस्य पश्चिमवङ्गस्य*